| | |
|---|---|
| पा २.३.२१ | इत्थंभूतलक्षणे तृतीया । २.२.२७ तं. कञ्चित्प्रकारं प्राप्तः इत्थंभूतः । एतेन वारवन्तीयभूतेन पशुकामो यजेत । |
| तैब्रा २.१.३.१ | इत्थं श्रपयति । ७.३.४ उदीचोऽङ्गारान् निरुह्य अधिश्रयति । |
| तैब्रा ३.९.१४.३ | इत्यददा, इत्ययजथा इत्यपचः इति ब्राह्मणो गायेत् । २.१.३१ न्यामा. |
| तैसं ५.१.२ | इत्यश्वाभिधानीम् आदत्ते । १२.३.२१ |
| षड् १.१.२६ | इत्यहे सुत्याम् आगच्छ मघवन् । ११.४.२८,२९ न्यामा. ( मघवन् ) |
| महाभारते १.१९०.१४ | इदं च तत्राद्भुतं रूपमुत्तमं, जगाद विप्रर्षिर् अतीतमानुषः । महानुभावा किल सा सुमध्यमा, बभूव कन्यैव गते गतेऽहनि ॥ १.३.७ तं. |
| तैब्रा ३.५.१०.१ | इदं द्यावापृथिवी भद्रम् अभूत् । ३.२.१९ |
| तैब्रा ३.५.१०.४,५ | इदमिदमाशास्ते–आयुराशास्ते, सुप्रजास्त्वम् आशास्ते, सजातवनस्याम् आशास्ते, उत्तरां देवयज्याम् आशास्ते, भूयो हविष्करणम् आशास्ते, दिव्यं धाम आशास्ते, विश्वं प्रियम् आशास्ते, यदनेन हविषा आशास्ते तद् अश्यात्, तद् ऋध्यात् । ३.२.१३ |
| तैब्रा ३.३.८.८ | इदं ब्रह्मणः, इदं होतुः, इदम् अध्वर्योः, इदम् अग्नीधः । ३.४.४८;१०.२.२१ |
| तैसं ३.३.११ | इन्द्राबृहस्पतियागे याज्यापुरोनुवाक्ये ॥ ३.२.१९ |
| तैसं ३.३.११; ऋ ४.४९.१ | इदं वामास्ये हविः प्रियमिन्द्राबृहस्पती । उक्थं च मदश्च शस्यते ॥ |
| तैसं ३.३.११, ऋ ४.४९.२ | अयं वां परिषिच्यते सोम इन्द्राबृहस्पती । चारुर्मदाय पीतये ॥ |
| तैसं ३.३.११, ऋ ४.४९.४ | अस्मे इन्द्राबृहस्पती रयिं धत्तं शतग्विनम् । अश्वावन्तं सहस्रिणम् ॥ |
| तैसं ३.३.११, ऋ १०.४२.११ | बृहस्पतिर् नः परिपातु पश्चादुतोत्तरस्मादधरादघायोः । |
| ऋ १.२२.१७ | इन्द्रः पुरस्तादुत मध्यतो नः सखा सखिभ्यो वरिवः कृणोतु ॥ ३.२.१९ |
| | 'इदं विष्णुर् विचक्रमे' इति यदि विष्णुर् बोध्यते ततः स्तुतिः, अथ अन्यस्मै वृत्तान्त आख्यायते ततोऽभिधानम् अथ आत्मना अवधार्यं ततो जपः । १२.४.१-२ सूत्रम्–जपाश्चाकर्मयुक्ताः, स्तुत्याशीरभिधानाश्च याजमानेषु समुच्चयः । |
| तैसं १.२.१३ | विष्णोर् उपांशुयाजे मन्त्रौ । १०.८.५३ |
| ऋ १.२२.१७ | इदं विष्णुर् विचक्रमे त्रेधा नि दधे पदम् । समूळ्हमस्य पांसुरे ॥ |
| ऋ १.१५४.२ | प्र तद् विष्णुः स्तवते वीर्येण मृगो न भीमः कुचरो गिरिष्ठाः । यस्योरुषु त्रिषु विक्रमणेष्वधिक्षियन्ति भुवनानि विश्वा ॥१२.४.१;१०.८.५३ |
| तैब्रा ३.३.७ | इध्मसंनहनं, संमार्जनं, 'जुह्वा वसुरसि' इति एवमादिभिः अञ्जनम् अभ्याश्रवणम् इति परिधिधर्माः । |
| तैब्रा ३.३.७.९ | ( तथा ) यवमतीभिर् अद्भिः प्रोक्षणम् अञ्जनं परिव्याणम् इति यूपधर्माः |
| तैसं ६.३.३ | तत्र परिधा अविरुद्धा उभयधर्माः स्युः । १२.२.२६ |
| तैब्रा ३.२.९.१४ | इध्माबर्हिरुपसादय, स्रुवं च स्रुचश्च संमृड्ढि, पत्नीं संनह्य, आज्येनोदेहि इति संप्रैषः । ३.८.२२;९.३.२० |
| ऋ १.२.४; तैसं १.४.४ | इन्दवो वाम् उशन्ति हि । २.१.३३ |
| षड् १.१.१० | इन्द्र ! आगच्छ । ११.४.२८ ( सुब्रह्मण्या ) |
| तैब्रा ३.५.१०.३ | इन्द्र इदं हविर् अजुषत । ३.२.१५-१८ न्यामा. |

मैसं १.१.१३,३७ ‘ इन्द्र ऊर्ध्वोऽध्वर ’ इति आघारम् आघारयति । ९.४.४
तैसं १.१.१२ इन्द्र … ऊर्ध्वो अध्वरो दिविस्पृश अह्रुतो यज्ञो यज्ञपतेः । इन्द्रावानृत्स्ववान् स्वाहा ॥ १.४.४ ( इन्द्रो अकृणोद् वीर्याणि समारभ्य ऊर्ध्वो … )
तां ४.७.२ इन्द्र क्रतुं प्रगाथः उत्तरस्मिन् पक्षसि । ९.२.२८/४
‘ इन्द्रक्रतुं न आभर ’ इति प्रगाथो भवति ।
साम १४५६ इन्द्र क्रतुं न आभर पिता पुत्रेभ्यो यथा ।
ऋ ७.३२.२६ शिक्षाणो अस्मिन् पुरुहूत यामनि जीवा ज्योतिरशीमहि ॥
साम १४५७ मानो अज्ञाता वृजना दुराध्यो माशिवासोऽवक्रमुः ।
ऋ ७.३२.२७ त्वया वयं प्रवतः शश्वतीर् अपोऽतिशूर तरामसि ॥ ९.२.२८/४
तैसं ३.२.५ इन्द्रपीतस्य । ३.२.२८ इन्द्रेण पीतः सोमो यस्मिन् सवने तस्य इन्द्रपीतस्य ( बहुव्रीहिसमासः ) ।
ऊह्याः इन्द्रमित्रावरुणपीतस्य ‘ इन्द्रमित्रावरुणपीतस्य ’ इत्येवम् ऊहनीयाः। ३.२.२९,३१ न्यामा.
विष्णुधर्मोत्तर- इन्द्रं वज्रहस्तम् आलिखन्ति कथयन्ति च ।
पु. २.१०४.१२ पूर्वपत्रे लिखेत् शक्रं सवज्रं सुदर्शनं च ॥ ९.१.६
तैब्रा २.८.४.१,२ इन्द्रं स्तुहि वज्रिणं सोमपृष्ठं पुरोडाशस्य जुषतां हविर्नः । हत्वाभिमातीः पृतनाः
मैसं ४.१४.१७४ सहस्वान् अथाभयं कृणुहि विश्वतो नः ॥ १०.१.२१
तैब्रा २.८.४.२ स्तुहि शूरं वज्रिणमप्रतीतं अभिमातिहनं पुरुहूतमिन्द्रम् । य एक इच्छतपति-
मैसं ४.१४.१७५ र्जनेषु तस्मा इन्द्राय हविराजुहोत ॥ १०.१.२१
तैसं १.४.१ इन्द्रवन्तो वनामहे धुक्षीमहि प्रजामिषं सा मे सत्याशीर् यज्ञस्य भूयात् । ( इति स्तोत्रफलम् ) २.१.२९
तैसं २.४.१२ इन्द्रशत्रुः । ९.४.२१ इन्द्रस्य शत्रुः शातयिता-तत्पुरुषोऽन्तोदात्तः । इन्द्रः शत्रुर् यस्य ( बहुव्रीहिः-बहुव्रीहिर् आद्युदात्तः । )
तैब्रा २.५.४.१,२ इन्द्रस्य नु वीर्याणि प्रवोचं यानि चकार प्रथमानि वज्री ।
ऋ १.३२.१ अहन् अहिम् अन्वपस्ततर्द प्रवक्षणा अभिनत् पर्वतानाम् । २.१.१३
तैसं १.७.७ इन्द्रस्य वनोऽसि वार्त्रघ्नस्त्वया अयं वृत्रं वध्यात् । इत्यादि मन्त्रैर् यजमानारोहणाय रथं सज्जीकरोति । १०.३.७४-७५ न्यामा.
षड् १.१.१३ इन्द्रस्य तौ हरी इति पूर्वपक्षापरपक्षौ । ९.१.४४/१ ( सुब्रह्मण्या )
ऋ ८.७७.४ इन्द्रः सोमस्य काणुका । १.३.३८ एकया प्रतिधापिबत् साकं सरांसि त्रिंशतम् । इन्द्रः सोमस्य काणुका ( कामुकः )
निरु १० : पाउणादि २.२८ इन्द्रः । इन्दतेः ऐश्वर्यकर्मणि । रक् । ३.२.४
तैआ १.१२ इन्द्रागच्छ, हरिव आगच्छ, मेधातिथेर् मेष, वृषणश्वस्य मेनका, गौराव-
षड् १-८-२५ स्कन्दिन्, अहल्यायै जार, कौशिकब्राह्मण, गौतमब्रुवाण । ( सुब्रह्मण्या ) ९.१.४२,४३
ऋ ३.१२.१ इन्द्राग्नी । १.२.३२ इन्द्राग्नी आगतं सुतं गीर्भिर् नमो वरेण्यम् । अस्य पातं धियेषिता ॥
तैब्रा ३.५.१०.३ इन्द्राग्नी इदं हविर् अजुषेताम् । ३.२.१५-१८ न्यामा.
तैसं ४.४.१० इन्द्राग्नी देवता । ९.४.१२ विशाखे नक्षत्रम् इन्द्राग्नी देवता ।

तैसं १.१.१४ इन्द्राग्नी नवतिं पुरो दासपत्नीर् अधूनुतम्। साकं एकेन कर्मणा॥
शुचिं नु स्तोमं नवजातमद्येन्द्राग्नी वृत्रहणा जुषेथाम् । उभा हि वां सुहवा जोहवीमि ता वाजं सद्य उशते धेष्ठा ॥ ३.२.२०; ३.३.१२

तैसं ४.२.११ इन्द्राग्नी रोचना दिवः परि वाजेषु भूषथः । तद् वां चेति प्र वीर्यम् ॥
श्नथद् वृत्रमुत सनोति वाजमिन्द्रा यो अग्नी सहुरी सपर्यात् । इरज्यन्ता वसव्यस्य भूरेः सहस्तमा सहसा वाजयन्ता ॥ ३.२.२०; ३.३.१२

वासं ६.३२ इन्द्राय त्वा वसुमते (रुद्रवते, इन्द्राय त्वा आदित्यवते, इन्द्राय त्वा अभिमातिघ्ने, श्येनाय त्वा सोमभृते) । ३.२.२९

वासं ६.३२ इन्द्राय त्वा वसुमते सोमं गृह्णामि । ३.६.३६ तं

मैसं २.२.६ इन्द्राय मरुत्वते नैवारं एकादशकपालं निर्वपेत् । ९.३.१

तैसं ५.५.११ इन्द्राय राज्ञे सूकरः । ४.३.१२

तैसं २.३.७ इन्द्राय राथन्तराय निर्वपति, इन्द्राय बार्हताय, इन्द्राय वैरूपाय, इन्द्राय वैराजाय, इन्द्राय शाक्वराय, रैवताय निर्वपति । (यद्+) ३.५.१६

भर १३.१८.१ इन्द्राय हरिवते धानाभिः, पूषण्वते करम्भेण, सरस्वतीवते परिवापेण, सूपस्था
मैसं ३.१०.६ अद्य देवो वनस्पतिर् अभवत् । ११.३.५४

तैसं २.३.२ इन्द्रियेण वा एष वीर्येण व्यृध्यते, यः सोमं वमति । ३.४.३२,३३
इन्द्रेण देवेन वृष्टम् । ११.१.३ (नित्यानुवादमात्रम्) (अनर्थकश्च नित्यानुवादमात्रम्) ।

ऋ १०.८९.१० इन्द्रो दिव इन्द्र ईशे पृथिव्या, इन्द्रोऽपां इन्द्र इत पर्वतानाम् ।
इन्द्रो वृधां इन्द्र इन् मेधिराणां इन्द्रः क्षेमे योगे हव्य इन्द्रः ॥ ९.१.७.९

तैसं ४.२.५ इन्द्रो न तस्थौ समरे पथीनाम् ।
(निवेशनः संगमनो वसूनां, विश्वा रूपाऽभि चष्टे शचीभिः ।
देव इव सविता सत्यधर्मेन्द्रो न तस्थौ समरे पथीनाम् ॥) ३.२.३,४ न्यामा

ऋ १.३२.१५ इन्द्रो यातोऽवसितस्य राजा (शमस्य च शृङ्गिणो वज्रबाहुः ।
सेदु राजा क्षयति चर्षणीनां अरान् न नेमिः परिता बभूव ॥) २.१.२४

तैसं २.१.४ इन्द्रो वृत्रं अहनत् । १.३.१३ तं

ऋ ८.१७.८ इन्द्रो वृत्राणि जिघ्नते ९.१.९ (तुविग्रीवो वपोदरः सुबाहुरन्धसे मदे ।
इन्द्रो वृत्राणि जिघ्नते ॥)

ऋ ३.३०.५ इन् महान् काशिरस्ति ९.१.९
उताभये पुरुहूत श्रवोभिर् एकोदृळ्हमवदो वृत्रहा सन् ।
इमे चिदिन्द्र रोदसी अपारे, यत् संगृभ्णा मघवन् काशिरित् ते ॥ नेदं वचनं 'इत् महान् काशिरस्ति' किं तर्हि 'यस्तव काशिः स महान्।

तैसं ३.१.४ इमं पशुं पशुपते ते अद्य बध्नाम्यग्ने सुकृतस्य मध्ये । अनुमन्यस्व सुयजा यजाम जुष्टं देवानां इदमस्तु हव्यम् ॥
प्रजापतेर् जायमानाः प्रजाः जाताश्च मा इमाः । तस्मै प्रति प्रवेदय, चिकित्वाँ अनुमन्यताम् ॥ ३.६.१८-२७ न्यामा । पशोः उपाकरणे मन्त्रौ ।

| | |
|---|---|
| तैसं ५.५.१० | इमं स्तनं ऊर्जस्वन्तं धयापां प्रप्यातमग्ने सरिरस्य मध्ये। उत्सं जुषस्व मधुमन्त-मूर्व समुद्रियं सदनमा विशस्व ॥ अग्निविमोके मन्त्रः। ११.३.१७-१९ न्याम। |
| वाराह २.२.५.७ | 'इमं स्तनं मधुमन्तं धयामि' इति अग्निविमोकं जुहोति। ११.३.१७ |
| ऋ १.९४.१ | इमं स्तोमं अर्हते जातवेदसे, रथमिव सं महेमा मनीषया। भद्रा हि नः प्रमतिरस्य संसत् अग्ने सख्ये मा रिषामा वयं तव ॥ १०.४.२३ (सूक्तभाजो देवाः।) |
| पाम १.१.१.२३ | इमानि भूयः शब्दानुशासनस्य प्रयोजनानि। १.३.२४ तं |
| तैसं ५.१.२ | 'इमाम् अगृभ्णन् रशनां ऋतस्य' इति अश्वाभिधानीं आदत्ते। ३.१.१४; १२.३.२० |
| ला २.६.२ | इमां स्पृष्ट्वा उद्गायेत। (औदुम्बरीं) इमां हि औदुम्बरीं विश्वा भूतानि उपजीवन्ति। १.४.२४ |
| ऋ ३.३०.५ | इमे चिदिन्द्र रोदसी अपारे यत् संगृभ्णा मघवन् काशिरित् ते। ९.१.६,९ इमे द्यावापृथिव्यौ दूरे अपारे यत् संगृह्णासि मघवन् अहो ते पूजितो मुष्टिः। |
| शत ३.३.३.१-२ | इयं गौस्तया ते (सोमं) क्रीणामि, तस्यै शृतं, तस्यै शरः, तस्यै दधि, तस्यै मस्तु, तस्या आतञ्चनं, तस्यै नवनीतं, तस्यै घृतं, तस्या आमिक्षा, तस्यै वाजिनम् ९.१.४२/२ (महाँस्तु एव गोर्महिमा' इत्यध्वर्युः, गौर्वै प्रतिधुक्) |
| मैसं ३.८.४ | इयति शक्ष्यामहे। ३.७.७ सूत्र-चिकीर्षया च संयोगात्। षट्त्रिंशत् प्रक्रमा प्राची, २४ अग्रेण, ३० जघनेन, इयति क्ष्यामहे। |
| मैसं १.१०.२० | इयं वा अदितिर्, इयं प्रतिष्ठा, यद् आदित्योऽस्यां एव प्रतितिष्ठति। ८.४.२३ |
| तैसं ५.६.१० | इयं वाव प्रथमा चितिः ओषधयो (वनस्पतयः) पुरीषं, अन्तरिक्षं वाव द्वितीया चितिः वयांसि पुरीषं, असौ वाव तृतीया चितिः नक्षत्राणि पुरीषं, यज्ञो वाव चतुर्थी चितिः दक्षिणा पुरीषं, यजमानो वाव पञ्चमी चितिः प्रजाः पुरीषं, संवत्सरो वाव षष्ठी चितिः ऋतवः पुरीषम्। ४.४.४५ |
| ऋ १.१६४.३५ | इयं वेदिः। २.१.३२-इयं वेदिः परो अन्तः पृथिव्याः, अयं यज्ञो भुवनस्य नाभिः। अयं सोमो वृष्णो अश्वस्य रेतो, ब्रह्मायं वाचः परमं व्योम ॥ |
| तैब्रा ३.५.२.९ | इयं (पृथिवी) वै समिध्यमानवती (सामिधेनी), असौ (द्यौः) समिद्धवती (३.५.२.१०) यद् अन्तरा तद् धाय्या-पृथुपाजवत्यौ (३.६.१.३)। ५.३.४ सूत्र-समिध्यमानवतीं समिद्धवतीं चान्तरेण धाय्याः स्युः, द्यावापृथिव्योरन्तराले समर्हणात्। |
| षड् ४.३.२ | इषुः- प्रत्यवायः-तस्य इषुं विष्टुतिं कृत्वा अभिचरन् यजेत। ७.१.१३ |
| षड् ४.३.२-७ | इषु नामैकाहः, अभिचारिकः, ज्योतिष्टोमपूर्वकः ज्यौतिष्टौमिकविध्यन्तः, इतरत् श्येनेन। ७.१.१३ |
| षड् ४.३.३ | इषुं विष्टुतिं करोति। ७.१.१६ तं |
| शत १.७.१.२ | 'इषे त्वा' इति आच्छिनत्ति, 'ऊर्जे त्वा' इति अनुमार्ष्टि संनयति वा। २.१.४७ |

| | |
|---|---|
| शत १.७.१.२ | 'इषे त्वा' इति छिनत्ति। १२.३.२५-इध्यमाणाय अन्नाय भो पलाश ! त्वां छिनद्मि। |
| तैसं १.१.१ | 'इषे त्वा' इति त्वान्तो मन्त्रः। २.१.३२ |
| तैसं १.१.१ | 'इषे त्वा' ऊर्जे त्वा' इति भिन्नौ द्वौ मन्त्रौ। २.१.४७ सूत्रं-समेषु वाक्यभेदः स्यात्। |
| द्र.तैसं ५.६.९ | इष्टकाचयनेन अग्निश्चेतव्यः। ५.३.१६ इष्टकाभिर् अग्निं चिनोति। |
| तैसं ५.६.९ | इष्टकाभिर् अग्निं चिनुते। ९.१.२६ चिनोति। |
| तैसं १.८.७ | इष्टिपशुसोमदर्विहोमाश्च प्रधानभूताः राजसूये। १०.१.५ |
| मैसं ३.८.३ ऋ १०.१.९ | इह वा स इह वा। २.१.३२ |
| तैब्रा १.२.१.२७ | इहैव सन् तत्र सन्तं त्वां अग्ने। ३.८.१६ |
| तैसं ३.१.७ | इहोक्थ्यानि स्युः। २.१.१ तं. यदि अग्निष्टोमः सोमः स्यात् पुरस्तात् उक्थ्यं कुर्वीत॥ ईजाना बहुभिर् यज्ञैर् ब्राह्मणा वेदपारगाः। शास्त्राणि चेत् प्रमाणं स्युः प्राप्तास्ते परमां गतिम्॥ |
| तैसं ५.१.११ | ईड्यश्चासि वन्द्यश्च वाजिन्। २.१.३२ (+ आशुश्चासि मेध्यश्च सप्ते। अग्निष्ट्वा देवैर् वसुभिः सजोषाः, प्रीतं वह्निं वहतु जातवेदाः॥ |
| पा १.४.४९ | ईप्सिततमं ईद् कर्म (कर्तुः +) २.२.१४, १०.१.१४ |
| पा १.४.४९ | ईप्सिततमं हि यत् साधनं तद् द्वितीयान्तेन उच्यते। २.२.१४ (कर्मणि द्वितीया) पा. २.३.२ |
| पा ६.३.२७ | ईद् अग्नेः सोमवरुणयोः २.१.१ तं अग्नीषोमौ, अग्नीवरुणौ। |
| ऋ ७.३२.२२ | ईशानमस्य जगतः स्वर्दृशं ईशानमिन्द्र तस्थुषः। ९.१.७ |
| ऋ ७.३२.२२ | ईशानं स्वर्दृशं तस्थुषः। १०.६.२ |
| वासं २४.२८ तैब्रा ३.९.३.३ | ईशानाय परस्वत आलभेत, तत् प्रकृत्य श्रूयते (पर्यग्निकृतान् आरण्यान् उत्सृजन्ति। अहिंसायै।) ९.४.५१,५२ |
| तां ७.७.१५ | ईश्वरं वै रथन्तरं उद्गातुश्चक्षुः प्रमथितोः, रथन्तरे प्रस्तूयमाने संमीलेत्, स्वर्दृशं प्रतिवीक्षेत नैनं चक्षुर् जहाति। १०.६.३ |
| तैब्रा १.८.३.१ | ईश्वरो वा एष दिशोऽनून्मदितोर्, यं दिशोऽनु व्यवस्थापयति, दिशां अवेष्ट्यो भवन्ति, दिक्षु एव प्रतितिष्ठति। ११.४.९–११ न्यामा |
| आप १.१७.६ | ईषां आलभेत (स्पृशेत्) २.३.१२ आलभ्य। |
| तां ११.११.२ सायण | उक्थ्यं तु यज्ञा यज्ञीयात् परं साम। ८.३.८–९ न्यामा |
| साम ७०३, ७०६ | यज्ञायज्ञीयं साम ७०३, तस्मात्परं ७०६ उक्थ्यं साम– 'एह्यूषु ब्रवाणि तेऽग्न इत्थेतरा गिरः। एभिर् वर्धास इन्दुभिः। |
| तां १९.६.३ | उक्थ्यसंस्थे च गृहीतव्यं षोडशी। १०.५.४९ उक्थ्यः षोडशिमान् भवति |
| गोपथे १.५.२३ | उक्थ्यः षोडशी च संस्थाविशेषः। १०.६.१५ अग्निष्टोमोक्थ्यातिरात्रषोडशी-संस्थाः। |
| शत ४.२.३.१० | उक्थ्याद् गृह्णाति षोडशिनम्। १०.५.४३,४५ उक्थेभ्यो ह्येनं (षोडशिनं) गृह्णाति। |
| तैसं ६.६.८ | उक्थ्ये गृह्णीयात् (अतिग्राह्यान् ग्रहान्) १०.८.२३-२८ न्यामा यदुक्थ्ये गृह्णीयात् प्रत्यक्षं यज्ञं अतिग्राह्याः संशुणीयुः। |

जैब्रा २.८४ — उक्थ्येन यजेत । उक्थ्यो यज्ञः । ३.६.४३ तं. स एष उक्थ्यो यज्ञः ।

ऐब्रा ३६.४ — उक्थ्ये हि द्वे निमित्ते स्तः – अग्निष्टोमस्तोत्रं उक्थ्यस्तोत्रं च, तत्र द्वौ नैमित्तिकौ स्तः – आग्नेयः पशुः, ऐन्द्राग्नश्च । ३.६.४२

वाराह ३.२.१.४६ — उक्थ्यो वैरूपपृष्ठः । ३.८.४४ । सप्तदश उक्थ्यो वैरूपपृष्ठः ।

वाराह ३.२.१.४६ — उक्थ्यो वैरूपसामा एकविंशः पृष्ठे कार्यः । ३.८.४४; १०.६.१५-२१ न्यामा इति प्रकृतिलिङ्गेन सामशब्देन वैरूपपृष्ठो गम्यते ।

अमरकोष २.३.३१ — उखास्थाली चरुः । १०.१.३४-४४ न्यामा अमरः – पिठरः स्थाल्युखाकुण्डं । स्थालीवाची चरुशब्दः तात्स्थ्याद् ओदने ।

तैसं ५.५.१ — उख्यस्य संवत्सराभरणेन कृतो दोषो वैश्वानरेण विहन्यते–४.४.१२ वैश्वानरं द्वादशकपालं पुरस्तात् निर्वपेत्, संवत्सरो वा अग्निर् वैश्वानरः, यथा संवत्सरं आप्त्वा काले आगते विजायते, एवमेव संवत्सरं आप्त्वा काले आगते अग्निं चिनुते । यो वै संवत्सरं उख्यं अभृत्वा । [ उग्राणि ह वा एतानि घोराणि हवींषि यद् अमावास्यायां संक्रियन्ते, आग्नेयं प्रथमं ऐन्द्रे उत्तरे । २.२.७; ११.२.५ ]

मैसं २.३.२ — उग्रोऽसि उग्रस्त्वं देवेषु, अध्युग्रोऽहं सजातेषु भूयासं प्रियः सजातानां उग्रश्चेत्ता वसुवित् । ४ ४.७ परिधिमन्त्राः

ऋ १.११६.३ — उग्रो ह भुज्युं ( आख्यायिकास्वरूपं ) २.१.३३ तुग्रो ह भुज्युं अश्विनोदमेघे, रयिं न कश्चिन् ममृवाँ अवाहाः । तमूहथुर् नौभिर् आत्मन्वतीभिर् अन्तरिक्षप्रुद्भिर् अपोदकाभिः ॥ २.१.३३

साम ६७२-७४ — 'उच्चा ते जातमन्धसः' इत्येष माध्यन्दिनपवमानस्य आद्यस्तृचः,

साम ६८९-९१ — 'स्वादिष्ठया' इति आर्भवपवमानस्य । ५.३.१३-१४ न्यामा

मैसं ३.६.५ — उच्चैर् ऋचा क्रियते, उच्चैः साम्ना, उपांशु यजुषा । २.१.३८; ३.३.१.२

तां ७.७.१० — उच्चैर् गेयं, बलवद् गेयम् । ९.२.४८ बलवद् गेयम् ।

वाराह १.१.१.७ — 'उच्चैर् निगदेन' इति अनूद्यते । २.१.३७

उच्चैर् निरुक्तं अभिष्टुयात् । शांखायन ब्रा ८.३

उच्चैर् निविदम् । आश्वश्रौ ५.९.१२

उच्चैस्त्वेन उत्तमेन अनुयाजेन यजति । शांखायन ब्रा १.५

मैसं ३.६.५ — उच्चैः प्रवर्ग्येण । ३.३.९ तं. प्रवर्ग्यसाम्नां पुनः 'उच्चैः प्रवर्ग्येण-सामत्वाद् उच्चैः ।'

मैसं ३.६.५ — उच्चैः साम्ना क्रियते । ३.३.४

उच्चैः सूक्तवाकशंयुवाकौ आह । शांखायन ब्रा १.५

तैब्रा १.७.८ मैसं १.८.५ — उच्छिनष्टि = न सर्वं जुहोति । ३.५.१५ उच्छेषणेन जुहोति । मैसं–हुत्वा उच्छिंषति ।

तैब्रा ३.६.१.१ — उच्छ्रयणं यूपधर्मः । १२.२.२७-२९ न्यामा 'उच्छ्रयस्व वनस्पते'

तैब्रा ३.६.१.१ — 'उच्छ्रयस्व वनस्पते, वर्ष्मन् पृथिव्या अधि । सुमिती मीयमानः वर्चोधा

ऋ ३.८.३ — यज्ञवाहसे ॥' इति मन्त्रं होता उच्छ्रीयमाणाय पठति । १२.३.२६-३८, न्यामा

तैसं १.६.४ — उज्जितिं अनूजेषम् । ( अग्न्यादीनां ) ९.१.४

शत ५.२.२.१७ — उज्जितीर् यजमानं वाचयति । ३.८.१६

| | |
|---|---|
| धाम १.१.१.३७ | उत त्वः पश्यन् न ददर्श वाचं, उत त्वः शृण्वन् न शृणोत्येनाम् । |
| ऋ १०.७१.४ | उतो त्वस्मै तन्वं विसस्रे, जायेव पत्य उशती सुवासाः ॥ १.३.२४ तं. |
| मैसं ३.१०.५ | उत यत् सुन्वन्ति सामिधेनीस्तदन्वाहुः । ३.७.१५,१६ आसाद्य वै हविः सामिधेनीस्तदन्वाहुः । सामिधेनीस्तदन्वाहुः इति हविर्धानयोर् वचनात् सामिधेनीनाम् । |
| आप ८.२.११ | उत्करे वाजिनं आसादयन्ति । १०.३.१८-२२ न्यामा |
| तैसं २.६.१ | उत्तमप्रयाजस्य संस्कारकर्मत्वम् । १०.१.१४ न्यामा |
| शत १.४.४.२२ | उत्तमः प्रयाजः – स्वाहाकारं यजति । १०.१.१४; ४.१.१८ |
| सत्या १.१.२० | उत्तरयोः पवमानयोः साम्नां आगमः । ५.३.१३ ( सू. १०.५.१६ – आगमेन वा अभ्यासस्य अश्रुतित्वात् – ) स्तोमाभ्यासे सामानि । |
| शत ११.२.३.१३ | उत्तरवेद्यां अग्निनिधानम् । ७.३.२५ तद् यद् एतौ अग्नी आहवनीयाद् विह्रियेते पूर्वो अध्वर्युः उत्तरवेद्यां अग्निं प्रतिष्ठापयति, जघन्यः प्रतिप्रस्थाता दक्षिणस्याम् । |
| तैब्रा १.६.५.१ | उत्तरस्यां वेद्यां अन्यानि हवींषि आसादयति । ३.७.२; १२.१.९ |
| तैब्रा ३.२.३.७ | उत्तराः दोहयति । ११.१.४८ तिस्रो दोहयित्वा उत्तराः ( सर्वाः ) गाः दोहयति । |
| तैसं २.६.६ | उत्तरार्धात् सकृद् अवद्यति । ११.१.३६ सकृदिव हि रुद्रे उत्तरार्धाद् अवद्यति। |
| आप २.२०.३ | उत्तरार्धात् स्विष्टकृते समवद्यति । ३.५.१, ४.१.२८, ११.१.३६ स्विष्टकृति च उत्तरार्धाद् सकृद् अवद्यति । |
| आप २.२०.३ | उत्तरार्धात् स्विष्टकृद् अवदातव्यम् । ३.५.१७ जुह्वां उपस्तीर्य सर्वेषां हविषां उत्तरार्धात् सकृत् सकृत्, स्विष्टकृते अवद्यति । |
| आप २.२०.३ | उत्तरार्धाद् अवदेयम् । ४.१.२८ |
| शत १२.८.१.१३ | उत्तरेऽग्नौ पयोग्रहान् जुह्वति, दक्षिणेऽग्नौ सुराग्रहान् । ३.५.१४ |
| शत २.५.२.१८ | उत्तरे विहारे हवींषि आसादयति । ११.२.३५ स सर्वाणि एव हवींषि अध्वर्युः उत्तरस्यां वेदौ आसादयति । |
| तैसं ७.१.४. | 'उत्तरे षोडशी' इति अनूद्यते । १०.५.५४ षोडश्युत्तरे । |
| तैसं ७.१.४ | उत्तरेऽहन् द्विरात्रस्य गृह्यते । १०.५.५४ षोडश्युत्तरे । |
| आप ११.७.६ | उत्ताना वै देवगवा वहन्ति । १.३.३० |
| भर १३.१७.१३ | उत्तिष्ठन् अन्वाह । ३.२.१० स्तुते उत्तिष्ठन् अन्वाह । |
| तैसं १.६.१ | उत्पवनविलापनग्रहणसादनादयः आज्यधर्माः । ३.१.७ |
| तैब्रा ३.२.३.६,७ | उत्सृष्टवाग् अनन्वारभ्य उत्तरा दोहयति । ११.१.४७,४८ ( विसृष्टवाग् ) |
| तैसं ६.१.५ | उदयनीयं क्रतुं प्रायणीयस्य निष्कासे हविष्यं निर्वपति । ११.२.६७ प्रायणीयस्य निष्कासे उदयनीयं निर्वपति । |
| तैसं ६.१.५ | उदयनीयं निर्वपति । ११.२.६७ |
| तैसं ७.३.३ | उदयनीयोऽतिरात्रः ८.२.२४ |
| आयुर्वेद | उदरामये पयः पातव्यम् । ७.१.८ |
| शत ४.५.१.१३ | उदवसाय यजेरन् । १०.२.४२,४३ उदवसानीयेन यजते । |
| तैसं ५.६.१ | 'उदानिषुर महीर' इति तस्माद् उदकं उच्यते । २.१.३३ न्यामा |

| | |
|---|---|
| तैब्रा २.१.१०.१० | उदितहोमे व्यतिक्रमे व्यृद्धे च केचित् प्रायश्चित्तं आमनन्ति। २.४.८.२२ उदितहोमस्या (अग्निहोत्रे) पि प्रायश्चित्ताम्नानाद् व्युध्यता गम्यते अनुदितहोमस्यापि। उदिते होष्यामि इति प्रक्रान्ते, अन्यथा क्रियमाणे भवति तत्र प्रायश्चित्तस्य विषयो भविष्यति इति कर्मैकत्वेऽपि न दोषः। २.४.२३ |
| तैब्रा ३.८.१६ | उदिते जुहोति। ५.१.३३ उदिते सूर्ये प्रातर् जुहोति। |
| मैसं ३.६.१ | उदीचीं असुराः। ३.४.१० इमां (उदीचीं) असुराः। |
| तैसं ६.१.१ | उदीचीं रुद्राः। ३.४.१० |
| तैसं १.२.८; २.२.१२ ऋ १.५०.१ | उदु त्यं जातवेदसं देवं वहन्ति केतवः। दृशे विश्वाय सूर्यम्॥ ८.१.३१ सौर्ये अनुवाक्या। |
| शत १४.१.१.३३ | उद्गाता आत्मने वा यजमानाय वा यं कामं कामयते तं उद्गायति। ३.८.१४ |
| तैसं ६.४.११ | उद्गातारं वृणीते। ३.७.२४ त्रिर् हिं करोति उद्गातॄन् एव वृणीते। |
| शत १.५.२.१३ | 'उद्गातारो नाप व्याहरेयुः ओत्तमायाः (आ + उत्तमाया) एषा' इत्येव उद्गातारो होत्रे यज्ञं प्रयच्छति (ते+३.५.२६ 'उत्तमायां एषा उत्तमा' इति अपसुब्रह्मण्यानां एव) |
| पा ५.१.१२९ | उद्गातुः कर्म औद्गात्रम् ३.३.१३ प्राणभृज्जातिवयोवचनोद्गात्रादिभ्यः अञ्। अध्वर्युः उन्नेता प्रतिहर्ता होता) |
| तैसं ७.५.८ | उद्गातोद् गायति। ३.७.२२ |
| पा ५.१.१२९ | उद्गात्रादिभ्यः अञ्। ३.३.१३ औद्गात्रम् |
| तैसं ३.२.९ | 'उद्गीथ एव उद्गातॄणां, ऋचः प्रणव उक्थ्यशंसिनां, प्रतिगरोऽध्वर्यूणां' इति समाख्याकृतभेदः। ३.७.४३ |
| तां १३.१२.१४ | उद्गीथा वा एतर्हि वाग्भवति, यर्हि पृष्ठ्यः षडहः संतिष्ठते, न बहु वदेत, नान्यं पृच्छेत्, नान्यस्मै ब्रूयात्, संस्थिते षडहे मधु आशयेत्, घृतं वा। ९.२.४० |
| जैब्रा १.१७५ | 'उद्गेय मा इरा चा दाक्षासा' इति इरागानम्। ९.१.५६ सू. गानसंयोगात्। 'ओ यिरा यिरा चा दाक्षासा' जैब्रा |
| तैसं १.३.१ | 'उद्दिवं स्तभानाऽन्तरिक्षं पृण, पृथिवीं दृंह।' इति यूपस्य उच्छ्रयणे करणभूत एष मन्त्रः। १२.३.३६-३८ न्यामा |
| तां १९.७.३ | उद्भिदा यजेत (पशुकामः)। १.४.१, ४; ११.१.२४ |
| तैब्रा ३.७.६.२२ | उद्यन्नद्य मित्रमहः। आरोहन्नुत्तरां दिवम्। हृद्रोगं मम सूर्य। हरिमाणं च नाशय। ६.१.२४ न्यामा |
| तैसं ३.१.१ | 'उन्दन्तीर् ओजो धत्त' अभिवृष्टस्य मन्त्रः। ११.४.५० उन्दन्तीर् बलं धत्त, ओजो धत्त, बलं धत्त, मामे दीक्षां मा तपो निर्वधिष्ट' इत्यादि, एतद् एव सर्वं आत्मन् धत्ते, नास्यौजो बलं न दीक्षां न तपो निर्घ्नन्ति। |
| भर १३.२६.९ | उन्नेता चमसान् उन्नयति। ३.७.२२ यत्र क्व च चमसान् उन्नयेत्, उन्नेता उन्नयेत्। |
| निरु १.१ | उपक्रमप्रभृति अपवर्ग (समाप्ति) पर्यन्तं यजते ६.२.१३ |
| पा १.३,२५,२२.१२ | उपग्रहविशेषात् मन्त्रकरणे उपतिष्ठतेर् आत्मनेपदम्। ७.३.३६ उपान् मन्त्रकरणे २५, स्थः २२, आत्मनेपदम् १२ |

| | |
|---|---|
| तैब्रा ३.६.६.१ | उपनयत मेध्या दुर् आशासाना मेधपतिभ्यां मेधम् । ९.१.४५ |
| गौतम ध. १.२.१०-१४ | उपनयनादि नियमः ६.२.२१-२२ न्यामा ब्रह्मचर्यं, अग्नीन्धनं, भैक्षचरणं, सत्यवचनं, अपां उपस्पर्शनम् । गुर्वनुगमनं, अभिवादनं, श्रौताध्ययनादयो ब्रह्मचर्यं च । ( वर्जयेत् मधुमांसगन्धमाल्यादि । ) |
| आश्वगृ १.४.४ | उपनयने तिसृभिर् जुहुयात् । ६.८.११ |
| मनु २.१४० | उपनीय तु यः शिष्यं, वेदं अध्यापयेद् द्विजः। साङ्गं च सरहस्यं च, तं आचार्यं प्रचक्षते । १.३.१३ तं |
| तैब्रा ३.३.५.५ | उपभृति द्वे चतुर् गृहीते प्रयाजानुयाजार्थे । ४.१.४० तं अष्टौ उपभृति । यदुपभृति प्रयाजानुयाजेभ्यस्तत् । |
| काठक सं १२.९ | उपयामगृहीतोऽसि अच्छिद्राय त्वां अच्छिद्रेण आश्विनं ग्रहं गृह्णाति । गृहीत्वाऽऽसादयति । ८.२.४ |
| तैसं १.३.२ | उपरवमन्त्रः – रक्षोहणो बलगहनो वैष्णवान् खनामि । ११.४.५२ |
| | उपरिबिलाद् गृह्णाति । ३.४.११ |
| बौधा ध. २.३.३९ | उपरि वाससोऽपि कार्यं परिधत्ते । १०.४.१४ उत्तरं वासः कर्तव्यं पञ्चस्वेतेषु कर्मसु । स्वाध्यायोत्सर्गदानेषु, भोजनाचमनयोस्तथा ॥ |
| तां १६.५.१४ | उपवतीं रथन्तरपृष्ठस्य प्रतिपदं कुर्यात् । १०.५.५९ |
| साम १५७० | उपवती प्रतिपद्-उप त्वा जामयो गिरो देदिशतीर् हविष्कृतः । वायोरनीके अस्थिरन् ॥ |
| तैसं २.५.११ | उपवीतं देवानां उपव्ययते । ३.४.७ |
| सत्या ३.४.३९ | उपवीता वा एतस्य अग्नयः भवन्ति यस्य अग्न्याधेये ब्रह्मा सामानि गायति । |
| सत्या ३.४.४९ | १०.८.९; २.१.३२ सूत्रं-उपवादश्च तद्वत् । न पर्युदासः, ब्रह्मणो अप्राप्तत्वाद्, असतो वचनं अर्थवादार्थं भवति । ब्रह्मा ब्राह्मणवाचित्वाद् उद्गात्रविधानं भविष्यति । प्रतिषिद्धानि एकेषां अग्न्याधेये सामानि । |
| आप १.६.६ | उपवेषं करोति । ४.२.८ मूलतः शाखां परिवास्य उपवेषं करोति । |
| शत १.२.१.३ | उपवेषेण कपालानि उपदधाति । १०.८.६८ स यः कपालानि उपदधाति स उपवेषं आदत्ते । |
| तैसं २.५.११ | उपव्ययते देवलक्ष्मं एव तत् कुरुते । ३.१-२१ |
| शत ३.७.२.१ | उपशये यूपशब्दः । १.४.१० उपशयो यूपो भवति । |
| शत ३.७.२.१ | उपशयो यूपो भवति । ७.३.३३ |
| तैसं ६.६.८ | उपष्टम्भनं वा एतद् यज्ञस्य, यद् अति ग्राह्याश्चक्रे, यत् पृष्ठे अतिगृह्णीयात् प्राञ्चं यज्ञं पृष्ठानि संगृह्णीयुः, यद् उक्थ्ये अतिगृह्णीयात् । प्रत्यञ्चं यज्ञं अतिग्राह्याः संशृणीयुः । १०.८.२३ ( उपस्तम्भनम् ) |
| तैब्रा २.१.५ ८ | उपसदोऽपि विधीयन्ते अग्निहोत्रस्य– 'उन्नीय उपसादयति, पृथिवीं एव प्रीणाति, होष्यन् उपसादयति, अन्तरिक्षं एव प्रीणाति, हुत्वा उपसादयति दिवं एव प्रीणाति, एता वा अग्निहोत्रस्य उपसदः । |
| शत ११ २.७.२७ | उपसदो विधीयन्ते दर्शपूर्णमासयोः । २.३.२४ एता ह वै दर्शपूर्णमासयोर् उपसदो यद् अनुयाजाः तस्मात् ते उपसद्रूपेण प्रत्यञ्चो हूयन्ते । |

| | |
|---|---|
| तां. २५.४.१ | उपसद्मिश्चरित्वा, इति हि उक्त्वा इदं अभिधीयते 'न च उपसदोऽग्निहोत्रस्य दर्शपूर्णमासयोश्च सन्ति।' २.३.२४ |
| पा ६.३.१२२ | उपसर्गस्य घञि अमनुष्ये बहुलम्। ९.२.२५ न्यामा उपसर्गस्य घजन्ते उत्तरपदे अमनुष्ये अभिधेये बहुलं (अणो) दीर्घम्। अभिवर्तसाम-अभीवर्तं, नीक्लेदः, धीमार्गः, अपामार्गः प्रासादः, प्राकारः। (निषादो मनुष्यः) |
| तैसं २.६.३ | उपस्तृणन्, अभिघारयन्, आज्यस्य यजन्। ३.५.६ तं. तस्माद् यजन्ति आज्यभागौ उपस्तृणन्ति अभिघारयन्ति। |
| ऐब्रा २.१४ | उपस्तृणाति आज्यं, हिरण्यशकलं, वपा, हिरण्यशकलं ततो अभिघारयति। ४.१.३० |
| सत्या १७.४.४ | उपहव्योऽनिरुक्त उक्थ्यो यज्ञो बृहत्सामा अश्वः श्वेतो रुक्मललाटो दक्षिणा। (परेषां श्रूयते) |
| | उपहव्योऽनिरुक्तस्तेन अभिशस्यमानं याजयेत् अग्निष्टोमो यज्ञः पंचदशस्तोमो रथन्तरसामा अश्वः श्वेतो दक्षिणा। १०.३.६५ गुणार्थां वा पुनः श्रुतिः। जैसू. २.४.३० यदा बृहत्सामा रुक्मललाटो दक्षिणा। यदा रथन्तरसामा अश्वः श्वेतो दक्षिणा। |
| तां. १८.१.३, १०,१,१८,२०,२१,२२ | उपहव्योऽनिरुक्तस्तेन अभिशस्यमानं याजयेद्, उक्थ्यो यज्ञः सप्तदशस्तोमा बृहत्पृष्ठोऽश्वः श्यावो रुक्मललाटो दक्षिणा, स हि अनिरुक्तः स ब्रह्मणे देयः। १०.३.६५ |
| सत्या. १७.४.४ | उपहव्योऽनिरुक्तोऽग्निष्टोमो यज्ञः रथन्तरसामा अश्वः श्यावो दक्षिणा। २.४.८,२८,२९ |
| तैब्रा ३.५.८.१ | उपहूतं रथन्तरं सह पृथिव्या। ९.१.४१ न्यामा |
| तैब्रा ३.५.१३.३ | उपहूता मनुष्या ये यज्ञपतिं वर्धयेयुः। ९.१.४० |
| मैसं १.१०.१३ | उपात्र वपन्ति। ७.३.२५ |
| पा. १.३.२५, २२,१२ | उपान् मन्त्रकरणे तिष्ठतेर् आत्मनेपदम्। ७.३.३५-३६ न्यामा स्थः |
| तैसं ६.४.५ | उपांशु ग्रहः प्रथमः, अन्तर्यामी ग्रहो द्वितीयः, ऐन्द्रवायवस्तृतीयः, मैत्रावरुणश्चतुर्थः। १०.५.६२-६४ न्यामा |
| आप २.१८.२३ | उपांशु पौर्णमास्यां यजन् २.२.११ उपांशुयाजः पौर्णमास्यां एव भवति। |
| मैसं ३.६.५ | उपांशु यजुषा क्रियते। २.१.३८ |
| तैसं २.६.६ | उपांशुयाजं अन्तरा यजति। २.२.९.१०; १०.८.४७,५६,६२ ६६. |
| बौधा १.१६.१७ | उपांशुयाजः पौर्णमास्यां अमावास्यायामपि इज्यते। ६.५.१०-११ न्यामा आश्वश्रौ। १.३.१२,१३ शांखाश्रौ १.३ |
| भर १३.१८.३.४ | 'उपावर्तध्वम्' इति दर्भाभ्यां स्तोत्रं उपाकरोति। १०.४.१/३ |
| तां ६.९.१ | 'उपास्मै गायता नरः' इति ग्रामकामाय प्रतिपदं कुर्यात्। ३.३.१९;८.१.२३ |
| साम ६५१ ऋ ९.११.१ | उपास्मै गायता नरः, पवमानायेन्दवे। अभि देवाँ इयक्षते। ३.३.१९; ८.१.२३ |
| तैसं ६.५.२ | उपोप्ते अन्ये ग्रहाः साद्यन्ते, अनुपोप्ते ध्रुवाः। ३.६.३० |
| पा २.३.६६ | उभयप्राप्तौ च कर्मणि। ३.४.१३ तं. कर्तृकर्म च उभयप्राप्तौ कर्मणि एव षष्ठी स्यात्। |
| तैब्रा ३.७.१७ तैसं ३.७.१ | उभयमिति नित्यानुवादः एकस्मिन् अपि आर्ते अपरस्मिन् अपि, तस्मादुक्तं 'यस्य उभयं हविर् आर्तिमार्छेत्।' ६.४.२२ |

| | |
|---|---|
| तैसं ४.१.९ | उभयीर् जुहोति आग्निकीश्च आध्वरिकीश्च। १०.३.२८ 'आकूतिं अग्निं प्रयुजं' |
| शत ६.६.१.१४,१५ | इत्याद्याः षट् प्राकृत्यः आग्निक्यः। 'आकूत्यै प्रयुजे अग्नये' इत्याद्याः षट् वैकृत्यः आध्वरिक्यः आहुतयः। पश्चाद् अध्वरस्य जुहोति तानि उभयानि द्वादश। तैसं १.२.२ |
| आप ५.२८.१९; ५.२९.१ | उभयीर् ददाति (दक्षिणाः) अग्न्याधेयिकीश्च पुनराधेयिकीश्च। १०.३.३०,३२ |
| तैसं ३.७.१ | उभे अपि बृहद्रथन्तरे भवतः। ७.३.१० |
| तां १९.८.३ | उभे बृहद्रथन्तरे कुर्यात्। ९.२.४९; १०.५.५९; १०.६.२५; १२.३.१३ |
| आप १.२५.३ | 'उरु ते यज्ञपतिः प्रथतां' इति पुरोडाशं प्रथयति। १२.३.३१-३५ न्यामा |
| आप १.२५.३ | 'उरु प्रथस्व' इति पुरोडाशं प्रथयति। १२.३.३१-३५ |
| आप १.२५.३ | 'उरु प्रथस्व उरु ते यज्ञपतिः प्रथतां' इति पुरोडाशं प्रथयन् सर्वाणि कपालानि प्रथयति। अभिप्रथयति |
| तैसं ६.२.७ | 'उरु प्रथस्व उरु ते यज्ञपतिः प्रथतां' इत्याह यजमानं एव प्रजाः पशुभिः प्रथयति। १.२.४३ |
| मैसं ४.१.९ | 'उरु प्रथा उरु ते यज्ञपतिः प्रथतां' इति पुरोडाशं प्रथयति। १२.३.३१ |
| शत १.२.२.८ | 'उरु प्रथा उरु प्रथस्व' इति पुरोडाशं प्रथयति, यज्ञपतिं एव तत् प्रथयति। १.२.३१; १.२.४३ |
| माश्रौ १.२.३.२३<br>वाराह १.३.१.२२ | 'उरु प्रथा उरु प्रथस्व' इति पुरोडाशं प्रथयति 'सं ते तन्वा तनूः सृज्यताम्' इति त्रिः परिमार्ष्टि। १०.१.५५ |
| ऋ १.२४.८ | उरुं हि राजा वरुणश्चकार, सूर्याय पन्थामन्वेतवा उ। अपदे पादा प्रतिधातवेऽकरुतापवक्ता हृदयाविधश्चित्॥ ९.४.२२ |
| तैसं १.३.४ | उरु विष्णो वि क्रमस्व, उरु क्षयाय नः कृधि। घृतं घृतयोने पिब, प्रप्र यज्ञपतिं तिर। ९.४.२३ |
| तैब्रा ३.६.६.३,४ | उरूकं मन्यमाना वनिष्ठुं अस्य मा राविष्ट। ९.४.२२ न्यामा वनिष्ठुं अस्य मा राविष्ट। (३) उरूकं मन्यमानाः |
| तां १६.१३.६ | उर्वरा वेदिर् भवति। १०.१.९ न्यामा (साद्यस्क्रे) |
| तैसं १.१.९ | उर्वी चासि वस्वी चासि। १.४.१ न्यामा |
| शत ११.५.१.१ | उलपराजिं स्तृणाति। ३.१.२४ (वेद्यां आस्तरितुं संपादितः स्तम्बः–उलपराजिः।) |
| शत २.२.२.१ | उलूखलमुसलाभ्यां अवहन्ति। ३.१.११ उलूखलमुसलाभ्यां दृशदुपलाभ्यां अवघ्नन्ति। |
| ऋ १०.३६.१ | उषासानक्ता बृहती सुपेशसा, द्यावाक्षामा वरुणो मित्रो अर्यमा। इन्द्रं हुवे मरुतः पर्वतान् अपः, आदित्यान् द्यावापृथिवी अपः स्वः॥ १०.१.३३ |
| काठक सं २०.१५ | उषासानक्ता अग्ने आज्यस्य वीताम्। १०.१.३३ (एकादशप्रयाजानां अभ्यस्यमानानां अन्या अन्या देवताः दुरउषासानक्तादयः। |
| तैसं २.४.११ | उष्णिक् ककुभौ धाय्ये। ५.३.५ |

तां ८.५.२ उष्णिहि सफं ककुभि पौष्कलं द्वे अपि एकैकस्यां ऋचि । ९.२.२५/३,२८/३ उष्णिहि पौष्कलं-इन्द्रमच्छ सुता (६९४) ककुभि सफं (६९२) पवस्व-मधुमत्तमम् । ते द्वे उष्णिक् ककुभौ सा एका जगती ।

सफं साम ५७८ पवस्व मधुमत्तम इन्द्राय सोमक्रतुवित्तमोमदः । महि द्युक्षतमोमदः ॥ ककुभि सफं

साम ५६६ उष्णिहि पौष्कलं-इन्द्रमच्छ सुता इमे, वृषणं यन्तु हरयः । श्रुष्टे जातास इन्दवः स्वर्विदः । उष्णिहि पौष्कलम्

निघण्टु २.११ 'उस्रा, उस्रिया, अही, मही, अदितिः, इला, अघ्न्या, जगती, शक्वरी' इति गोर् नव नामानि । १०.४.३२

वाराह ३.३.४.२२ 'उस्रायै वपायै मेदसोऽनु ब्रूहि ।' १०.४.३३ यथोक्तं वा, विप्रतिपत्तेर् न चोदना । 'उस्रायै' इति मन्त्राम्नानं, न वचनं कर्तव्यं इति । वाराहे-विश्वेभ्यो देवेभ्यश्छागानां उष्ट्राणां मेषाणां वपानां मेदसः ।

शत ११.५.२.३,५ ऊरू वा एतौ यज्ञस्य यद् वरुणप्रघासश्च साकमेधश्च । ७.३.२४ अयमेव दक्षिणा ऊरुर् वरुणप्रघासाः (३) अयमेव उत्तरा ऊरुर् महाहविः-साकमेधाः ।

मैसं १.१०.१८ (ऊरू वै देवानां याज्यानुवाक्ये) एकया प्रत्यागच्छति गमयति अन्या अथात्र (पितृयज्ञे) तिस्रः कार्याः । द्वे १२.४.४

तैसं २.१.१ ऊर्गुदुम्बरः । १.२.२१,२२ ऊर्ग् वा उदुम्बरः ।

मैसं २.५.१ ऊर्जं पशून् आप्नोति । १.२.१९ आप्त्वा

आप १.१.११ 'उर्जे त्वा' इति अनुमार्ष्टि संनयति वा । २.१.४७ (ऊर्जे-रक्षाय वा बलाय वा, त्वां अनुमार्ष्टि-सायण)

तैसं २.१.१ ऊर्जोऽवरुध्यै । १.२.१९, २१,२५

वैसं १.१.११ 'ऊर्णाम्रदसं त्वा स्तृणामि', इति त्रिधातु पञ्चधातु वा स्तृणाति । ११.४.४४ १२.१.४४ सायण

तैब्रा ३.६.१.२ ऊर्ध्व ऊ षु ण ऊतये । तिष्ठा देवो न सविता । ऊर्ध्वो वाजस्य सनिता यदञ्जिभिः । वाघद्भिर् विह्वयामहे ॥ १२.३.३६-३८ न्यामा

तैब्रा ३.३.७.७ ऊर्ध्वं आघारयति । २.२.१३,१६

तां १६.५.२४ ऊर्ध्वं माध्यन्दिनपवमानात् प्राक् मैत्रावरुणसाम्नः इदं अन्तरालं पृष्ठदेशः । सूत्रं-विधेस्तु विप्रकर्षः स्यात्-एकस्य पृष्ठकार्ये विधिर् अन्येषां परिसामकार्ये-पवमाने रथन्तरं करोति, आर्भवे बृहत्, वैरूपं होतुः पृष्ठम्, वैराजं ब्रह्म साम, शाक्वरं मैत्रावरुणं साम, रैवतं अच्छावाकं साम-वैरूपस्य होतुः पृष्ठे सर्वेषां निवेशः । १०.६.१३,१४

तैसं २.६.६ ऊर्ध्वं सोमाद् द्विपुरोडाशा पौर्णमासी प्राक् सोमाद् एकपुरोडाशा । १०.८.६२ सूत्रं-द्विपुरोडाशाभ्यां उपांशुयाजः स्यात् । अन्तरार्थत्वात् । पौर्णमास्यां उपांशुयाजः । अन्तरा-द्वयोः पुरोडाशयोर् मध्ये उपांशुयाजः ।

मैसं १.१.१३ ऊर्ध्वोऽध्वरो, दिविस्पृग् अहुतो यज्ञो यज्ञपतेर् इन्द्रवान् त्स्ववान् बृहद्भाः ॥ वीहि मधोर् घृतस्य स्वाहा । (स्पृग । इन्द्रवान् ।) १०.३.१४,१६

तैब्रा ३.६.१.२ ऋ. १.३६.१४ — ऊर्ध्वो नः पाह्यंहसो नि केतुना । विश्वं समत्रिणं दह । कृधी न ऊर्ध्वान् च रथाय जीवसे । विदा देवेषु नो दुवः ॥ १२.३.३६-३८ न्यामा

तैब्रा ३.६.३.३ — ऊवध्यगोहं पार्थिवं खनतात् । (पशुशकृद् गूह्यते संवियते यस्मिन् प्रदेशे स ऊवध्यगोहः ।)

मैसं १.११.८ — उषपुटैर् अर्पयन्ति इति अध्वर्यवो अर्पयिष्यन्ति । ३.७.५१ सूत्रं– तद्ग्रहणाद्वा स्वधर्मः स्याद् अधिकारसामर्थ्यात् सहाङ्गैः अव्यक्तः शेषे । अध्वर्यवो उषपुटान् अर्पयिष्यन्ति इति वाजपेयाङ्गेन लिङ्गेन वाजपेय आध्वर्यवः ।

मैसं १.११.८ — उषपुटैः अर्पयन्ति । ३.७.५१

भर ६.१५.८ — ऊहश्चिकीर्षित इति ब्राह्मणं उपदिशति । चिकीर्षित इति च इष्टः उच्यते । ९.२.१,२

पाम १.१.१.१८ — ऊहार्थं अपि शब्दानाम् । १.३.२४ तं । ऊहः खलु अपि...व्याकरणं अध्येयम् ।

साम १४५३-५५ — ऋक्तो जगदाख्यं साम स्यात् विषुवति । १०.५.५८ सूत्रं–जगत्साम्नि सामाभावाद् ऋक्तः साम तदाख्यं स्यात् । (विभ्राड् बृहत् पिबतु-साम १४५३-५५ एतदेव महादिवाकीर्त्यं साम तृचे ।)

ऐब्रा ३.२.२३;१३.२३ — ऋक् सामोवाच 'मिथुनी संभवाव' इति । सोऽब्रवीत् 'न वै त्वं मम अलं असि जायार्थे, वेदः मम महिमा' इति । ते द्वे भूत्वा ऊचतुः । सोऽब्रवीत् 'न युवां मम अलं स्थः जायार्थे, वेदः मम महिमा' इति । तास्तिस्रो भूत्वा ऊचुः 'मिथुनीसंभवाम' इति । तस्माद् एकं साम तृचे क्रियते स्तोत्रीयम् ।

ऐतरेयब्राह्मणे–ऋक्साम उपावदत् 'मिथुनं संभवाम प्रजात्यै' 'न' इत्यब्रवीत् साम । 'ज्यायान् वाऽतो मम महिमा' इति । ते द्वे भूत्वा उपावदताम् । 'न' प्रतिवचनं समवदत् । तास्तिस्रो भूत्वा उपावदन् । तत् तिसृभिः समभवत् । तस्मात् तिसृभिः स्तुवन्ति, तिसृभिर् उद्गायन्ति, तिसृभिर् हि साम संमितम् । ९.२.१६

आप ८.३.१० — ऋग्भिर् युक्तं रथं होत्रे ददाति । १०.३.७५

तैब्रा ३.१२.९.१ — ऋग्भिः प्रातर् दिवि देव ईयते, यजुर्वेदेन तिष्ठति मध्ये अह्नः । सामवेदेनास्तमये महीयते, वेदैर् अशून्यस्त्रिभिरेति सूर्यः ॥ ३.३.३

छां ७.१.१ — ऋग्वेदं भगवोऽध्येमि, यजुर्वेदं, सामवेदं, अथर्ववेदं चतुर्थं; इतिहासपुराणं पञ्चमम् । १.३.७ तं

शत ८.१.३.३ — ऋचं गायति । ७.२.१३ ऋचि साम गायति

तां ४.३.४,५ — ऋचा स्तुवते साम्ना स्तुवते । यद् ऋचा स्तुवते तद् असुरा अन्ववायन् यत् साम्ना स्तुवते तद् असुरा नान्ववायन् । य एवं विद्वान् साम्ना स्तुवीत । ९.२.३०/१; ९.२.३१/१ (साम्ना इतो यन्ति, ऋचा पुनरायन्ति) साम वा असौ लोकः ऋग् अयं, यत् इतः साम्ना यन्ति स्वर्गं लोकं आरभ्य यन्ति, यद् ऋचा पुनरायन्ति अस्मिन् लोके प्रतितिष्ठन्ति ।

ऋचा वा असुरा आयन्, साम्ना देवाः – जैब्रा १.१५४

ऋचि प्रणवं दधाति याज्यायाम् । आप ८.१२.१९

| | |
|---|---|
| शत ८.१.३.३ | ऋचि साम गायति । ९.२.४ गीयते । |
| छां १.६.१ | ऋच्यध्यूढं साम गायति । ३.३.९ तं |
| षड् ३.४.१ | ऋजीषं अप्सु प्रास्यति । इति सर्वेषां ग्रहां यद् ऋजीषं सर्वम् । १०.६.७३ ऋजीषं अप एव अभ्यवयन्ति । |
| षड् ३.४.१ | ' ऋजीषस्य कृत्स्नस्य अप्सु प्रासनम् ' १०.३.७६ ( निष्पीडितरसः सोमवल्लीभागः ऋजीषम् ) |
| सत्या १२.८.२१,२२ | ऋजीषाणां–' ऋषीणां आग्नेयेन संवत्सरं उपधाने आसीत सूक्तेन सूक्तस्य अवच्छेदाय' इति आग्नेयेन सूक्तेन इत्युक्ते यावन्ति आग्नेयानि सूक्तानि दाशतय्यानि सर्वैर् इष्टका उपधीयन्ते ( यद् ऋषीणां आग्नेयसूक्तं तेन संवत्सरं चिन्वन्ति, यानि दाशतयीषु आग्नेयानि सूक्तानि तेषां एकैकेन सूक्तेन एकैकां इष्टकां उपदधाति-सत्या. ) |
| तैसं २.५.११ | ऋजुं आघारयति । २.२.१३; १२.३.९ |
| ता १८.२.१०-१२ | ऋतं वै सोमोऽनृतं पशवो यत् पशून् दद्यात् सोऽनृतं कुर्यात्, औदुम्बरः सोमचमसो दक्षिणा । १०.३.६९ जैब्रा २.१५९ ( ऋतपेये ) सगोत्राय ब्रह्मणे देयः । कात्या २२.८.२५ पशूपवादात्-ऋतपेये पशून् न दद्यात् । औदुम्बरचमसे सोमादयः । |
| मैसं १.४.१२ | ऋतवो वै प्रयाजाः समानीय होतव्याः । २.४.३१ मैत्रायणीयानां समिधादयः प्रयाजा न समाम्नायन्ते, अथ च गुणाः श्रूयन्ते ऋतवो वै प्रयाजाः । |
| तैसं ३.४.७ | ऋताषाड् ऋतधामा अग्निर् गंधर्वस्तस्योषधयोऽप्सरस ऊर्जो नाम स इदं ब्रह्म क्षत्रं पातु ता इदं ब्रह्म क्षत्रं पान्तु तस्मै स्वाहा, ताभ्यः स्वाहा । राष्ट्रभृन्मन्त्राः । ३.४.३१–३३ न्यास। |
| तैसं ७,४.८ | ऋतुमुखं वा एषा पौर्णमासी संवत्सरस्य या चैत्री पौर्णमासी । ६.५.३१ मुखं वा एतत् संवत्सरस्य यत् चित्रापूर्णमासः । |
| तैसं ७.२.१० | ऋतुयाज्यावरणं आत्रेयहिरण्यदानं च द्वादशाहस्य केचिद् धर्माः । १०.२.६२ ऋत्विगाचार्यौ नातिचरितव्यौ । १०.२.४६; ११.३.३३ इति स्मरन्ति । |
| पा ३.२.५९ | ऋत्विग्दधृक्, ऋतुशब्द उपपदे यजेः क्विन्-निपातनात् । ३.७.३३ तं |
| मैसं ४.८.३ | ऋत्विग्भ्यो दक्षिणां ददाति । ३.७.३३,३६; १०.२.२२,२३; १०.३.५७ |
| तैसं ६,२.२ | ऋत्विग्याज्ययोश्च अव्यभिचारो धर्मः । ११.४.५ स निर्ऋच्छाद् यो नः प्रथमो अन्यो अन्यस्मै द्रुह्याद् इति तस्माद् यः स तानूनप्त्रिणां प्रथमो द्रुह्यति स आर्तिं आर्च्छति । |
| तां ५.३.६ | ऋत्विज उपगायन्ति । ८.१.१८ |
| कात्या १३.२.२ | ऋत्विज उपवसन्ति । ३.७.३३; १०.६.५४ |
| तैसं ६,२.२ | ऋत्विजां यजमानस्य च परस्परं अव्यभिचारार्थं कर्मारम्भे शपथकर्म तानूनप्त्रं नाम । १.३.३ तं यस्तानूनप्त्रिणां प्रथमो द्रुह्यति स आर्तिं आर्च्छति । |
| तैसं ६.३.७ | ऋत्विजो वृणीते, छन्दांसि एव वृणीते, सप्त वृणीते, होतारं, अग्नीध्रं, अध्वर्युं, मैत्रावरुणं, ब्राह्मणाच्छंसिनम् । १.३.१३ |
| तां २३.१.५ | ऋद्धिकामाः सत्रं आसीरन् । १०.२.४३ त्रयोदशरात्रं ( सत्रं ) ऋद्धिकामा उपेयुः । |

| | |
|---|---|
| तैसं ५.५.२ | ऋध्नोत्येव । २.१.२१ तं य एवं विद्वान् अग्निं चिनुते ऋध्नोत्येव । |
| तैब्रा १.१.४.८ | 'ऋभूणां त्वा' इति रथकारस्य आधानमन्त्रः । ६.१.५० ऋभूणां त्वा देवानां व्रतपते व्रतं आदधीत । |
| तैब्रा ३.७.५.१२ | ऋषभं वाजिनं वयं पूर्णमासं यजामहे । ९.२.५४ ऋषयोऽपि पदार्थानां नान्तं यान्ति पृथक्त्वशः । लक्षणेन तु सिद्धानां अन्तं यान्ति विपश्चितः । २.१.३२ |
| तैसं ७.२.१० | एक एव यजेत । १०.६.४८ सत्रं अपोह्य अन्यस्य एककर्तृकतां विदधत् बहुकर्तृकतां गमयति । |
| तैब्रा १.६.३.७ | एककपालं जुहोति । २.१.११ एककपालं आहवनीये जुहोति । |
| तैब्रा १.६.३.६,७ | एककपालं सर्वहुतं करोति । १.४.२३ |
| मैसं १.१०.२० | एककपालान् जुहोति । ४.३.२७ तं एककपाला भवन्ति । (त्र्यम्बकेषु) |
| तैसं २.३.२ | एकधा ब्रह्मणे परिहरति । १०.२.१७ उपहरति (सह उपहरति) |
| तैब्रा ३.६.६.२ | एकधाऽस्य त्वचं आच्छयतात् । ९.३.२९,३० |
| आप २.१६.७ | एकं वृणीते । ६.१.४३ न्यामा एकस्य गोत्रप्रवर्तकस्य नामोच्चरणकर्तृकं-यथा कश्यपगोत्रोऽहं, भरद्वाजगोत्रोऽहम् । |
| आप २.१६.८ | एकं वृणीते. द्वौ वृणीते, त्रीन् वृणीते, न चतुरो वृणीते, न पञ्चाति वृणीते । ६.१.४३ |
| ऐब्रा ३.२३ | एकं साम तृचे क्रियते । ९.२.१४ तिसृभिर् ऋग्भिः साम संमितम् । तस्मादेकं... |
| मैसं ३.९.८ | एकं हि वृणीते । ६.१.४३ |
| तैसं ७.३.२ | एकं हि द्वादशाहे त्रिवृदहः । ६.७.४० |
| ऋ ८.७७.४ | एकया प्रतिधापिबत्, साकं सरांसि त्रिंशतम् । इन्द्रः सोमस्य काणुका ॥ ९.१.६ |
| तैसं ४.३.१० | 'एकयाऽस्तुवत' इत्यत्र या असृष्टयः (इष्टकाः) ताः लक्षयेत् । १.४.२७ |
| तैसं ५.३.४ | (सृष्टीर् उपदधाति) १.४.२७ |
| मैसं ३.४.८ | एकयूपे एकादशपशवो नियुज्यन्ते । ४.४.२८; २.४.२६ नियुज्याः एकयूपे एकादशपशवो यदा नियुज्यन्ते तदा एकस्यैव पशोः (स्वरुणा) समञ्जनं पूर्वस्मिन् पक्षे, सर्वेषां (पशूनां समञ्जनं) सिद्धान्ते । श्लोकश्च भवति- स्वरुर् यूपाङ्गमिति चेत् एकस्यैव समञ्जनम् । बहूनां एकयूपत्वे सर्वेषां तु समञ्जनम् । ४.४.२८ |
| तैब्रा ३.८.१९.१ | एकयूपो वा एकादशिनी वा अन्येषां यज्ञानां यूपा भवन्ति, एकविंशिनी अश्वमेधस्य । ५.२.७-९ न्यामा |
| शुयस २.२१,२२ | एकरुद्रदेवत्ये एको रुद्रः, शतरुद्रदेवत्ये शतं रुद्राः । १.२.४७ असंख्याता बहुरुद्रदेवत्याः । (शुक्लयजुः सर्वानुक्रमसूत्रे रुद्राध्याये ।) |
| तैसं २.५.१० | एकविंशति सामिधेनीर् अनुब्रूयात् प्रतिष्ठाकामस्य । ५.३.४; १०.५.२७ तत्र एकादश पठिताः (तैब्रा ३ ५.२) पुनः त्रिः प्रथमां त्रिः उत्तमाम् (तैसं २.५ ७) इति आवृत्त्या पञ्चदश 'समिध्यमानवती च समिद्धवती च तयोर् द्वे ऋचे धाय्ये'-'पृथुपाजा', 'तं सबाधम्' निवेशितव्ये एवं सप्तदश, तथा अन्ते [illegible] ऋचो [illegible] । |

तैसं ६.१.१ एकविंशत्या पावयति ( दर्भपिञ्जुलैः ) ५.२.५

तैसं ७.२.१ एकविंशत्रिणव त्रयस्त्रिंशत् स्तोमाः–विवृद्धस्तोमाः । १०.५.१५,१६ सूत्र-आगमेन ( संख्यापूरणं ) अभ्यासस्य अश्रुतित्वात् । १०.५.१५-२५ न्यामा

ला २.१०.१८टीका एकविंशं यज्ञायज्ञीयम् । ५.३.३८; ९.२.२८/३ तत्र पूर्वाबृहती, उत्तरा विष्टार-पङ्क्तिः, ततः ककुभौ उत्तरे कृत्वा ( ला. अभ्यासेन ) प्रगाथः क्रियते ।

तैसं ६.६.११ 'एकविंशं ( षोडशि ) स्तोत्रं भवति प्रतिष्ठित्यै हरिवच्छस्यते' इति षोडशिनि स्तुतशस्त्रे विहिते । १०.५.४९-५२ न्यामा

तां १२.१३.८ एकविंशस्तोमत्वाद् उक्थ्यग्रह इव षोडशी । १०.५.४८
एकविंशायतनो वा एष यत् षोडशी ।

वाराह ३.२.१.४६ एकविंशः षोडशी वैराजसामा, सामत्वाद् वैराजपृष्ठोऽपि । ३.८.४४

तैसं ७.२.१ एकविंशेन अतिरात्रेण प्रजाकामं याजयेत । ( प्रतिष्ठाकामं ) ५.१.१३; ५.३.७; १०.५.१५,१६ बहिष्पवमाने त्रयस्तृचाः – नवस्तोत्रीयाः, तत्र चत्वारस्तृचाः आगमयितव्याः ।

पा १.२.३३ एकश्रुति दूरात् सम्बुद्धौ । १२.३.२३,२४

पा १.४.२२ एकस्मिन् एकवचनं द्वयोर् द्विवचनं बहुषु बहुवचनम् । ३.४.१३

मैसं ३.४.८ एकस्मिन् यूपे एकादश पशवो नियोक्तव्याः । २.४.२६; ४.४.२८
एकयूपे एकादश पशवो नियुज्यन्ते ।

वारागृ १.२.१.१ एकस्मै वा अन्या इष्टयः कामाय आह्रियन्ते, सर्वेभ्यो दर्शपूर्णमासौ-सर्वकामस्य दर्शपूर्णमासौ । ४.३.२५

तां ६.२.१.२ एकस्मै वा अन्ये क्रतवः कामाय आह्रियन्ते, सर्वेभ्यो ज्योतिष्टोमः । ४.३.२५

तैसं ६.१.६ एकहायनी ( अजा ) सोमक्रयार्था । ९.१.४२

तैसं ६.१.६ एकहायन्या क्रीणाति । ४.१.२५

पाम ६.१.८.४ एकः शब्दः सम्यग्ज्ञातः सुप्रयुक्तः शास्त्रान्वितः स्वर्गे लोके कामधुक् भवति ।

शत ४.१५.१०.६ एकां गां दद्यात् ( सोमापहृते ) ४.१.१५

मैसं ३.२.२ एका जगती द्वे गायत्र्यौ । ८.३.१४ ये हि द्वे गायत्र्यौ सा एका जगती ।

तैसं ६.२.३ एकाद्यो दीक्षा ज्योतिष्टोमस्य । १.१.१ न्यामा आवाग्रे अवान्तरदीक्षां उपेयात् यः कामयेत् अस्मिन् मे लोकेऽर्धुकं स्यात् इति । एकं अग्रे अथ द्वौ अथ त्रीन् अथ चतुर् एवा वा आग्राऽवान्तरदीक्षाऽस्मिन् एव अस्मै लोकेऽर्धुके भवति ॥

तैसं २.२.४ मैसं २.१.४ शत २.५.३.१० आप १०.६.२८ ऐब्रा १.३.३ एकादशकपालं निर्वपति, अष्टाकपालं द्विर् अवद्यति, त्रिर् अभ्यङ्क्ते, एकविंशत्या पावयति इति संख्यादीनां गुणत्वं भवति । २.५.५ सूत्र-सर्वाणि तु एककार्यत्वात् एषां तद्गुणत्वात् ।

तैब्रा ३.५.२ एकादश च समाम्नाता सामिधेन्यः । १०.५.२७

तैसं २.५.७ त्रिः प्रथमां आह त्रिरुत्तमाम् ।

मैसं ३.१०.४ एकादश प्रयाजा एकादशानुयाजी एकादशोपयजस् तत् त्रयस्त्रिंशत् । त्रयस्त्रिंशद् देवताः ।

तैसं ६.३.७ एकादश प्रयाजान् यजति । ५.३.१; ८.१.१२; १०.३.१,७ स च प्रयाजान् द्विर् आवृत्य पञ्चमं प्रयाजं सकृद् पुनः आवर्तते ।

तैसं ६.३.१० एकादशभिर् अवदानैर् असौ यागो निर्वर्तयितव्यः । २.२.२१ एकादश अवदानानि अवद्यति ।

वाराह ३.२.७.१ एकादशयूपान् छिनत्ति । १० २.२६ एकादशिन्यां प्रतिपद्य यूपं छिनत्ति ।

तैसं ७.२.६ एकादशरात्रेण यजेत् । १०.५.१

मैसं ३.१०.३ एकादश वा एतानि पशोर् अवदानानि । १०.७.४

तैसं ६.३.११ एकादशानुयाजान् यजति । ५.३.१;८.१.१२;१०.३.१

वाराह ३.२.३.४१ एकादशिनान् प्रायणीयोदयनीययोर् अतिरात्रयोर् आलभेरन् । १०.६.६-१२ न्यामा अपि वा प्रायणीयोदयनीययोर् विभक्तान् ऐकादशिनान् आलभेरन् ।

वाराह ३.२.३.४५ एकादशिन्यां अन्वहं एकैकां आलभेत । १०.६.९ तान् अन्वहं विहृतान् आलभन्ते ।

आप १०.१५.१ एका दीक्षा तिस्र उपसदः, पञ्चमीं प्रसुतः । १२.२.२५ प्रसुतः सोमयागः ।

वाराह १.४.३.४१ एका देया, षड् देया, द्वादश देयाः, चतुर्विंशतिर् देया, शतं देयं, सहस्रं देयं, अपरिमितं देयाः ( गावः ) गवां शतं ६.७.२१; १०.३.३०; ११.१.४३

काठक सं १२.११ एका पुरोरुक्, एका याज्या । ८.२.४

शत २.६.१.२१ एकां सामिधेनीं अन्वाह । १०.५.१ एकां एव होता सामिधेनीं अन्वाह ।

ऋ १०.१६.१२ उशन्तस्त्वा निधीमह्युशन्तः समिधीमहि । उशन्नुशत आ वह पितॄन् हविषे अत्तवे ॥ एका सामिधेनी ।

सत्या २१.२.३३ एकारस्य योनौ आईभावः । ९.२.३२ यत्र एतद् एकार-ऐकारौ याज्यान्ते भवतः, तत्र 'आई'कारं कुर्यात् ।

सत्या १.६.२० एकार्थांस्तु विकल्पेरन् । १२.३.१०,२९ पुरोडाशविभागार्थाः-पूषा वां विभजतु । भगो वां विभजतु । अर्यमा वां विभजतु । जैसू १२.३.२९ मन्त्राणां संनिपातित्वाद् एकार्थानां विकल्पः स्यात् ।

तां १६.५.१२ पावमान उत्तमस्तृचो भवति ।

सोमपावमानसाम ७८७ एका वा अस्योत्तमा स्तोत्रीया, तां उद्गृह्य उद्गायेत् । ९.२.१८ (उद्गीथ-भेदं दर्शयति ) पवमानस्य ते वयं पवित्रमभ्युन्दतः । सखित्वमावृणीमहे ॥ ये ते पवित्रमूर्मयोऽभिक्षरन्ति धारया । तेभिर् नः सोम मृडया ॥ साम ७८९-स नः पुनान आभर, रयिं वीरवतीमिषम् । ईशानः सोम विश्वतः ॥

तैसं ७.४.८ एकाष्टकायां दीक्षेरन् । एषा वै संवत्सरस्य पत्नी यद् एकाष्टका । ६.५.३५

तां १६.१.८ एकाहाद् वा ज्योतिष्टोमाद् ( स्तोत्रीयाणां ) उपचयः ( शतोक्थ्ये, शतातिरात्रादिषु ) स्यात् । ८.३.११-सूत्रम्- एकाहाद् वा-
एकाहे हिंकरणं नास्ति । एकाहे अहिंकृता गायति । ( जैब्रा १.३१५ )

तां १६.५.२४टीका एकाहो विश्वजित् षडहः ( षाडहिकानां पृष्ठानां भावात् 'एकाहो विश्वजित् षडहः' इत्युक्तं, तं एकाहं षडहं इति आचक्षते । ७.४.१३

काठ ३४.९ एको द्वौ बहवोऽपि वा अहीनैर् यजेरन् तान् अदीक्षिता याजयेयुः । ३.३.१७; ८.२.२४ सूत्र-द्वित्वबहुत्वयुक्तं चोदनात्

शत १.५.४.७ एको मम । २.१.३२; ५.१.३ स इन्द्रोऽब्रवीत् 'एको मम' अस्माकं 'एका' इति अपरे अब्रुवन् ।

तां १६.५.१२ एका वा अस्योत्तमा स्तोत्रीया उद्गृह्य उद्गायेत । ९.२.१८–पवमान उत्तमस्तृचो भवति–पवमानसाम–७८७–७८९

साम ७८७, ऋ ९.६१.४ पवमानस्य ते वयं, पवित्रमभ्युन्दतः । सखित्वमा वृणीमहे ॥ ये ते पवित्र-
साम ७८८, ऋ ९.६२.५ मूर्मयोऽभिक्षरन्ति धारया । तेभिर् नः सोम मृडय ॥ स नः पुनान
साम ७८९, ऋ ९.६३.६ आभर, रयिं वीरवतीमिषम् । ईशानः सोम विश्वतः ॥ ९.२.१८

तैसं १.८.६ एको रुद्रो न द्वितीयोऽवतस्थे । ९.२.३६ एक एव रुद्रो न द्वितीयाय तस्थे।

तैसं ५.६.२ एतत् खलु साक्षात् अन्नं य एष चरुः, य एनं चरुं उपदधाति । ९.४.५१

तैउ ३.१० एतत् साम गायन् आस्ते । २.१.३७ न्यामा हा ऽ३ वु हा ऽ३ वु हा ऽ३ वु, अहं
तैआ ९.१.४,५ अन्नं, अहं अन्नं, अहं अन्नं । अहं अन्नादो, अहं अन्नादो, अहं अन्नादः । अहं श्लोककृत्, अहं श्लोककृत्, अहंश्लोककृत् । अहमस्मि प्रथमजा ऋता ऽ३ स्य...

ऐब्रा १८.१५ एतद् द्वादशाहिकं अहर् ज्योतिराख्यं आयुराख्यं वा । ७.४.१३ ज्योतिर् गौर् आयुर् इति, आयुर् गौर् गवा ज्योतिः च साकमेधे श्रूयते ।

तैब्रा १.६.७.५ एतद् ब्राह्मण एककपालः । ७.१.२३ वैश्वकर्मण एककपालो भवति ।
एतद् ब्राह्मण ऐन्द्राग्नः, एतद् ब्राह्मण एककपालो यद् ब्राह्मण इतर इतरश्च सूत्रम्–एककपालैन्द्राग्नौ च तद्वत् । ७.१.२२

तैब्रा १.६.७.५ एतद् ब्राह्मण ऐन्द्राग्नः । ७.१.२२

तैब्रा १.६.७.५ एतद् ब्राह्मणानि एव पञ्च हवींषि, यद् ब्राह्मणानि इतराणि । ७.१.१७

मैसं ४.५.६ एतद् वाऽध्वर्योः स्वं यद् आश्रावयति । ३.७.४२

ऐब्रा २.२ एतद् वै दैव्यं मधु यद् घृतम् । १.३.३० आज्यम्

तैसं ६.२.६ एतद् वै प्रतिष्ठितं देवयजनं यत् सर्वतः समम् । ४.२.६ (समे दर्शपूर्णमासाभ्यां यजेत)

मैसं ३.७.४ एतद् वै सर्वदैवतं वासो यत् क्षौमम् । १.४.२९

मैसं २.२.४ एतया निषादस्थपतिं याजयेत् । ६.१.५१; ६.८.२०–२१ लौकिकाग्नौ ।
वास्तुमध्ये रौद्रं चरुं निर्वपेत् । वास्त्वमयं रौद्रं चरुं निर्वपेत् यत्र रुद्रः प्रजाः शमायेत, वास्तोर् वै वास्त्वं जातं, वास्त्वमयं खलु वै रुद्रस्य, स्वेनैव एनं भागधेयेन शमयति, एतया निषादस्थपतिं याजयेत् । कूटं दक्षिणा कर्णौ वा गर्दभः ।

शांखा ब्रा १८.१४ एतया पुनराधेयसंमितया इष्ट्वा अग्निहोत्रं होतव्यम् । ६.५.४२ संस्थिते हि अग्न्याधेये अग्निहोत्रं हूयते ।

तैसं १.६.११ एतया वै दैव्या देवा असुरान् अदभ्नुवन्, तया एव भ्रातृव्यं दभ्नोति । ३.३.१२ न्यामा

मैसं ४.४.९ एतयैव अन्नाद्यकामं याजयेत् । ११.४.९ 'अथैतां दिशां अवेष्टयः, इमं वा अथ तं लोकं उपावरोहन्ति, अवेष्टिः' इति च एकवत् श्रुतेः । एतया ।

तां १६.१.३.४ 'एतस्माद् यज्ञाद् अन्ये यज्ञक्रतवो विह्रियन्ते, यो वै त्रिवृदन्यं यज्ञक्रतुं आपद्यते, स तं दीपयति, यः पञ्चदशं स तं, यः सप्तदशं स तं, य एकविंशं स तं' इति एवं आहुर् एको यज्ञः । ५.३.४०

तैब्रा ३.८.१६.४ एतस्मिन् काले जुहोति ७.३.४ उदिते जुहोति, अनुदिते जुहोति ।

शत ३.६.२.१२ एतस्य खादिर एव (यूपः) कार्यः (वाजपेयस्य) । १२.३.१४

तां १७.७.१ एतस्यैव ( त्रिवृदग्निष्टुदग्निष्टोमस्य एव ) रेवतीषु वारवन्तीयं अग्निष्टोमसाम कृत्वा पशुकामो ह्येतेन यजेत । २.२.२७

शत ४.५.८.१० एतानि ते नामानि १०.३.४९ एता ते अघ्न्ये नामानि इडे रन्ते...

तैसं ३.१.६ एतानि पात्राणि–युनज्मि ते पृथिवीं ज्योतिषा सह इति ध्रुवां अभिमृशति, युनज्मि वायुं अन्तरिक्षेण ते सह इति उपभृतं, वाचं सह दिवा सूर्येण इति जुहूम् ।

तैसं १.६.८ एतानि वै दशयज्ञायुधानि । ३.१.११ स्फ्यश्चकपालानिच ... ।

तैसं २.६.१० एतावता ह एनसा वियुक्तो भवति । ३.४.२४; ४.१.३–अयुक्तो ६.२.२० अयुक्तः । एतावता ह एनसा ( शंयुवाके ) भवति ।

आश्व ४.१.६ एतावतो वृणीते । ३.७.२२ (तान् पुरो अध्वर्युर् विभजति) ( षोडश ऋत्विजः)

तां ६.९.१३ "एते असृग्रमिन्दवः" इति बहुभ्यः प्रतिपदं कुर्यात् । ३.३.१७; ६.२.३

साम ८३० ऋ ९.६२.१ एते असृग्रमिन्दवस्तिरः पवित्रमाशवः । विश्वान्यभि सौभगा ॥ ३.३.१७; ९.३.१५

सत्या १७.४.३८ एतेन राजपुरोहितौ सायुज्यकामौ यजेयाताम् । ३.३.१७; ६.१.२२; १०.२.४१

तां १६.८.१,३ एतेन सहस्रदक्षिणेन यजेत । २.२.२२ ज्योतिः, सर्वज्योतिः, विश्वज्योतिः, साहस्राख्यं च चत्वार एकाहाः ।

तां १६.१.२ एतेनानिष्ट्वा । ( एतेन अनिष्ट्वा ) ५.३ ३७-३८ न्यामा

तां १९.१४.३ एतेनैव त्रीन् याजयेत् । ३.३.१७ तं मरुत्स्तोमेन ।

तां १९.१५.२ एतेनैव द्वौ याजयेत् । ३.३.१७ तं

ऋ १०.९४.२ एते वदन्ति शतवत् सहस्रवत् अभिक्रन्दन्ति हरितेभिरासभिः । विष्ट्वी ग्रावाणः सुकृतः सुकृत्यया, होतुश्चित् पूर्वे हविरद्यमाशत ॥ ३.५.३७; ९.१.९

तैसं ३.४.६ एतेषां राष्ट्रभृतो जुहोति, अभ्यातानां जुहोति । ७.१.१२ एतान् (राष्ट्रभृतो) जुहुयात्, अभ्यातानैर् भ्रातृव्यान् अभ्यातनुते ।

तैसं ३.४ ११ एन्द्र सानसिं रयिं, सजित्वानं सदासहम् । वर्षिष्ठमूतये भर ॥ ( इन्द्रदेवतायाः याज्या ) २.१.१९

तैसं ३.४.११ ( पुरोनुवाक्ये ) प्र ससाहिषे पुरुहूत शत्रून्, ज्येष्ठस्ते शुष्म इह रातिरस्तु । इन्द्राऽऽभर दक्षिणेना वसूनि, पतिः सिन्धूनां असि रेवतीनाम् ॥ २.१.१९

पा ३.३.५६ एरच् । २.१.१ तं इकारान्तात् धातोः भावे अकर्तरि च कारके संज्ञायां अच् प्रत्ययः, चि–चय, जि–जय, क्षि–क्षय, भी–भय ।

ऐब्रा ४.१६ एवंकामाः सत्रं उपेयुः । ६.२.१ अन्नाद्यकामाः सत्रं आसत ।

मनु ३.९३ एवं यः सर्वभूतानि, ब्राह्मणो नित्यमर्चति । स गच्छति परमं स्थानं तेजोमूर्तिः पथर्जुना ॥ ३.१.१३ तं

शत ४.१.१.१४ एवंविद् उद्गाता आत्मने वा यजमानाय वा यं कामं कामयते तं उद्गायति । ३.८.१३-१४ न्यामा

| | |
|---|---|
| तैआ २.१०.१२ | एवं विद्वान् स्वाध्यायं अधीयीत। (स्वाध्यायं अधीयीत) यद् ऋचोऽधीते, यद् यजूंषि, यत् सामानि, यद् ब्राह्मणानि, यद् इतिहासपुराणानि, यत् कल्पान्। १.३.११ तं |
| मैसं १.६.३ | एवं सपत्नं भ्रातृव्यं अवर्तिं सहते। य एवं विद्वान् अग्निं आधत्ते। २.३.४ तं |
| मैसं ३.९.४ | 'एष ते वायो' इति ब्रूयात् (यदि एकं यूपं उपस्पृशेत्) ९.३.८ |
| तां १६.१.२ | एष वाव प्रथमो यज्ञो यज्ञानां यज् ज्योतिष्टोमो, य एतेन अनिष्ट्वा अथ अन्येन यजेत गर्तपत्यं एव तत् प्र वा मीयते। २.४.८; ३.३.३२;५.३.३७ तत् जायते प्र वा |
| तैसं ७.२.१० | एष वै कुणपं अत्ति यः सत्रे प्रतिगृह्णाति, एक एव यजेत। १०.३.४८ एष वै दर्शपूर्णमासयोर् अवभृथः। ७.३.१२,१४ प्राच्यां दिशि देवा ऋत्विजो मार्जयन्ति– |
| तैसं १.७.५ | एष वै दर्शपूर्णमासयोर् अवभृथः। (एतत् तु यथा 'अयं आत्रो यज्ञदत्तस्य पुत्रः' इति।) |
| तैब्रा २.६.२.१ | एष वै दशमस्य अह्नो विसर्गो यत् मानसम्। (विसर्गः=अन्तः) १०.६.३९ अन्तो वा एष यज्ञस्य। |
| तैसं २.५.६ | एष वै देवरथो यद् दर्शपूर्णमासौ, यद् दर्शपूर्णमासौ इष्ट्वा सोमेन यजते रथस्पष्ट एवावसाने वरे देवानां अवस्यति। ४.३.३७; ५.४.५ |
| मैसं १.४.११ | एष वै प्रजापतिः सप्तदशो यज्ञेषु अन्वायत्तः। १०.८.१ |
| तैसं ३.३.४ | एष ह वै हविषा हविर् यजते योऽदाभ्यं गृहीत्वा सोमाय यजते, परा वा एतस्य आयुः प्राण एति योंऽशुं गृह्णाति। (ज्योतिष्टोमे) २.३.२०; ५.३.१५,१६ जुहोति। |
| तैसं ५.५.१ | एषा वा अग्नेः प्रिया तनूर् यद् वैश्वानरः प्रियां एव अस्य तनुं अव रुन्धे। ४.४.१२ |
| काठक सं ९.१५ | एषा वा अनाहिताग्नेर् इष्टिर् यच् चतुर्होतारः। ६.८.२.३; ६,७.८,९ अनुवादे आहिताग्नेः विधिपक्षे अनाहिताग्नेः। |
| तैसं १.७.३ | एषा वै दर्शपूर्णमासयोर् दक्षिणा। ३.४.४९ यद् अन्वाहार्यं आहरति अथो दक्षिणा एव अस्य एषः। |
| तां १७.१.१३ | एषा वै प्रतिष्ठिता बृहती या पुनःपदा। तद् यत् पादं पुनरारभते तस्माद् वत्सो मातरं अभि हिंकरोति। ९.२.२८/१ पुत्रो मातरं अध्येति (प्रगाथे पादः पुनर् गृह्यते) |
| तैसं ७.४.८ | 'एषा वै संवत्सरस्य पत्नी यद् एकाष्टका' इत्युक्त्वा पुनः चतुरहे पुरस्तात् पौर्णमास्यां दीक्षेरन् तेषां एकाष्टकायां क्रयः संपद्यते तेन एकाष्टकां न छंबट् कुर्वन्ति। ६.५.३५ |
| भर १२.१६.६ | एषोऽत ऊर्ध्वं गार्हपत्यो भवति (एष शालामुखीयः अग्निः) १२.१.१२ |
| मैसं ४.६.६ | एषोऽसि, त्वेषोऽसि। १२.४.१ इषोऽसि, त्वेषोऽसि। |
| तैसं ३.२.५ | एहि वसो पुरोवसो प्रियो मे हृदोऽसि। अश्विनोस्त्वा बाहुभ्यां सघ्यासम्। नृचक्षसं त्वा देव सोम सुचक्षा अवख्येषम्। ३.२.२५,२६,१०.५.८८ |

| | |
|---|---|
| शत ३.९.१.६-२१ | ऐकादशिना आवर्तन्ते ( दण्डकलितवत् )–वारुणं अन्ततः पुनः पर्यावृत्तेषु आग्नेयं एव प्रथमेऽहनि आलभेत...आग्नेयं प्रथमं पशुं आलभते ६, अथ सारस्वतं ७, अथ सौम्यं ८,९, अथ पौष्णं १०, अथ बार्हस्पत्यं ११,१२, वैश्वदेवं १३,१४, ऐन्द्रं १५,१६, मारुतं १७,१८, ऐन्द्राग्नं १९ सावित्रं २०, वारुणं अन्ततः २१, एवं एव सर्वत्र सदा क्रमः स्यात् । १०.५.८७ |
| वाराह ३.२.३.४१, ४५ | ऐकादशिनान् प्रायणीयोदयनीययोर् आलभेरन् । १०.६.६,७ न्यामा अन्वहं एकैकं आलभेत । ८,९,१० ( प्रायणीये पञ्च, उदयनीये षड् । ) |
| तैसं ६.६.४ | ऐकादशिनेषु सौत्यस्य द्वैरशन्यस्य दर्शनात्–सूत्रं–८.१.१४ आग्निष्ठाद् द्वे द्वे रशने आदाय द्वाभ्यां रशनाभ्यां एकैकं यूपं परिव्ययति– |
| तैसं ६.२.५ | ऐकाहिकं त्र्युपसत्त्वं स्यात् । ७.४.१४ तिस्र एव साह्नस्य उपसदः । |
| कात्या ५.५.२१,२२ | ऐडानि अवदेयानि । ५.२.११ सौविष्टकृतानि अवदाय नैव जुहोति ऐडानि अवदेयानि । |
| मैसं ४.३.८ | ऐन्द्रं एकादशकपालो राज्ञो गृहे । ११.२.१३ |
| तैसं २.५.४ | ऐन्द्रं दधि अमावास्यायाम् । २.२.३; ३.६.२९ |
| तैसं २.२.१ | ऐन्द्रं एकादशकपालं निर्वपेद् आग्नेयवत् । ८.१.३२ आग्नेयविधिना । सूत्रं-विप्रतिपत्तौ हविषा नियम्येत । |
| तैसं २.२.१ | ऐन्द्रं एकादशकपालं निर्वपेत् प्रजाकामः । १०.५.५८; ८.१.३२ |
| तैब्रा ३.७.१.८ | ऐन्द्रं पञ्चशरावम् । ६.४.२८-२९ न्यामा |
| तैब्रा ३.७.४.२ | ऐन्द्रं पयः । ८.१.१२ अव्यक्तासु तु सोमस्य ( विधिः ) ८.१.१६ देवतायाः अनिर्देशः अव्यक्तं ... ऐन्द्रं पयः शांखा ५.४ |
| तैसं ६.४ ८ | ऐन्द्रवायवं गृहीत्वा मैत्रावरुणं गृह्णाति । तस्माद् ऐन्द्रवायवः पूर्वो मैत्रा-वरुणाद् गृह्यते । |
| तैसं ७.२ ८ | ऐन्द्रवायवं गृह्णाति । २.२.१७,१८; ३.५.९; १०.७.२; १०.४.३ ऐन्द्र-वायवग्रहणं चोदितम् । ऐन्द्रवायवो गृह्यते । |
| तैसं ७.२.७ | ऐन्द्रवायवं अग्रं कुर्यात् १०.५.६२ ऐन्द्रवायवाग्रं गृह्णीयात् । |
| वाराह ३.२.२.३९ | ऐन्द्रवायवस्य वा एतद् आयतनं यद् चतुर्थं अहः । १०.५.८० समूढे एव । |
| मैसं ४.६.२ | ऐन्द्रवायवोऽपि अपूर्वः सोऽपि पयसा श्रपयितव्यः प्राप्नोति । ( अपूर्वः मैत्रा-वरुणवत् ) अपूर्वो हि ऐन्द्रवायवः तस्माद् अपूर्वत्वात् व्यवस्था स्यात्–सूत्रं–९ १.१४ ( ऐन्द्रवायवे पुरोडाशं आदधाति मैसं ४.६.२ ) |
| तैसं ६.४.७ | ऐन्द्रवायवाग्रं गृह्णाति । १०.५.६२ ऐन्द्रवायवाग्रा ग्रहा गृह्यन्ते । |
| तैसं ७.२.८ | ऐन्द्रवायवाग्रं प्रथमं अहः अथ शुक्राग्रम् । १०.५.८३ |
| तैसं ६.४.७ | ऐन्द्रवायवाग्रा ग्रहा गृह्यन्ते । १०.५.६२-६४ न्यामा |
| तैसं ७.२.७ | ऐन्द्रवायवाग्रान् कुर्यात् । १०.५.६२ ऐन्द्रवायवाग्रान् गृह्णीयात् । |
| तैसं ७.२.७ | ऐन्द्रवायवाग्रान् ग्रहान् गृह्णीयात् यः कामयेत यथापूर्वं प्रजाः कल्पेरन् । १०.५.६५ |
| वाराह ३.२.२.४० | ऐन्द्रवायवाग्रौ प्रायणीयोदयनीयौ, अथैतरेषां दशानां अह्नां ऐन्द्रवायवाग्रं प्रथमं अहः, अथ शुक्राग्रं, अथ द्वे आग्रयणाग्रे, अथ ऐन्द्रवायवाग्रं, अथ द्वे शुक्राग्रे, अथ आग्रयणाग्रं, अथ द्वे ऐन्द्रवायवाग्रे । १०.५.७९,८८ |

बाराइ ३.२.२.२९ ऐन्द्रवायवाग्रौ प्रायणीयोदयनीयौ, दशमं च अहः (ऐं.) अथ इतरेषां नवानां अह्नां ऐन्द्रवायवाग्रं प्रथमं अहः, अथ शुक्राग्रं, अथ आग्रयणाग्रं, अथ ऐन्द्रवायवाग्रं, अथ शुक्राग्रं, अथ आग्रयणाग्रम्। अथ ऐन्द्रावायवाग्रं, अथ शुक्राग्रं, अथ आग्रयणाग्रम्। १०.५.७७, ७९,८०

शांखा श्रा १४.२ ऐन्द्रवायवाद्या ग्रहाः प्रातःसवने दश आम्नाताः ३.६.३० (ग्रहधर्माश्च अन्यत्र)

तैब्रा १.८.५.६ ऐन्द्रवायवाद्या ग्रहाः प्रातःसवने तद्वत् माध्यन्दिनसवने तृतीयसवने च ग्रहाम्नानम्। ३.६.३०

तैब्रा १.८.६.३ ऐन्द्रवारुणसावित्राः पुरोडाशाः आश्विनसारस्वतसुत्रामदेवताकेषु पशुषु नोत्कृष्यन्ते, संस्कारपक्षे उत्कृष्येरन्। (पुरोडाशमान् एव पशुः) छिद्रापिधानार्थीयाश्च उक्तं अर्थवादत्वम्। १०.१.२२

शत ४.२.५.१४ ऐन्द्रः षोडशिनि तृतीयः। ३.६.४५

तैसं ६.४.४ ऐन्द्रः सोमो गृह्यते मीयते च। ३.२.२८,३८ इन्द्राय इन्द्राय त्वा इति मिमीते इन्द्राय हि सोम आह्रियते।

शत ४.२.५.१४ ऐन्द्राग्नः उक्थ्ये द्वितीयः। ३.६.४५

तैब्रा १.६.७.५ ऐन्द्राग्न एककपालः। ७.१.२२ एककपाल ऐन्द्राग्नौ च तद्वत् (यद्वत् पञ्च सञ्चराणि)

तैसं १.८.७ ऐन्द्राग्न एकादशकपालः, इन्द्राय वृत्रघ्ने चरुः, वैश्वकर्मण एककपालः। ७.१.२२

मैसं २.१.१ ऐन्द्राग्नं कर्म वियातसजातस्य-ऐन्द्राग्नं एकादशकपालं निर्वपेद् यस्य सजाता वीयायुः। तत्र ऐन्द्राग्नस्य याज्यानुवाक्या। ३.३.१२

मैसं ४.१०.१०० इन्द्राग्नी रोचना दिवः, परिवाजेषु भूषथः। तद्वाञ्चेति प्रवीर्यम्॥

मैसं ४.१०.१०१ प्र पृथिव्या रिरिचाथे दिवश्च। प्र सिन्धुभ्यः प्र गिरिभ्यो महित्वा, प्रेन्द्राग्नी विश्वा भुवनात्यन्यो प्र चर्षणिभ्यः पृतना हवेषु॥ ३.३.१२

मैसं २.१.१ ऐन्द्राग्नं कर्म भ्रातृव्यवतः - ऐन्द्राग्नं एकादशकपालं निर्वपेद् भ्रातृव्यवान्। ३.३.१२

मैसं ४.१०.१२५ऋ६.१२.६ इन्द्राग्नी नवतिं पुरो, दासपत्नीर् अधूनुतम्। साकमेकेन कर्मणा॥

तैसं १.१.१४ मैसं ४.१०.१२६ श्नथद्वृत्रमुत सनोति वाजमिन्द्रा यो अग्नी सहुरी सपर्यात्। इरज्यन्ता

ऋ ६.६०.१ वसव्यस्य भूरेः, सहस्तमा सहसा वाजयन्ता॥ ३.३.१२

तैसं ४.२.११ ऋ ८.९३.७ तमिन्द्रं वाजयामसि।

मैसं ४.१०.१२७

तैसं ६.५.४ ऐन्द्राग्नं (ग्रहं) गृह्णाति। ३.२.४० ऐन्द्राग्नं ऋतुपात्रेण गृह्णाति।

शत ४.२.५.१४ ऐन्द्राग्नं द्वितीयं उक्थ्ये, ऐन्द्रं वृष्णिं तृतीयं षोडशिनि। ३.६.४२

तैसं २.२.१ ऐन्द्राग्नं एकादशकपालं निर्वपेत् प्रजाकामः। २.३.२५; ४.३.२७/२; ५.४.२२; ६.३.८; ८.१.११; ९.३.१; १०.७.५८; ११.१.१८

मैसं २.१.१ ऐन्द्राग्नं एकादशकपालं निर्वपेत् भ्रातृव्यवान्। ३.२.२०; ३.३.१२

मैसं २.१.१ ऐन्द्राग्नं एकादशकपालं निर्वपेत् यस्य सजाता वीयायुः। ३.२.२०; ३.३.१२

मैसं ३.९.५ ऐन्द्राग्नः पशुः उक्थ्ये आलभ्यः, ऐन्द्राग्नानि हि उक्थ्यानि। ३.६.१८

| | |
|---|---|
| शत १.६.४.३ | ऐन्द्राग्नो द्वादशकपालः पुरोडाशो भवति । ८.१.११ दर्शपूर्णमासविध्यन्तः । |
| मैसं १.१०.१ | ऐन्द्राग्नो द्वादशकपालो मारुत्यामिक्षा । ७.१.२२ वरुणप्रघासेषु ( एकादश-कपालः तैसं १.८.३ ) |
| तैसं १.८.८ | ऐन्द्रापौष्णं चरुम् । २.१.१७ तं राजसूये । द्विदेवतत्वसामान्यत्वेन अग्नीषो-मीयविध्यन्तः । |
| तैब्रा ३.८.२३.२ | ऐन्द्रो राजन्यः । १.४.२४ |
| मैसं ३.९.५ | ऐन्द्रो वृष्णिः षोडशिनि आलभ्यः, ऐन्द्रो हि वृष्णिः, ऐन्द्रः षोडशी । ३.६.१८; ९.१.४५ |
| मैसं ३.२.४ | ऐन्द्र्या गार्हपत्यं उपतिष्ठते । ३.२.३; ३.३.११,१४ |
| अवभृथसाम १८१३-१८१५ ऋ १.१२७.१,२,३ | ऐन्द्र्या अवभृथसाम गायति ( क्वचिद् भवतिवचनम् ) शीतकर्मा हि इन्द्रः । ९.४.३४ तस्मात् 'तपति' स्तोमो न स्यात् । |
| तैसं ३.१.६ | ऐन्द्र्या सदो, वैष्णव्या हविर्धानम् । ३.२.२१ |
| ऋ ३.६.९ | ऐभिरग्ने सरथं याह्यर्वाङ् नानास्यं वा विभवो ह्यश्वाः । पत्नीवतस्त्रिंशतं त्रींश्च देवान्, अनुष्वधमावह मादयस्व ॥ ३.२.३७ ( एभिर् अग्ने आयाहि ) |
| तां ८.६.१० | ऐरं कृत्वा उद्गेयम् । ( आयीरायी ) ९.१.५३ |
| तां ८.६.१० | ऐरवत् । १२.३.२० |
| तैसं १.८.१ | ऐष्टिकेषु अनुमत्यादिषु । १०.१.५ अनुमत्यै पुरोडाशं अष्टाकपालं निर्वपति । |
| आर्षेय ब्रा २.६.६ | 'ओ ओ हो हायी' इति स्तोमो वामदेव्यसाम्नः 'कयानश्चित्र' इति योनौ द्वयोर् अर्धयोर्मध्ये 'कयाशयि वार्तों हायि ।' ९.२.३४-३८ न्यामा |
| साम ४४८ आर्षेय ४.११.२ | ओझायी । ९.२.३९ |
| तैब्रा १.१.९.८ | ओदनं पचति । ५.१.२ |
| शत २.४.३.१३ | ओदनं पचेत् । ७.४.१ ओदनं अन्वाहार्यपचने पचेयुः, तं ब्राह्मणा अश्नीयुः । |
| आप ८.१०.७ | ओदनान् उद्धरति । ११.१.४६ यावतो यजमानस्य अमात्याः ( सहचराः ) तावतो ओदनान् उद्धरति । |
| शत ४.४.२.१ | ओदने हि चरुशब्दः प्रसिद्धः, आ हिमवतः आ च कुमारीभ्यः । १०.१.४२ ओदनो हि चरुः, ओदनो हि प्रत्यक्षं अन्नम् । |
| जैब्रा १.१७५ | ओ यिरा यिरा चा दाक्षसा । ९.१.५७ इरागानम् । |
| मैसं १.४.११ | ओ श्रावय इति चतुरक्षरं, अस्तु श्रौषट् इति चतुरक्षरं, यज इति द्व्यक्षरं, ये यजामहे इति पञ्चाक्षरं, द्व्यक्षरो वषट्कारः । एष वै प्रजापतिः सप्तदशो यज्ञे अन्वायत्तः । १०.८.१ |
| मैसं १.१०.७ | ओषधिषु एव पशून् प्रतिष्ठापयति, वृष्ट्यैव पशून् अभिजिघ्रति । १०.४.५७ |
| तैसं १.२.१ | ओषधे त्रायस्व एनम् । १.२.३५,४६ |
| आप १६.२६.२ | औदुम्बरं उलूखलं सर्वौषधस्य पूरयित्वा अवहन्ति । ( सकृत ) ११.१.२८ |
| तां १८.३.१०-१२ जैब्रा २.१५९ | औदुम्बरः सोमचमसो दक्षिणा सप्रियाय सगोत्राय ब्रह्मणे देयः । १०.३.६८,७२ |
| तैसं ६.२.१० | औदुम्बरीसंमानम् । १०.२.४७ यजमानेन संमिता औदुम्बरी भवति । |
| ला २.६.२ | औदुम्बरीं स्पृष्ट्वा उद्गायेत । १.३.३ |

ला २.६.२ — औदुम्बरीं स्पृष्ट्वा अनपाश्रित उद्गाता उद्गायेत। ९.२.११

-तैसं २.१.१ मैसं २.५.१ — औदुम्बरो यूपो भवति, ऊर्ग्वा उदुम्बरः, ऊर्क् पशवः ऊर्जैवास्मा ऊर्जं पशून् आप्नोति। ऊर्जोऽवरुध्यै। १.२.१९

ला २.६.२ — औदुम्बर्याः सर्ववेष्टनं। श्वोभूते सुत्येऽहनि उद्गाता तां औदुम्बरीं ऊर्ध्वाग्रैः कुशैर् वेष्टयित्वा एवंजातीयेनैव वसनेन प्रदक्षिणं ऊर्ध्वदशेन परिवेष्ट्य स्पृष्ट्वा अनपाश्रित उद्गायेत।

औद्गात्रं उद्गात्रा। (आध्वर्यवं अध्वर्युणा, हौत्रं होत्रा) ३.७.४० सूत्रं

पा ५.१.१२९ — विशिष्टपुरुषसंयोगात् कर्मणो व्यवस्था स्यात् संयोगस्य अर्थवत्त्वात्। प्राणभृज् जातिवयोवचनोद्गात्रादिभ्यो अञ् भावकर्मणोः।

कात्या २२.३.२२ — औद्गात्रे समाख्यातः श्येनः। ३.७.५०,५१ सूत्रं तद्ग्रहणात् वा स्वधर्मः स्यात् अधिकारसामर्थ्यात् सहाङ्गैर् अव्यक्तः शेषे यथा श्येने 'कण्टकैर् वितुन्दन्ति' इति उद्गातारो वितोत्स्यन्ति।

तैब्रा ३.२.१.३ — औपवसथ्येऽहनि शाखाहरणादीन् समामनन्ति। प्राचीं उदीचीं (शाखां) आहरन्ति। पूर्वेद्युः। ३.६.२८

तां ७.५.१९,२० — औशनं अन्त्यं त्रिष्टुप्सु। ९.२.२५/२। वायुर् वा उशनः न तस्य एतद्

७.५.१९१२ — औशनं, उशना वै काव्यो असुराणां पुरोहितः आसीत्, तं देवाः कामदुघाभिर् उपामन्त्रयन्त, तस्माद् एतानि औशनानि। ९.२.२५

औशनं साम ६७७ — प्र तु द्रव परि कोशं नि षीद नृभिः पुनानो अभि वाजमर्ष।

ऋ ९.८७.१ — अश्वं न त्वा वाजिनं मर्जयन्तोऽच्छा बर्ही रशनाभिर् नयन्ति॥

साम. ६७८ — स्वायुधः पवते देव इन्दुरशस्तिहा वृजना रक्षमाणः।

ऋ ९.८७.२ — पिता देवानां जनिता सुदक्षो विष्टम्भो दिवो धरुणः पृथिव्याः॥

साम. ६७९ — ऋषिर् विप्रः पुर एता जनानां ऋभुर् धीर उशना काव्येन।

ऋ ९.८७.३ — स चिद् विवेद निहितं यदा सामपीच्यं गुह्यं नाम गोनाम्॥ ९.२.२५/२

तैसं १.३.४; १.३.५ १.१.१० — औषधधर्माः – (अवहननं, प्रोक्षणं, निर्वपनं) पूर्वं समाख्याताः, ततः आज्यधर्माः – (उत्पवनं विलापनं ग्रहणासादनम्। ३.१.७)

तैब्रा २.२.५.५ — क इदं कस्मा अदात्। ३.४.२८ तं

ऋ ६.४७.१५ — क ईं स्तवत् कः पृणात् को यजाते यदुग्रमिन् मघवा विश्वहावेत्। पादाविव प्रहरन् अन्यमन्यं, कृणोति पूर्वमपरं शचीभिः॥ १०.३.१५

ऋ १०.५४.३ — क उ नु ते महिमनः समस्यास्मत् पूर्व ऋषयोऽन्तमापुः। यन् मातरं च पितरं च साकं अजनयथास्तन्वः स्वायाः॥ १०.३.१५

तां ८.५.१ — ककुभि पौष्कलं सफं उष्णिहि पौष्कलम् – सफं ९.२.२८/३ उष्णिक्ककुभौ एते भवतः (तां ८.५.१) अत्रापि 'अभ्यर्हितं' इति उष्णिक् शब्दस्य पूर्वनिपातः। अतः 'पवस्व मधुमत्तम' 'इन्द्रमच्छ सुता' इत्येते ककुबुष्णिहौ भवतः। एकं अपि एकस्यां ऋचि, अपरं अपि एकस्यां ऋचि, ते द्वे ककुबुष्णिहौ सा एका जगती।

साम ५७८ ऋ ९.१०८.१ — पवस्व मधुमत्तम इन्द्राय सोम क्रतुवित्तमो मदः। महि द्युक्षतमो मदः॥ ककुभि सफं

साम ५६६ ऋ ९.१०६.१ — इन्द्रमच्छ सुता इमे वृषणं यन्तु हरयः। श्रुष्टे जातास इन्दवः स्वर्विदः॥

मैसं १.११.७ — ककुभो राजपुत्रः प्राश्नाति ध्रुवपोषः। १०.७.८ ककुभो भक्षं दर्शयति।

काठक सं २१.४ / तैसं ५.४.१ — कंकचितं चिन्वीत शीर्षचितं चिन्वीत यः कामयेत सुशीर्षा अस्मिन् लोके संभवेयम्। १०.८.२६

आप १०.१.३ — कच्चित् कल्याणी दक्षिणा। १०.२.३४ श्यामा वरणकाले ऋत्विजां प्रश्नः।

कात्या २२.३.२२ — 'कण्टकैर् वितुदन्ति' इति उद्गातारो वितोत्स्यन्ति। ३.७.५१ दक्षिणाकाले कण्टकैर् एना विरूजयेयुः उद्गातारः (समाख्यया)

तां १०.४.७ — कण्वरथन्तरं पृष्ठं भवति। १०.४.४३ तेजो वा एतद् रथन्तरस्य यत् कण्वरथन्तरं पृष्ठम्।

साम ६८० ऋ ७.३२.२२ — कण्वरथन्तरं पृष्ठं–अभि त्वा शूर नोनुमोऽदुग्धा इव धेनवः। ईशानमस्य जगतः स्वर्दृशं ईशानमिन्द्र तस्थुषः॥ १०.४.४३

साम ६८१ ऋ ७.३२.२३ — न त्वा वाँ अन्यो दिव्यो न पार्थिवो न जातो न जनिष्यते। अश्वायन्तो मघवन्निन्द्र वाजिनो गव्यन्तस्त्वा हवामाहे॥ १०.४.४३

साम ६८०,६८१ — कण्वरथन्तरं स्वयोन्युत्तरयोर् गीयते। १०.४.४८ योनिः २३३/६८० उत्तरयोः ६८०,६८१ साम्नोर् गीयते।

तां १४.३.१५ — कण्वरथन्तरं भवति तत्र 'पुनानस्सोम धारया' तृचः। ६७५-६

साम कण्वरथन्तरं ६७५ ऋ ९.१०७.४ — पुनानः सोम धारयापो वसानो अर्षसि। आ रत्नधा योनिं ऋतस्य सीदस्युत्सो देवो हिरण्ययः॥

साम ६७६ ऋ ९.१०७.५ — दुहान ऊधर् दिव्यं मधु प्रियं प्रत्नं सदस्थमासदत्। आपृच्छ्यं धरुणं वाज्यर्षसि नृभिर् धौतो विचक्षणः॥ अत्र ५११/६७५ योनिः, ६७५, ६७६ उत्तरयोः।

तैब्रा १.५.११.१ — कतमानि वा एतानि ज्योतींषि, ये एतस्य स्तोमाः, त्रिवृत् पञ्चदश सप्तदश एकविंशाः एतानि वा ज्योतींषि, तानि एतस्य स्तोमाः। ४.४.४०

तैसं १.४.२२ — 'कदाचन स्तरीरसि नेन्द्रसश्चसि दाशुषे' इति ऐन्द्या (गार्हपत्यं उपतिष्ठते) ३.३.१४

तैसं ६.६.११ — कनीयांसि वै देवेषु छन्दांसि आसन्, ज्यायांसि असुरेषु।

तैसं १.६.९ — कपालानि उपदधाति। ५.२.४ कपालानि च उपदधाति।

तैसं २.६.३ — कपाले नष्टे यजेत। ११.१.१ यदि नश्येत् आश्विनं द्विकपालं निर्वपेद् द्यावापृथिव्यं एककपालम्।

तैसं १.६.९ ब्रा ३.२.८.६ — कपालेषु पुरोडाशं श्रपयति। ४.१.२६ (कपालेषु) पुरोडाशं अधिश्रयति

तैब्रा ३.२.८.६ — कपालेषु श्रपयति। १.४.९; ३.१.११; ४.१.८

वासं २४.२० — कपिञ्जलान् आलभते। ११.१.३८ वसन्ताय कपिञ्जलान् आलभते।

कपिञ्जलन्यायः। जैसू ४.१.११-१६

वाराह गृ. ६.३९ — कम्बलं परिधत्ते। १०.४.१४; १२.३.२ कम्बलं ऐणेयं ब्राह्मणस्य।

बृहत्साम ६८२ ऋ ४.३१.१ — कया नश्चित्र आ भुवदूती सदावृधः सखा। कया शचिष्ठया वृत॥

साम ६८३ ऋ ४.३१.२ — कस्त्वा सत्यो मदानां मंहिष्ठो मत्सदन्धसः। दृढा चिदारुजे वसु॥

साम ६८४ ऋ ४.३१.३ — अभी षु णः सखीनामविता जरितॄणाम्। शतं भवास्यूतये॥

पा २.३.१८ — करणे तृतीया एत्र एषा। (वारवन्तीयेन) २.२.२७ तं कर्तृकरणयोस्तृतीया।

मैसं ३.१३.४ वासं २४.३ कर्णा याम्याः, अवलिप्ता रौद्राः, नभोरूपाः पार्जन्याः । ४.१.१६ यामाः

शत १३.२.३.२ ऐन्द्राग्नो दशमः । शत–ऐन्द्राग्नस्य वपायां हुतायां तदनु इतरा जुहुयुः।

वासं२४.१०शत१३.२.५.१ कृष्णा भौमा, धूम्रा अन्तरिक्षा, बृहन्तो दिव्याः, शबला वैद्युताः, सिद्धाः स्तारकाः इति प्रकृत्या आह, अर्धमासानां वा एतद् रूपं यत् पञ्चदशिनः। ४.१.१६

मैसं ४.२.९ कर्तरीकर्ण्यः कर्तव्याः इति गोलक्षणानि अपि एवं एव । ४.१.३ कर्करीकर्णो जमदग्नेः ।

पा ३.४.६७ कर्तरि कृत् । ३.४.१३ तं कृत्संज्ञकाः प्रत्ययाः कर्तरि कारके भवन्ति ।

पा ३.१.६८ कर्तरि शप् । ३.४.१३ कर्तृवाचिनि सार्वधातुके परतो धातोः 'शप्' प्रत्ययो भवति । पित् स्वरार्थः, शित् सार्वधातुकार्थः, 'अ' प्रत्ययः

पा १.४.४९ कर्तुर् ईप्सिततमं कर्म । २.१.१२

पा २.३.१८ कर्तृकरणयोस्तृतीया । ३.४.१३ तं

पा १.३.७२ कर्त्रभिप्राये हि कर्मफले । २.३.४ स्वरितञितः कर्त्रभिप्राये कर्मफले आत्मनेपदम् ।

पा १.३.१२,७२ कर्त्रभिप्रायं क्रियाफलं गम्यते । ३.८.४

पा २.३.२ कर्मणि द्वितीया । २.१.१२

पा ३.१.६७ कर्मणि यक् । ३.४.१३ सार्वधातुके यक् । भावकर्मवाचिनि सार्वधातुके परतो धातोर् यक् प्रत्ययो भवति ।

पा ३.२.९१; ६.१.७१ कर्मणि हि कारके चिनोतेः क्विप् प्रत्ययः स्मर्यते । १.३.३३ तं (ह्रस्वस्य पिति किति तुक्) सोमसुत् अग्निचित् प्रकृत्य ।

पा ३.२.९१,९२ कर्मण्यग्न्याख्यायां चेः क्विप् । १.३.२३तं । कर्मणि उपपदे चिनोतेः कर्मण्येव क्विप् ।

आपध २.५.११,१२,१३ कर्मप्रजासंपन्ने दारे नान्यां (जायां) कुर्वीत, अन्यतरापाये अन्यां कुर्वीत । ८.३.१८

तैसं ६.१.१०.१ कलया ते क्रीणामि (सोमं) ११.२.५९ कलया ते शफेन ते क्रीणानि।

पा ४.२.८ कलेर् ढक् । १.३.२४ तं कालेयः (आग्नेयः–अग्नेर् ढक्)

तां ११.४ २ कवतीशब्दः ऋच एव । ७.२.२१ 'कयानश्चित्र' साम ६८२-६८४ । 'क' अक्षरयुक्ताः ऋचः

तां ११.४.२ कवतीषु रथन्तरं गायति । ७.२.१,२,३,८,९,१२,२१; ९.२.२,३२,३४ 'क' अक्षरयुक्तासु ऋक्षु रथन्तरगीत्या गायति ।

तां ११.४.२ साम ६८२.४ कवतीषु स्तुवते । २.१.२४ 'क' अक्षरयुक्तासु ६८२-६८४ गायति ।

तैसं १.५.१० कस्त्वा युनक्ति स त्वा युनक्ति । १२.२.१३ कस्त्वा युनक्ति स त्वा युनक्तु

ऋ १०.१२१.१-९ कस्मै देवाय हविषा विधेम । १०.३.१५ इति एकस्मै देवाय । इत्यर्थः। एकारलोपेन एतच्छब्दविज्ञानात् एतत् प्रत्ययो भवति । (यथा-आत्मना -त्मना)

पा ४.३.२०,५३ काकुभः । तस्य इदमर्थे अण्, अथवा 'तत्रभवः' इत्यर्थे अण् । ककुभ् + अण = काकुभः ।

साम ६८०,६८१ काकुभः प्रगाथः प्रथमः–बृहती 'अभि त्वा शूर'। पङ्क्तिः–प्रत्यावान् अन्यो द्वियोः तयोः प्रग्रथनेन तृचकर्म कृत्वा ककुबुत्तराकारं गानं कर्तव्यम्। ९.२.२५

साम ८०९,८१० काकुभः प्रगाथो द्वितीयः–बृहती 'त्वामिद्धि हवामहे' पङ्क्तिः 'स त्वं नश्चित्र'
तां ८.२.१ काण्वं भवति। १०.४.१६,१७/१,१७/२,१८ आष्कारणिधनं काण्वं प्रतिष्ठाकामस्य ब्रह्मसाम (सायण ६८५,६८६)

काण्वं साम ६८५ तं वो दस्ममृतीषहं वसोर् मन्दानमन्धसः। अभि वत्सं न स्वसरेषु धेनव
ऋ ८.८८.१ इन्द्रं गीर्भिर् नवामहे॥

वसिष्ठस्य साम ६८६ द्युक्षं सुदानुं तविषीभिरावृतं गिरिं न पुरुभोजसम्। क्षुमन्तं वाजं शतिनं
ऋ ८.८८.२ सहस्रिणं मक्षू गोमन्तमीमहे॥

तां १४.४.४ काण्वं भवति। १०.४.१६,१७/१,१७/२,१८ अभिनिधनं काण्वं भवति 'वयं घ त्वा' इति तृचे ८६४-६६

साम ५७;८६४ ऋ ८.३३.१ वयं घ त्वा सुतावन्त आपो न वृक्तबर्हिषः। पवित्रस्य प्रस्रवणेषु वृत्रहन् परि स्तोतार आसते॥

साम ५८;८६५ ऋ ८.३३.२ स्वरन्ति त्वा सुते नरो वसो निरेक उक्थिनः। कदा सुतं तृषाण ओक आ गमदिन्द्र स्वब्दीव वंसगः॥

साम५९;८६६ ऋ ८ ३३.३ कण्वेभिर् धृष्णवा धृषद् वाजं दर्षि सहस्रिणम्। पिशङ्गरूपं मघवन् विचर्षणे मक्षू गोमन्तमीमहे॥

भर ११.१२.१६ कामं तु यो अनूचानः श्रोत्रियः स्यात् तस्य प्रवृज्यात्। ३.३.३३ तं.

पा ३.३.५३ कामप्रवेदने धातोर् लिङ्। २.३.१ यदि ऐन्द्रवायवान् ग्रहान् ग्रहीतुं इच्छेत् ततो रथन्तरसामानं क्रतुं कुर्यात्।

आप १.१६.२ कांस्येन ब्रह्मवर्चसकामस्य अपः प्रणयेत। ४.३.४ कंसेन कांस्यभोजिन्यायः–
सत्या १.४.४४ शिष्यस्य कांस्यभोजित्वनियमः, उपाध्यायस्य न नियमः, यदि तयोर् एकस्मिन् पात्रे भोजनं आपद्येत अमुख्यस्य अपि शिष्यस्य धर्मो (नियमो) नियम्येत। १२.२.३४

तैब्रा १.६.४.५ काय एककपालः। ७.१.२२ (प्रजापतये)

मैसं २.४.८ कारीर्या वृष्टिकामो यजेत। ६.२.१३-१५ न्यामा. यत् कारीर्या याजयन्ति वृष्ट्यै अन्नाद्यस्य अव रुन्धे।

मनुस्मृ २.४४ कार्पासमुपवीतं स्याद् विप्रस्योर्ध्ववृतम् त्रिवृत्। शणसूत्रमयं राज्ञो वैश्यस्याविकमेव च। त्रिवृता ग्रन्थिनैकेन त्रिभिः पञ्चभिरेव वा। १.३.९ तं.

पा. २.२.२८ वा कालसंयोगे पञ्चमी, न अपादाने। १०.५.४७ आग्रयणाद् गृह्णाति षोडशिनम्। आग्रयणानन्तरं षोडशिनं गृह्णाति।

तां ११.४.५,१० कालेयं साम, अच्छावाकपृष्ठं (तस्य सप्तदशस्तोत्रीयाः) (तां. २.७.१-विष्टुत्या, प्रगाथं कृत्वा)

कालेयं साम ६८७ तरोभिर् वो विदद् वसुमिन्द्रं स बाध ऊतये। बृहद् गायन्तः सुतसोमे अध्वरे
ऋ. ८.६६.१ हुवे भरं न कारिणम्॥

साम ६८८ न यं दुध्रा वरन्ते न स्थिरा मुरो मदेषु शिप्रमन्धसः। य आदृत्या शशमानाय
ऋ ८.६६.२ सुन्वते दाता जरित्र उक्थ्यम्॥

| | |
|---|---|
| तां ८.५.१४ | कावं अन्त्यं जगतीषु । ९.२.२५/३ कावे तिस्रो जगत्यः । ९.२.२८/३ 'अभि प्रियाणि पवते' इति कावं प्राजापत्यं ७००–७०२ |
| कावं साम ७०० | अभि प्रियाणि पवते चनोहितो, नामानि यह्वो अधि येषु वर्धते । |
| ऋ. ९.७५.१ | आ सूर्यस्य बृहतो बृहन्नधि, रथं विष्वञ्चमरुहद् विचक्षणः ॥ |
| साम ७०१ | ऋतस्य जिह्वा पवते मधु प्रियं, वक्ता पतिर् धियो अस्या अदाभ्यः । |
| ऋ. ९.७५.२ | दधाति पुत्रः पित्रोरपीच्यां ≡ नाम, तृतीयमधि रोचने दिवः ॥ |
| साम ७०२ | अव द्युतानः कलशाँ अचिक्रदन्नृभिर् येमानः कोश आ हिरण्यये । |
| ऋ. ९.७५.३ | अभी ऋतस्य दोहना अनूषताधि त्रिपृष्ठ उषसो वि राजसि ॥ ९.२.२८/३ |
| ऋ. ३.५३.१४ | किं ते कृण्वन्ति कीकटेषु गावो, नाशिरं दुह्रे न तपन्ति घर्मम् । आ नो भर प्रमगन्धस्य वेदो, नैचाशाखं मघवन् रन्धया नः ॥ १.२.३९ |
| तैसं १.३.२ | 'किमत्र' इति अध्वर्युर् यजमानं आह । 'भद्रं' इति यजमानः, 'तन्नौ सह' इति अध्वर्युराह । ३.८.२९ |
| तैब्रा १.६.१०.१ | किमभिघारयितव्यास्त्रैयम्बकाः (उत) नाभिघारयितव्याः । १०.८.८ |
| माश्रौ १.२.२.१७ | 'कुक्कुटोऽसि' इति अश्मानं आदत्ते कुटरुरसीति वा । २.४.३१ |
| मैसं १.१.६ | कुटरुरसि मधुजिह्वः । २.४.३१ |
| पाम १.१.१ | कुत्वं कस्मान्न भवति । १.३.२४ तं. (वृद्धिरादैच् इत्यत्र ऐच्–क्–चोः कुः झलि पदान्ते चे । (पा. ८.४.३०) अनुबन्धत्वात् । |
| तां २५.४.१ | कुण्डपायिनां अयनम् । ८.२.२९,३१ |
| तां १९.१५.१.२ | कुलायादौ यजमानद्वित्वम् । ३.३.१९ तं. |
| काठक सं १२.१० | कुवलसक्तुभिः आश्विनं श्रीणाति । ८.२.४ (बदरसक्तुभिर् ऐन्द्रं, कर्कन्धुसक्तुभिः सारस्वतं–सौत्रामण्यां) |
| लिखितस्मृ १.३९ | कुशा दर्व्यादयो मन्त्रा, ब्राह्मणाश्च बहुश्रुताः । न ते निर्माल्यतां यान्ति विनियोज्याः पुनः पुनः ॥ ३.२.२४ तं. दर्भाः कृष्णाजिनं मन्त्राः |
| ऋ १.१९१.१-१६ | कुषुम्भकसूक्तं (शंसति) २.१.२२ एतद् विषघ्नोपनिषद्, अप्तृणसूर्या देवताः, अगस्त्यो मैत्रावरुणो ऋषिः 'कङ्कतो न कङ्कतोऽथो सतीनकङ्कतः' |
| तैसं ७.२.२ | कुसुरुबिन्द्र औद्दालकिर् अकामयत । १.१.२८ |
| मैसं २.२.४ | कूटं दक्षिणा । ६.१.५२ निषादस्थपतिना दातव्या दक्षिणा । |
| पा ३.३.१०८ वा | कृञ् भुवौ धात् तिङ् अभिधीयेते । २.१.१ तं. भवतेः अः–भवतेर् अभ्यासस्य अकारः । |
| काठकसं ८.१ | कृते जातकर्मणि, अतीते दशाहे पौर्णमास्यां अमावास्यायां वा पुत्रजातेष्टिः कर्तव्या । ४.३.३९ |
| तैब्रा १.१.२.१ | कृत्तिकासु अग्निं आदधीत । ३.१.२२ श्यामा. |
| पा ३.१.९३ | कृदतिङ् । ३.४.१३ तं. तिङ्वर्जितः प्रत्ययः कृत्संज्ञको भवति । |
| मैसं १.२.१८ | कृषिषु स्याम कृषः । ११.४.४८ कृषिं सुसस्यां उत्कृषे । |
| अमरकोशः २.८.४६ | कृष्णकिशोरा धेनुः । ७.४.७ (यथा धेनुः किशोरेण । सूत्रे) यद्यपि धेनुशब्दो गोधेन्वां तथापि किशोरेण अश्वधेन्वां (वडवायां) विज्ञायते । 'किशोरो अश्वशावके' (मेदिनी) अमरकोश । २.८.४६ |

बौध १.२.३.६ कृष्णकेशोऽग्नीन् आदधीत । १.१.१ तं.

तैसं २.१.२ कृष्णग्रीवयोः ( आग्नेयं कृष्णग्रीवं आलभेत, सौम्यं बभ्रुं, आग्नेयं कृष्णग्रीवं ) पुरोनुवाक्या ।

मनोतासूक्तं च एतेषां आवृत्तिःस्यात् कालभेदात् । एवं ज्योतिष्टोमे 'प्रतिसवनं सवनीयाः पुरोडाशा' तेषु हविष्कृदाह्वानं, वाजपेये क्रतुपशवः प्राजापत्याश्च तत्र अध्रिगुप्रैषः । ३.६.१०; ११.४.५४

वसिष्ठस्मृ. १.१२ कृष्णमृगसंचरणोपलक्षितार्यावर्तः । १.३.७ तं.

तैसं ६.१.३ कृष्णविषाणया कण्डूयति । ६.२.६; ११.३.१३

आप १८.१६.९,१० कृष्णविषाणया वासांसि विस्रंसयति, ततो अध्वर्युः परिधत्ते । १०.४.१५

तैसं ६.१.३ कृष्णविषाणाप्रासनम् । ४.२.१९

तां. १७.१.१४ कृष्णशंवासः कृष्णवलक्षे अजिने । १.३.२४ तं.

मैसं ४.७.८ कृष्णशीर्षा आग्नेयो, मेषी सारस्वती, बभ्रुः सौम्यः, श्यामः पौष्णः, शितिपृष्ठो बार्हस्पत्यः, पिशङ्गो वैश्वदेवो, वृष्णिर् ऐन्द्रः, कल्माषो मारुतः, संहित ऐन्द्राग्नोऽधोरामः सावित्रः, पेत्वो वारुणः । ऐकादशिनः ८.१.१४

तैसं ५.५.२२ कृष्णशीर्षाऽऽग्नेयादिषु ऐकादशिनेषु सौत्यस्य ( सवनीयस्य ) विधिः ।

मैसं ४.७.८ सूत्रं– ऐकादशिनेषु सौत्यस्य विधिः ।

तैसं ६.६.४७ द्वैरशनस्य दर्शनात् । – अग्निष्ठाद् द्वे द्वे रशने आदाय द्वाभ्यां रशनाभ्यां एकैकं यूपं परिव्ययति । ८.१.१४

मैसं ४.१.७ कृष्णाजिनं अधस्ताद् उलूखलस्य अवस्तृणाति । ३.१.११; ४.१.८

तैसं ६.१.३ कृष्णाजिनेन दीक्षयति । ५.३.२९

भर १४.४.१० कृष्णाजिनेन वित्रास्य दक्षिणां ददाति । १०.३.५२ अथ एनाः ( दक्षिणाः ) कृष्णाजिनेन वित्रास्य विभज्य अविभज्य वा ददाति ।

तैसं १.८.९ कृष्णानां व्रीहीणां नखनिर्भिन्नानाम् । ९.१.२–३ न्यामा. नैर्ऋतं चरुं परिवृक्त्यै गृहे कृष्णानां व्रीहीणां नखनिर्भिन्नानाम् कृष्णा कूटा दक्षिणा ।

वाजसं २४.१० कृष्णा भौमा, ध्रुवा आन्तरिक्षा, बृहन्तो दिव्याः, शबला वैद्युता, सिद्धास्तारकाः अर्धमासानां वा एतद् रूपं यत् पञ्चदशिनः । एषा प्रतिमा

शत १३.२.५.१ कृष्णाभौमादयः पञ्चदशिनः, अर्धमासानां वा एतद् रूपम् । ४.१.१६

तैसं ६.१.१ केशश्मश्रुणोर् वपनम् । ३.७.६ केशश्मश्रु वपते ।

मैसं ३.६.२ केशश्मश्रू वपते, दतो धावते, नखानि निकृन्तते, स्नाति, मृता वा एषा त्वग् अमेध्यं वाऽस्य एतद् आत्मनि शमलं, तदेवोपहते मेध्य एव मेधं एवं उपैति । ३.८.३; ४.३.१

पाम १.१.१,२,३ केषां शब्दानां–लौकिकानां वैदिकानां च । १.३.२४ तं.

पाम १.१.१.११ कोऽयं शब्दः । १.३.२४ तं. कस्तर्हि शब्दः ? येन उच्चारितेन 'सास्ना लाङ्गूल ककुद् खुर विषाणिनां सं प्रत्ययो भवति स शब्दः ।

तैब्रा २.६.५.३ कोऽसि कतमोऽसि । २.१.३२

तैसं ६.१.१ को हि तद् वेद यदि अमुष्मिन् लोके अस्ति वा न वा । १.२.२,१४ ( दिक्षु अतीकाशान् करोति )

| | |
|---|---|
| तां २५.४.१ | 'कौण्डपायिनां अयने अग्निहोत्रं' इति अभिधानं कर्मणो वाचकं, तत् कर्मसहचरितान् धर्मान् आनयति। ८.१.२; ७.४.७ सूत्र–भागित्वात् तु नियम्येत गुणानां अभिधानत्वात् सम्बन्धाद् अभिधानवत् (यथा धेनुः किशोरेण) |
| तां १४.१.२६;८.२.३ १९.३.८;१९.४.६; १९.८.४;१४.११.३० | कौत्सं भवति, काण्वं भवति, वसिष्ठस्य जनित्रे भवतः। शुद्धाशुद्धीये भवतः, भर्गयशसी भवतः, कौञ्चानि भवन्ति। १०.४.१६,१७,१८,१९ |
| तां १४.११.२६ | कौत्सं भवति। १०.४.१६,१७/१, १७/२,१८,१९ |
| कौत्सं साम १२३८ (क्रौँञ्चं) ऋ ९.९८.१ | असी नो वाजसातमं रयिमर्ष शतस्पृहम्। इन्दो सहस्रभर्णसं तुविद्युम्नं विभासहम्॥ (जैब्रा ३.२२७ कृत्स्ना ऋक्) |
| साम १२३९ ऋ ९.९८.५ | वयं ते अस्य राधसो वसोर्वसो पुरुस्पृहः। नि नेदिष्ठतमा इषः स्याम सुम्ने ते अध्रिगो॥ |
| साम १२४० ऋ ९.९८.३ | परि स्य स्वानो अक्षरदिन्दुरव्ये मदच्युतः। धारा य ऊर्ध्वो अध्वरे भ्राजा न याति गव्ययुः॥ |
| गौतम स्मृ ३.१८ | कौपीनप्रच्छादने परिधत्ते। १४.४.१४ कौपीनाच्छादनाः। बौधा. धर्म. २.६.२१ |
| पा १.१.५,४,३ | क्ङिति च। ५ इको गुणवृद्धी च ३ न ४। किति ङिति च गुणवृद्धी न भवतः। |
| पा ७.१.३८ | क्त्वाऽपि छन्दसि समासे अनञ्पूर्वे 'क्त्वा' इत्येतस्य 'क्त्वा' इति आदेशो भवति,' 'अपि' शब्दात् 'ल्यप्' अपि। |
| पा ७.१.४७,३८ | क्त्वो यक्। क्त्वः यक्। ४७ छन्दसि ३८ क्त्वा इत्येतस्य यगागमो भवति। १.३.२४ तं. दत्वाय |
| मैसं १.४.३ | क्रमविपर्यासनिमित्तं प्रायश्चित्तं भवेत्–'अयाश्चाग्नेः' इति सर्वप्रायश्चित्तं जुहोति। १२.१.४ |
| काठक्सं १२.९-११ | क्रयणं (सीसेन क्लीबात् क्रयया) श्रयणं (कुवलसक्तुभिर् आश्विनं श्रीणाति।) पुरोरुग् (एका पुरोरुक् एका याज्या) उपयाम (उपयामगृहीतोऽसि अच्छिन्नाय त्वा अच्छिद्रेण आश्विनं ग्रहं गृह्णामि) ग्रहणासादनं (गृहीत्वा आसादयति) वासोपनहनं ('त्रिरात्रं संहता वसन्ति, क्षौमे वाससि उपनद्धानि तोक्मानि शष्पाणि भवन्ति' एवं सोमधर्मान् सुरायां दर्शयति–सौत्रामण्याम्) ८.२.४ |
| पा ५.४.१७ | क्रियाभ्यावृत्तौ हि कृत्वसुजर्थः प्रत्ययो, न क्रियाभेदे। ११.४.४७ आवृत्तिसंपादनार्था पुनःक्रिया। क्रियावाचित्वमाख्यातुं एकैकोऽर्थो निदर्शितः। प्रयोगतोऽनुमन्तव्या अनेकार्था हि धातवः। ३.२.२५ तं. |
| भर १०.९.३,४ | क्रीतराजको भोज्यान्नः। १.३.३ 'तस्माद् अग्नीषोमीये संस्थिते यजमानस्य गृहेऽशितव्यं' इति नियमस्य विरुद्धम्। मैसं ३.७.८ |
| तैसं ६.१.४ | क्रीते सोमे मैत्रावरुणाय दण्डं प्रयच्छति। ४.२.१६ |
| तैसं ७.५.८ | (यत्) क्रोशेन चात्वालस्यान्ते स्तुवन्ति यज्ञस्यैव अन्तं गत्वा इन्द्रियं वीर्यं अव रुन्धते। १०.४.१६ |
| तां १३.५.१४ | 'क्रोशं भवति' अथ 'प्राणाः शिशुः' इति विहिते तृचे गेयं साम दर्शयति क्रोशं भवति। १०.४.१६ |

क्रोशं साम १०१३ प्राणा शिशुर् महीनाँ हिन्वन्नृतस्य दीधितिम् । विश्वा परि प्रिया भुवदध
ऋ. ९.१०२.१ द्विता ॥ क्राणा
साम १०१४ ऋ ९.१०२.२ उप त्रितस्य पाष्यो = रभक्तयद् गुहा पदम् । यज्ञस्य सप्त धामभिर्
अध प्रियम् ॥
साम १०१५ ऋ ९.१०२.३ त्रीणि त्रितस्य धारया पृष्ठेष्वैरयद् रयिम् । मिमीते अस्य योजना वि
सुक्रतुः ॥ १०.४.१६
तैसं ७.५.८ क्रौञ्चेन चात्वालं अवेक्षमाणः स्तुवते । क्रोशेन चात्वालस्यान्ते स्तुवन्ति ।
ता ११.१०.१९,२० क्रौञ्चं भवति, वाग्वै क्रौञ्चं वाग्द्वादशाहो वाच्येव तद् वाचा स्तुवते यज्ञस्य
प्रभूत्यै ॥ १०.४.१६
क्रौञ्चं साम ८१८ अयं पूषा रयिर् भगः, सोमः पुनानो अर्षति । पतिर् विश्वस्य भूमनो व्यख्यद्
ऋ ९.१०१.७ रोदसी उभे ॥
साम ८१९ समु प्रिया अनूषत गावो मदाय घृष्वयः । सोमासः कृण्वते पथः
ऋ ९.१०१.८ पवमानास इन्दवः ॥
साम ८२० ऋ ९.१०१.९ य ओजिष्ठस्तमा भर पवमान श्रवाय्यम् । यः पञ्च चर्षणीरभि रयिं येन
वनामहे ॥ १०.४.१६
तां १३.९.१० क्रौञ्चानि भवन्ति । १०.४.१६ क्रौञ्चं भवति, क्रुञ्चो नामा आङ्गिरस ऋषिः
तेन दृष्टं साम (अण्)
क्रौञ्चं साम १०७६ इन्द्रायेन्दो मरुत्वते पवस्व मधुमत्तमः । अर्कस्य योनिमासदम् ॥
ऋ. ९.६४.२२
साम १०७७ तं त्वा विप्रा वचोविदः परिष्कृण्वन्ति धर्णसिम् । सं त्वा मृजन्त्यायवः ॥
ऋ. ९.६४.२३
साम १०७८ ऋ ९.६४.२४ रसं ते मित्रो अर्यमा पिबन्तु वरुणः कवे । पवमानस्य मरुतः ॥ १०.४.१६
शत ५.२.१.४ क्लृप्तीर् यजमानं वाचयति । ३.८.१८ आयुर् यज्ञेन कल्पतां, प्राणो यज्ञेन
कल्पतां इत्याद्याः । तैसं १.७.९
ऐब्रा ७.१ क्लोमा च अर्धं वैकर्तनं च शमितुः, तद् ब्राह्मणाय दद्यात् यदि (शमिता)
अब्राह्मणः स्यात् । ३.७.२८
पा ६.१.६७ क्विब् लोपः । १.३.३ तं. कु वि पु कु प इतोर् लोपः । वेः अपृक्तस्य लोपः ।
क्विप् क्विन् क्विः ण्विः एतेषां वेः ।
गोभिल गृ. १.२.३२ क्षुत्वा आचामेत । १.३.५–७ न्यामा. सुप्त्वा, भुक्त्वा, क्षुत्वा, पीत्वा,
स्नात्वा आचामेत ।
मैसं १.६.४ क्षौमे वसानौ (दम्पती) अग्निं आदधीयाताम् । ३.३.१९; ६.१.२२
आप ५.४.१४ क्षौमे वसानौ जायापती अग्निं आदधीयाताम् । ६.१.२२
आप १९.१.१ क्षौमे वाससि उपनद्धानि तोक्मानि शष्पाणि भवन्ति । ८.२.४
भरद्वाज २.४.१ खननपुरीषां प्रतिष्ठाकामस्य वेदिं कुर्यात् । ४.३.२५
तां १६.१३.८ खलेवाली यूपो भवति । १०.१.९; १०.२.७०, ७१; १०.४.३; १२.२.२८
तैब्रा ३ ८.१९.१ खादिरपालाशरोहितका यूपाः । १०.७.५१ = खादिरो वा पालाशो वा
रोहितको वा ।
षड् ४.४
खादिरं वीर्यकामस्य यूपं कुर्वीत । ४.२.१; २; ५; ६.१.२३ बलकामस्य

| | |
|---|---|
| भरद्वाज १.५.२ | खादिरी अग्निहोत्रसमिद् भवति। ७.३.४ एकविंशतिदारु इध्मं करोति पालाशं खादिरं वा। |
| काठक संकलने १३७.९.१२ | खादिरे बध्नाति। २.२.१७,२०; ४.२.१; ४.३.५, ६; ६.३.२८; १०.७.६३; ११.३.३ |
| शत ३.६.२.१२ | खादिरो यूपो भवति, खादिरः स्फ्यः। १०.७.५१ |
| तां. २०.११;२४.१९ | गणेषु द्वादशाहस्य (विधिः)। ८.१.१७ सूत्रम्–गणेषु=अहर्गणेषु आद्विरात्रात् शतरात्रपर्यन्तेषु। |
| मैसं १.४.२ | गताः स्मः स्वर्गम्। ९.१.४ अगन्म स्वः। |
| महाभारते ३.१४५,१४६, १५०,१५८ | गन्धमादनादिवर्णम्। १.२.७ |
| तैसं ३.४.८ | गंधर्वाप्सरसो वा एतं उन्मादयन्ति य उन्माद्यति, एता वै गंधर्वाप्सरसो यद् राष्ट्रभृतः तस्मै स्वाहा ताभ्यः स्वाहा। ७.१.१२ |
| पा उणादि २.६२ | गमेर् डोः–गोः। १.३.२४ तं. |
| तैसं ५.१.२ | गर्दभरशनां परिसंख्यास्यति–न शक्नोति परिसंख्यातुं, परिसंचक्षाणो हि स्वार्थं जह्यात्। १.२.३२ |
| | युञ्जाथां रासभं युवं, इति गर्दभं असत्येव गर्दभं प्रतिष्ठापयति। |
| सत्या ११.१.१३ | गर्दभाभिधानीं परि संचष्टे। तूष्णीं गर्दभस्य आदाय 'युञ्जाथां रासभं युवं' इति गर्दभं अभिदधाति। २.१.३२ |
| बौधायनगृ २.५.२ | गर्भाष्टमेषु ब्राह्मणं उपनयीत। ६.२.३१ गर्भाष्टमेऽब्दे ब्राह्मणस्य उपनयनं कुर्वीत। |
| तैसं २.१.२ | गर्भिण्यो भवन्ति। ४.१.१७ |
| तैसं ६.१.१० | गवा क्रीणाति (सोमं)। ३.३.२४ |
| तां १६.१-७ | गवादय एकाहा सोमविकाराः। ५.४.२६-ज्योतिर् गौर् आयुर् अभिजित् विश्वजित् सर्वजित्। |
| तां १६.१-६ | गवादयः सोमाः। ५.३.३२ |
| तैब्रा २.७.६.१ | गवा यजेत। ५.४.२६. न्यामा. |
| तैसं ७.४.९ | गवामयने द्वादशाहिको विध्यन्तः। ७.४.१३ सूत्रं–८.१.१७ गणेषु द्वादशाहस्य। द्वाभ्यां लोमौ अवद्यति। इत्यारभ्य द्वादशोपसत्त्वं द्वादशाहिकं धर्मं गवामयने दर्शयति। |
| तांड्य २५.५.९ | गव्यस्य च तदादिषु। १.३.२४ तं. गव्यस्य = गवामयनस्य विधिः तदादिषु तां. २५.५ तपश्चितामयने, २५.६ दशसंवत्सराख्ये, २५.८ साध्यानां शतसंवत्सरे, २५.७ षट्त्रिंशत्संवत्सराख्ये, २५.९ सहस्रसम्ये आदिषु। |
| तैब्रा ३.६.३.३ | गात्रं गात्रं अस्या नूनं कृणुतात्। ९.४.२७–अध्रिगोश्च तदर्थत्वात्। ९.४.२७ सूत्रम्– अध्रिगुश्च अङ्गानां उद्धरणार्थः यथा गात्रं गात्रं अस्य कृणुतात्। |
| तैसं ५.१.८ | गाथां गायति। ७.२.१३ |
| शत ४.५.१०.६ | गां दक्षिणां दद्यात्। ४.१.१५ तं. एकां एव गां दक्षिणां दद्यात्। |
| पाम १.१.१५ | गां आनय। १.३.३०-३५ न्यामा. |

तैसं ३.२.५ गायत्रछन्दसः, त्रिष्टुप्छन्दसः, जगतीछन्दसः । १०.५.८८ न्यामा.

तैसं ३.२.१ गायत्रछन्दाः, त्रिष्टुप्छन्दाः, जगतीछन्दाः । १०.५.८८ न्यामा.

शत १२.२.४.७ गायत्रमेतद् अहर् भवति । ८.३.१२,१५,२८ अन्यच्छन्दस्कानां अक्षराणि गायत्र्याः अक्षरसंख्यात्वेन गणनीयानि ।

तैब्रा १.८.१०.३ गायत्रं प्रथमं अहः, त्रैष्टुभं द्वितीयं, जगतीं अन्तर्गच्छति । १०.५.१२

तां १५.११.१.३ गायत्रसं हेते गायत्रे तृचे भवतः । ९.२.२८/३ 'स्वादिष्ठया मदिष्ठया' गायत्री भवति ( गायत्रस्य संहितस्य च आभवपवमानस्य च प्रथमस्तृचः ) ।

साम ६८९ ऋ ९.१.१ स्वादिष्ठया मदिष्ठया, पवस्व सोम धारया । इन्द्राय पातवे सुतः ॥

साम ६९० ऋ ९.१.२ रक्षोहा विश्वचर्षणिरभि योनिमयोहते । द्रोणे सधस्थमासदत् ॥

साम ६९१ ऋ ९.१.३ वरिवोधातमो भुवो, मंहिष्ठो वृत्रहन्तमः । पर्षि राधो मघोनाम् । ९.२.२८/३

तां १५.९.४,५ गायत्रा महीयवे गायत्रे तृचे भवतः, ताः षड्गायत्र्यः । ९.२.२८/२ गायत्रं भवति । ४, आमहीयवं भवति 'उच्चा ते जातमन्धस' इति तृचे

गायत्रं च आमहीयवं च उच्चा ते जातमन्धसो, दिवि सद्भूम्या ददे । उग्रं शर्म महि श्रवः ॥

साम ६७२ ऋ ९.६१.१०

साम ६७३ ऋ ९.६१.१२ स न इन्द्राय यज्यवे, वरुणाय मरुद्भ्यः । वरिवोवित् परि स्रव ॥

साम ६७४ ऋ ९.६१.११ एना विश्वान्यर्य आ, द्युमानि मानुषाणाम् । सिषासन्तो वनामहे ॥ ९.२.२८/२

ऐब्रा ७.१७ गायत्रीं अनृते ( उक्ते ) जपेत् । ३.४.१२ तं. यो वै दुरुक्तोक्तः शमलगृहीतः, गायत्र्या एव अस्य तत् पाप्मानं शमलं अपहन्ति ।

तैसं १.१.११ गायत्रीं मध्यमः परिधिः, त्रैष्टुभो दक्षिणः, जागत उत्तरः । १०.५.८८ परिधीन् दधाति ( तैब्रा ३.६.६ ) गंधर्वोऽसि विश्वावसु विश्वस्मादीषतो यजमानस्य परिधिरिड ईडितः । इन्द्रस्य बाहुरसि दक्षिणो यजमानस्य परिधिरिड ईडितः । मित्रावरुणौ त्वा उत्तरतः ---

मैसं १.४.१३ 'गायत्र्या त्वा शताक्षरया संदधीत' इति तत् कपालं सदध्याम् । ६.४.१४

तैसं २.६.१० गायत्र्या परिदध्यात् । ८.३.२५ गायत्रिया परिदध्यात्, ब्रह्मवर्चसं वै गायत्री ब्रह्मवर्चसं एव भवति ।

शांखा ब्रा २.३ 'गार्हपत्यान्वाहार्यपचनयोश्चतस्रश्चतस्र आहुतीर् आहवनीये च द्वे' विधाय आह 'य एवं विद्वान् विराट्संपन्नं अग्निहोत्रं जुहोति' । २.२.१६ तं. चतस्रो गार्हपत्ये चतस्रोऽन्वाहार्यपचने द्वे आहवनीये, ता दश संपद्यन्ते दशदशिनी विराट् श्रीः, विराड् अन्नाद्यं श्रियो, विराजो अन्नाद्यस्य आप्त्यै, य एवं विद्वान् विराट् संपन्नं अग्निहोत्रं जुहोति ।

शत १.१.२.२३ गार्हपत्ये हवींषि श्रपयति । ११ ३.२ आहवनीये गार्हपत्ये वाह...

तैसं ७.५.२ गावो वा एतत् सत्रं आसत । ८.१.१८ तं.

पा म २.३.२ वा गुणभावे च तृतीया, तेन उच्यते तृतीयास्थाने द्वितीया । २.१.१२ सक्तून् जुहोति । 'सक्तुभिः' स्थाने

पा ५.१.१२४,३ गुणवचनब्राह्मणादिभ्यः कर्मणि च, ष्यञ् । १.३.२४आन्यभाव्यं

पा म १.२.५८ वा गुणवचनानां आश्रयतो लिङ्गवचनानि भवन्ति । १०.३.५७

पा ५.२.९४ वा गुणवचनेभ्यश्च मतुब्लोपः स्मर्यते । १.४ ५ तं.

मैसं ३.१०.४ गुदेन उपयजति, प्राणो वै गुदः । १२.४.८

गौतमस्मृ १८ — गुरुनियोगात् अपतिर् अपत्यं लिप्सुर् देवराद् गुरुप्रेरिताद् ऋतुमती ईयात्। १.३.७ तं.

वसिष्ठस्मृ ८.९ — गुरुर् अनुगन्तव्यः। १.३.१ गुरुं गच्छन्तं अनुगच्छेत्, आसीनं च तिष्ठन्, शयानं च आसीनः उपासीत।

मनुस्मृ २.१२० — गुरुर् (अनुगन्तव्यः)। अभिवादयितव्यश्च। ६.२.२१,३० अभिवादात् परं विप्रो ज्यायांसं अभिवादयन् असौ नामाऽहमस्मीति स्वं नाम परिकीर्तयेत्।

तां २५.४.५ — गृहपतिर् गृहपतिः सुब्रह्मण्यः सुब्रह्मण्यः। ८.२.३२ गृहपतिः सत्रे आम्नातः।

वाराह ३.२.२.२८ — गृहपतिर् यजेत। १०.६.५६

आश्व ४.१८ — गृहपतिसप्तदशाः स्वयं ऋत्विजो ब्राह्मणाः सत्रं उपेयुः। ३.७.३८ सूत्र-स्वामिसप्तदशाः कर्मसामान्यात्। स्वामी-गृहपतिः सप्तदशो येषां ते।

शत ४.६.८.५,१० — गृहपतेरेव अग्निषु निर्मथ्य निर्वपेरन्। ६.७.३०

शत २.५.३.१६ — गृहमेधीये प्राशित्रादि भक्षणं नास्ति। १०.७.३५-३७ न्यासा.

वाराह ३.२.७.२७ — गृहीतान् ग्रहान् ऋत्विज आददते, आश्विनं अध्वर्युः, सारस्वतं ब्रह्मा, ऐन्द्रं प्रतिप्रस्थाता। ३.५.१४

काठक सं. १२.९ — गृहीत्वा आसादयति। ८.२.४

पा. ४.१.६३ वा — 'गोत्रं चरणैः सह' इति वार्तिकेन शाखाध्येतृवाची 'कठी' 'बह्वृची' आदिशब्दो जातिकार्यं लभते। ६.१.१७-२४ न्यामा. आकृतिग्रहणाज् जातिर्, लिङ्गानां च न सर्वभाक्। सकृदाख्यातनिर्ग्राह्या गोत्रं च चरणैः सह (काशिका) स्त्रियां ङीष्।

शत १२.९.२.११ — गोदानस्य दक्षिणाविधानम्। २.१.३१ धेनुविधिर् भुवि कृत्स्नक्रतु-दक्षिणाकार्ये भवति।

आप १.१६.२ — गोदोहनेन पशुकामस्य प्रणयेत् (अपः)। ३.६.१०; ४.१.२/२; ४.३.४, २०, २३; ८.१.२३

मै. सं. ३.७.७ — गोमिथुनाभ्यां क्रीणाति सोमम्। १२.४.६

तै. सं. ६.६.७ — गोयागस्य तु अनुबन्ध्यायां (विधानम्)। २.१.३१ मैत्रावरुणीं वशां आलभते (अनुबन्ध्यायां)।

जैबा ३.१५३ — गोष्ठो वासिष्ठः। (पादवगीतेषु पादे एव गानं) ९.२.१८ ('गोष्ठो वासिष्ठः' इति पादः सामवेदे नोपलभ्यते)

जैबा ३.१५३ — गोष्ठं साम ९.२.१८ तं. साम १०८१, १०८० वासिष्ठं साम

गोष्ठं साम १०८१ — एतमु त्यं दश क्षिपो, मृजन्ति सिन्धुमातरम्। समादित्येभिरख्यत॥ ९.२.१८

तैब्रा २.७.६.२ — गोसवे उभे (बृहद्रथन्तरे) कुर्यात्। ९.२.४९; १२.३.१३

तां २४.१३.४ — गौग्गुलवेन प्रातःसवने समञ्जते, अभि वाऽञ्जते, पैलुदारवेण माध्यन्दिनसवने सौगन्धिकेन तृतीये सवने। १०.४.१०; १२.१.४

पा १.१.१५ वा, १.४.१०८ वा — गौणमुख्ययोर् मुख्ये कार्यसंप्रत्ययः। ३.२.१ मुख्यगौणयोर् मुख्ये कार्यसंप्रत्ययः।

मनुस्मृ ११.९४ — गौडी पैष्टी च माध्वी च, विज्ञेया त्रिविधा सुरा। यथैवैका तथा सर्वा, न पेया ब्रह्मवादिभिः न पातव्या द्विजोत्तमैः। १.३.७ तं.

षड् १.१.१८,१९ — 'गौरावस्कन्दिन्' इति गौरमृगो भूत्वा अरण्याद् राजानं सोमं पिबति इन्द्राय ग्रावः १.१.४३/१

तां ५.७.२ — गौरिवीतं अन्वहं भवति । ७.४.१३ गौरीवितेन अन्वहं स्तुवते – अभि प्र गोपतिं गिर । १४८९–९१

साम १६८; १४८९ ऋ ८.६९.४ — अभि प्र गोपतिं गिरेन्द्रमर्च यथा विदे । सूनुं सत्यस्य सत्पतिम् ॥

साम १४९० ऋ ८.६९.५ — आ हरयः ससृज्रिरेऽरुषीरधि बर्हिषि । यत्राभि संनवामहे ॥

साम १४९१ ऋ ८.६९.६ — इन्द्राय गाव आशिरं दुदुह्रे वज्रिणे मधु । यत्सीमुपह्वरे विदत् ॥ ७.४.१३

पाम १.१.१.७,१३ — 'गौर्' इति अत्र कः शब्दः । येनोच्चारितेन सास्नालाङ्गूलककुद्खुरविषाणिनां सं प्रत्ययो भवति स शब्दः । १.३.२४

पाम १.१.१.३१ — गौर् गावी गोणी गोपोतलिकाः । १.३.२४ गौर् गावी गोणी गोता गोपोतलिका ।

पाम १.१.१.१३ — गौर् इति इमं शब्दं उच्चारयन्ति सास्नादिमन्तं अर्थं अव बुध्यन्ते । १.१.५

तां १६.१.१०,११ — गौश्च, अश्वश्च, अश्वतरश्च, गर्दभाश्च, अजाश्च, अवयश्च, व्रीहयश्च, तिलाश्च, माषाश्च । तस्य द्वादश शतं दक्षिणा । ३.४.२८; १०.२,२२, ३८; १०.३.३९, ५३, ५६, ५७.

'गौः' इति अत्र कः शब्दः – गकार औकार विसर्जनीयाश्च । उपवर्षः १.१.५

तैसं ३.१.२ — ग्रहं वा गृहीत्वा चमसं वा उन्नीय स्तोत्रं उपाकरोति । ४.४.४०; ५.१.३५

आप. १२.१४.८,९ — ग्रहं संमार्ष्टि । ( इति सर्वग्रहाणां संमार्गोऽभिधीयते ) १०.४.३; ११.१.५४ पवित्रदशाभिः परिमृज्य आसादयति ग्रहान् ।

तैसं ६.५.२ — ग्रहा आसाद्यन्ते । ३.६.३२–३४ न्यामा. ग्रहाः साद्यन्ते । आसादयति ग्रहान् ( आप १२.१४.९ )

शांब्रा १४.२ — ग्रहैः सवनानि प्रत्यक्षं आरभ्यमाणानि दृश्यन्ते । ५.३.१५ तं. । दशैतान् अध्वर्युः प्रातःसवने ग्रहान् गृह्णाति । दश प्रातःसवनेऽध्वर्युर् ग्रहान् गृह्णाति ।

तैसं २.३.९ — ग्रामकामो यजेत । ६.२.१३ वैश्वदेवीं सांग्रहणीं निर्वपेद् ग्रामकामः । ग्रामान्तराद् आगतानां पुरुषाणां पर्यग्निकरणे न अदृष्ट उपकारः। २.१.१२

मनुस्मृ ८.२४८ — ग्रामेण तडागः खेयः । ११.१.१ तडागान्युदपानानि, वाप्यः प्रस्रवणानि च । सीमासंधिषु कार्याणि देवतायतनानि च ॥

वाजसं २४.२० — ग्रीष्माय कलविङ्कान् आलभते । ७.४.१०

तैब्रा १.१.८.१ — 'घर्मः शिरः' इति गार्हपत्यं आदधाति । ३.३.९ न्यामा. ( वातः प्राण इति अन्वाहार्यपचनं, अर्कश्चक्षुर् इति आहवनीयम् । )

तैसं ६.१.१ — घृतं देवानां, मस्तु पितॄणां, निष्पक्वं मनुष्याणाम् । तद् वा एतत् सर्वदेवत्यं यत् नवनीतं; यत् नवनीतेन अभ्यङ्क्ते, सर्वा एव देवताः प्रीणाति । ३.४.१७ न्यामा.

मैसं २.१.५ काठकसं ११.५ — घृतं प्रोक्षणं भवति । १.४.११

मैसं ३.८.२ — घृतं वै देवा वज्रं कृत्वा सोमं अघ्नन्, स्रुचौ बाहू, तस्मात् स्रुचि सोमहविर् नासाद्यते, न सोमं आज्येन अभिघारयति । १.४.११

| | |
|---|---|
| सत्या ७.८.७७ | 'घृतव्रतो भवति' इति वचनाद् व्रतदुहि निवृत्तायां अन्यां आशिरे गां कल्पयन्ति। ६.६.२ या यजमानस्य व्रतधुक् तां दुहन्ति, या पत्न्याः तां दधिग्रहाय, या घर्मधुक् तां दधिधर्माय। |
| सत्या. ७.७.१० | 'घृतेन द्यावापृथिवी आपृणेथां' इति औदुम्बर्यां विशाखे जुहोति, आम्नाद् |
| लाट्यायन १.७.७-९ | अवस्रावयति भूमिप्राप्ते स्वाहाकरोति। १०.८.२१ |
| तैसं २.३.२ | घृते श्रपयति। ८.१.३९; १०.२.२ सूत्र-तस्मिंश्च श्रपणश्रुतेः। तैसं-घृते भवति। |
| पाम १.१.१.४३ | घोषवद् आद्यन्तरन्तःस्थं अवृद्धं, त्रिपुरुषानीकं अनरिप्रतिष्ठितं, द्व्यक्षरं चतुरक्षरं वा नाम कृतं कुर्यात्। १.३.२४ तं. |
| तैब्रा १.१.४.२ | 'चक्षुर्विमिते (अग्निं) आदध्यात्' (इति अनियतप्रक्रमेषु शूद्रस्य नियम्यते, व्रतेऽपि 'मस्तु शूद्रस्य') ६.१.३१ |
| तैसं २.६.२ | चक्षुषी वा एतौ यज्ञस्य यद् आज्यभागौ। ४.३.१; ४.४.३०; १०.१.१८ |
| ऋ. १०.१८.१ | चक्षुष्मते शृण्वते ते ब्रवीमि। ९.१.९ (परं मृत्यो अनुपरेहि पन्थां, यस्ते स्व इतरो देवयानात्। चक्षुष्मते शृण्वते ते ब्रवीमि, मा नः प्रजां रीरिषो मोत वीरान्॥) |
| पा ७.३.५२ | च जोः कु: घिण्यतोः। २.२.९ यज्-यागः, पच्-पाकः। उपांशुयाजस्तु निपातितः। |
| तां ४.४.२ | चतस्रो गायत्र्यः (तासां द्वादश पादाः) द्वादशभिः ककुब्भिः द्वादश बृहत्यो भवन्ति। ९.२.२८/२ |
| आप १०.१५.१ | चतस्रो दीक्षा तिस्र उपसदः अष्टमीं प्रसुतः। ६.५.२८ न्यामा. |
| तैसं २.६.३ | चतुर् अवत्तं जुहोति। १०.८.२९,३१,३३ |
| काठकसं ३४.६ | चतुरहे दीक्षाश्चतुरहे उपसदः, चतुरहे सुत्याः। ११.४.१५ |
| तैसं ७.४.८ | चतुरहे पुरस्तात् पौर्णमास्यै दीक्षेरन्, तेषां एकाष्टकायां क्रयः संपद्यते, तेन एकाष्टकायां न छंबट् कुर्वन्ति। ६.५.३५ |
| षड् १.१.२६ | चतुरहे सुत्यां आगच्छ मघवन्। ११.४.२७ इत्यहे। (लाट्यायन १.३.१) एतावदहे। |
| तैब्रा २.१.५.७ | चतुरुन्नयति। ७.३.४ |
| आप १.१८.२ | चतुरो मुष्टीन् निर्वपति। २.३.१२; १०.२.६४; ११.४.४४ |
| आप ७.९.१ | चतुर् गृहीतं उपभृति भवति चातुर्मास्येषु। ४.१.४८ |
| तैसं ५.१.१ | चतुर् गृहीतं जुहोति सर्वहोमेषु। ४.१.४८ पुरोनुवाक्यायै याज्यायै देवतायै वषट्कारायच चतुर् गृहीतं जुहोति। |
| शत ३.४.१.१८ | चतुर्गृहीतानि आज्यानि भवन्ति, न हि अत्र अनुयाजान् यक्ष्यन् भवति। ४.१.४०,४१ (आतिथ्यायां) |
| तैब्रा ३.३.५.४,५ | चतुर्जुह्वां गृह्णाति, अष्टौ उपभृति गृह्णाति। ४.१.४२ |
| तैब्रा ३.३.५.५ | चतुर्जुह्वां गृह्णाति, ऋतुभ्यस्तद् गृह्णाति, ऋतवः प्रयाजाः, यद् उपभृति गृह्णाति, प्रयाजानुयाजभ्यस्तत्। ४.१.४३ |
| मैसं ४.७.६ | चतुर्थे चतुर्थेऽहनि अहीनस्य गृह्यते (षोडशी)। १०.५.५५ |
| तां १२.१०.२१ | चतुर्थेऽहनि त्रैशोकं नाम साम अतिजगत्यां उत्पन्नं (द्वादशाहे) ९.२.२१/२ |

त्रैशोकं साम ९३०;३७० ऋ ८.९७.१० विश्वाः पृतना अभिभूतरं नरः सजूस्ततक्षुरिन्द्रं जजनुश्च राजसे। क्रत्वे वरे स्थेमन्यामुरीमुतोग्रमोजिष्ठं तरसं तरस्विनम् ॥

साम ९३१ ऋ ८.९७.१२ नेमिं नमन्ति चक्षसा मेषं विप्रा अभिस्वरे। सुदीतयो वो अद्रुहोऽपि कर्णे तरस्विनः समृक्वभिः ॥

साम ९३२ ऋ ८.९७.११ समु रेभासो अस्वरन्निन्द्रं सोमस्य पीतये। स्वः पतिर् यदी वृधे धृतव्रतो ह्योजसा समूतिभिः ॥ ९.२.२१/२

शत १.१.१६.२५-२८ चतुर्दश पौर्णमास्यां आहुतयो हूयन्ते, त्रयोदश अमावास्यायाम्। २.२.८; ४.१.१०; ४.४.३८; १०.८.४६,५८; ११.१.१७,३४,६४; ११.२.११,१६ ता एता एकादश आहुतयः- पञ्च प्रयाजाः, द्वौ आज्यभागौ, स्विष्टकृत्, त्रयोऽनुयाजाः, प्रधानाहुतित्रयं पौर्णमास्यां, अमावास्यायां स प्रतिपन्न-देवताकस्य सांनाय्यस्य सहानुष्ठानाद् प्रधानाहुतिद्वयम्।

तैसं ५.२.५ चतुर्दशभिर् वपति। १०.५.१४

तां २३.५.४ चतुर्दशरात्रं प्रतिष्ठाकामा उपासीरन्। ८.२.२७

याज्ञस्मृ १.३ चतुर्दश विद्यास्थानानि। १.३.७ तं. पुराणन्यायमीमांसा, धर्मशास्त्राङ्गमिश्रिताः। वेदाः स्थानानि विद्यानां, धर्मस्य च चतुर्दश ॥

तैब्रा ३.३.५.३ चतुर् ध्रुवायां गृह्णाति। ४.१.४०,४१ न्यामा.

तैसं ५.१.१ चतुर्भिरभ्रिं आदत्ते। १२.३.३०

तैसं ५.१.१ चतुर्भिर् मुष्टिभिर् निर्वपति। ५.२.४

जैब्रा १.२४३ चतुर्विंशति जगत्यस्तृतीयसवने एका ककुप्। ९.२.२८/३

आश्व ४.१.८ चतुर्विंशति परमाः, सप्तदशावराः सत्रं आसत। ६.७.३६; १०.६.६०; ६.२.१ एको गृहपतिः षोडश ऋत्विजः (वाराह)

तैसं २.५.१० चतुर्विंशतिं अनुब्रूयाद् ब्रह्मवर्चसकामस्य। (सामिधेनीः) १०.५.२७

तां १८.३.२ चतुर्विंशतिमानं हिरण्यं दीक्षणीयायां दद्यात्, प्रायणीयायां द्वे चतुर्विंशति-माने ४.४.४१ तस्य दीक्षणीयायां इष्टौ द्वादशमानं हिरण्यं ददाति, चतुर्विंशतिमानं प्रायणीयायां, द्वे चतुर्विंशतिमाने आतिथ्यायाम्। ४.४.४१

तैसं ७.४.११ चतुर्विंशतिरात्रश्चत्वारः षडहाः। ८.३.७ चत्वारः षडहा भवन्ति तानि चतुर्विंशतिर् अहानि संपद्यन्ते।

काठकसं ९.१४ चतुर्होत्रा पौर्णमासीं अभिमृशे पञ्चहोत्रा अमावास्यायाम्। ३.७.८

तां २५.१०.१६ चतुस्त्रिंशद् आश्वीनानि सरस्वत्या विनशनप्लाक्षप्रश्रवणे। १.३.२७ तं.

तां २५.१०.१६ (सायण) एकोऽश्वः एकेन अहोरात्रेण यावद् अध्वानं गच्छति तावान् एकाश्वीनः। अश्व + ख = आश्वीन। अश्वस्य एकाहगमे खः। पा. ५.२.१९

चतुश्चत्वारिंशद् आश्विनानि सरस्वत्या विनशनप्लाक्षप्रश्रवणः। १.३.२७तं.

तां २१.१४.७,८ चतुस्त्रिंशद् एतानि कर्माणि चोद्यन्ते। तेषां सप्तदशानां पर्यग्निकरणान्तः उत्सर्गः क्रियते। सप्तदशसु यथाप्रकृति एवं उत्तरासु अपि चोदनासु। ११.२.५५

ऋ. १.१६२.१८ चतुस्त्रिंशद् वाजिनो देवबन्धोर् वङ्क्रीरश्वस्य स्वधितिः समेति। अच्छिद्रा गात्रा वयुना कृणोत परुष्परुरनुघुष्या वि शस्त। ९.४.१७

| | |
|---|---|
| तां ४.४.१ सायण | चतुःशतं ऐन्द्रं बार्हताः प्रगाथाः । ९.२.२५/४ |
| तैसं ७.१.८ | चतूरात्रेण यजेत । १०.५.१ |
| तैसं ७.४.११ | 'चतुर्विंशतिरात्रश्चत्वारः षडहा' इत्येवं चोद्यते । ८.३.६ |
| तैसं ७.४.११ | चत्वारः षडहा इत्युक्ते चतुर्विंशत्यहानि इति प्रतीयन्ते सा द्वादशाहविधिं गृह्णाति । ८.३.८ |
| तां. १६.८-११ | चत्वारः साहस्राः (सहस्रदक्षिणाः) नि कायिनः । ८.१.९ |
| तैसं २.३.२ | चत्वारि कृष्णलानि अवद्यति । चतुरवत्तस्य आप्त्यै । १०.१.४०; १०.२.५,६ |
| तैसं २.३.२ | चत्वारि कृष्णलानि एकं अवदानम् । १०.२.७ चत्वारि चत्वारि कृष्णलानि अवद्यति । |
| मैसं २.२.२ | चत्वारि चत्वारि कृष्णलानि अवद्यति समृद्ध्यै । १०.२.११; १०.१.४० |
| तां १२.९.१ | चत्वारि त्रिवृन्ति अहानि, अग्निष्टोममुख्यानि । ८.३.३,४,५ विश्वजित्, महाव्रतं, ज्योतिष्टोमोऽतिरात्रः, जनकसप्तरात्रः । |
| तैब्रा ३.३.८.५,६ | चत्वारि एतानि देवधनानि अवदानानि, यदुपस्तृणाति तद् अनुवाक्यायै, यत् पूर्वं अवदानं तद् याज्यायै, यद् उत्तरं तद् देवतायै, यद् अभिघारयति तद् वषट्काराय । १०.८.३२ धनः भागः तान् एव तद्भागिनः करोति । |
| ऋ. १.१६४.४५ | चत्वारि वाक् परिमिता पदानि, तानि विदुर् ब्राह्मणा ये मनीषिणः । १.३.२४ तं. (गुहा त्रीणि निहिता नेङ्गयन्ति, तुरीयं वाचो मनुष्या वदन्ति ॥) |
| ऋ. ४.५८.३ | चत्वारि शृङ्गा त्रयो अस्य पादा, द्वे शीर्षे सप्त हस्तासो अस्य । त्रिधा बद्धो वृषभो रोरवीति, महो देवो मर्त्यां आ विवेश । १.२.३४, ४६ |
| तां २४.२०.१ | चत्वारो अभिप्लवाः षडहाः, पृष्ठ्यः षडहः स मासः स द्वितीयः स तृतीयः स चतुर्थः स पंचमः । संस्थिते पृष्ठ्ये १०.६.३१ |
| तैसं ७.४.११ | चत्वारो भवन्ति (षडहाः भवन्ति । चत्वारः षडहा भवन्ति ।) ८.३.६ |
| वाराह १.२.४.५ | चमसः प्रवर्तते । चमसेन अपः प्रणयेत् । आश्रये च प्रवर्तमाने तदाश्रितं अपि प्रवर्तते । यथा पटे आकृष्यमाणे तदाश्रितं चित्रं अपि आकृष्यते । ८.१.२३ |
| भर १०.२.१ | चमसाध्वर्यून् वृणीते । ३.७.२५,४६,४७ अध्वर्युर् वा । चमसोऽस्य स्वम्-तैसं ३.१.२ |
| शांब्रा १३.६ | चमसात् चमसाध्वर्यवे प्रयच्छति, तान् वषट्कर्त्रे हरति । ३.५.३५ |
| आप ८.३.८ | चमसेन जुहोति । ८.४.६ |
| शत ४.२.१.२९ | चमसेन उद्गातृशब्दस्य सम्बन्धः । ३.५.२५ चमसेन प्रोद्गातॄणाम् । |
| वाराह १.२.४.५ | चमसेन अपः प्रणयति, कांस्येन ब्रह्मवर्चसकामस्य, गोदोहनेन पशुकामस्य, मृण्मयेन प्रतिष्ठाकामस्य, आयसेन अभिचरतः । १.४.२ न्यामा; ४.३.४ न्यामा. |
| पा. उणादि ३.११७ | चमेर् असच् । ३.५.२२ तं. (अधिकरणसाधने असच्) |
| तैसं ५.६.२ | चरुं उपदधाति । २.३.१८ न्यामा. बार्हस्पत्यं नैवारं चरुं उपदधाति । |
| तैब्रा २.३.६.२,३ | चातुर्मास्यानां यज्ञक्रतूनां पञ्च ऋत्विजः । ४.२.२३ ब्रह्मा, अध्वर्युर्, होता आग्नीध्रः, प्रतिप्रस्थाता च । |
| तां १७.१३,१४ | चातुर्मास्याः सोमाः सन्ति । १०.३.१८ |
| आप ७.९.१ | चातुर्मास्येषु चतुर्गृहीतं उपभृति भवति । ४.१.४८ |

आप ८.६.१८ चातुर्मास्येषु सप्तदशसामिधेनीर् अनुब्रूयात् । १०.८.१७; ११.२.१२,१४,३६

शत २.६.४.९ चातुर्मास्यैः स्वर्गकामो यजेत । १०.३.१; १०.४.५ परमं एव स्थानं परमां गतिं गच्छति चातुर्मास्ययाजी ।

तां ६.७.२४ चात्वालं अवेक्ष्य बहिष्पवमानं स्तुवन्ति । १०.४.१६

तैसं ६.१.३ चात्वाले एव प्रासनम् । ४.२.१९ न्यामा. चात्वाले कृष्णविषाणां प्रास्यति ।

तैसं ६.१.३ चात्वाले कृष्णविषाणां प्रास्यति । ४.२.१६; ६.२.६; ११.२.६५

पा २.२.२९ का चार्थे द्वन्द्वः । ६.१.२२ अनेकं सुबन्तं चार्थे वर्तमानं समस्यते । समुच्चयः, अन्वाचयः, इतरेतरयोगः, समाहारश्च अर्थाः ।

तैसं ३.४.४ चित्तं स्वाहा–चित्तं च, चित्तिश्च, आकूतं च, आकूतिश्च, विज्ञातं च, विज्ञानं च, मनश्च, शक्वरीश्च, दर्शश्च, पूर्णमासश्च, बृहच्च, रथन्तरं च । जयहोममन्त्राः । ३.४.३१-३३ न्यामा.

तैसं १.२.१ चित्पतिस्त्वा पुनातु, वाक्पतिस्त्वा पुनातु, देवस्त्वा सविता पुनातु अच्छिद्रेण पवित्रेण वसोः सूर्यस्य रश्मिभिः । २.१.४८; २.४.४८

तैसं २.४.६ चित्रया यजेत पशुकामः । १.४.३; २.१.१,२; २.२.२; ४.३.२७; ९.३.१

तैसं ७.४.८ चित्रया पूर्णमासे दीक्षेरन्, मुखं वा एतत् संवत्सरस्य यत् चित्रापूर्णमासः । ६.५.३०-३७ न्यामा.

तैसं २.४.६ चित्रायां इष्टौ श्रूयते 'दधि मधु घृतं पयो धाना उदकं तण्डुलास्तत्संसृष्टं प्राजापत्यं तत्र मधूदके उपांशुराजविध्यन्तौ ।' ८.१.४०-४३

तैसं ५.४.१ चित्रिणीर् उपदधाति । ३.६.३५; ५.३.१५,१७,२० चित्रादीनि वै दिवो ज्योतींषि ।

तैसं ४.४.१० कृत्तिकानक्षत्रं इति अनुवाकेन असंस्पृष्टा नक्षत्रेष्टिका उपदधाति । सायणाचार्याः ।

भर १४.१८.१५ चुक्चुषाकारं भक्षयन्ति, निरवधयन्तो भक्षयन्ति । १०.२.१४ स्याद् वा निर्धानदर्शनात् । भर–निरवधयन्तो भक्षयन्ति आज्यम् ।

पा १.४.८१,८२ छन्दसि विषये प्रादय उपसर्गाः परेऽपि पूर्वेऽपि व्यवहिताश्च । ३.२.३७ तं.

पा ६.१.७० छन्दसि शेर् बहुलम् । शि (नि) इति एतस्य बहुलं छन्दसि विषये लोपो भवति । या क्षेत्रा यानि क्षेत्राणि ।

तैसं ७.२.८ छन्दांसि वा अन्योन्यस्य लोकं अभिध्यायन्ति–गायत्री त्रिष्टुभः, त्रिष्टुब् जगत्यः, जगती गायत्र्यः ।

कात्यायनप्रतिज्ञासूत्रे छन्दोगा बह्वृचाश्चैव, तथा वाजसनेयिनः । उच्चनीचस्वरं प्राहुः स वै भाषिक उच्यते । १२.३.२० ब्राह्मणे तु उदात्तानुदात्तौ भाषिकस्वरौ ।

अमरकोशः २.९.७६ छागश्छागलो बस्तः । ६.८.३९ छागबस्तछगलकाः अजे ।

तैब्रा ३.६.८.१ छागस्य वपाया मेदसोऽनुब्रूहि । २.१.२०; ६.८.३१; १०.४.३२

मैसं ३.१०.२ छिद्रापिधानार्थः । ३.६.२७ सुशिरो वा एतर्हि पशुः यर्हि वपां उत्खिदन्ति, यद्व्रीहिमयः पुरोडाशो भवति अपहित्यै वा असुषिराय (असुरत्वाय) ।

तैसं ६.३.३ छिद्यमानस्य यूपस्य यः प्रथमः शकलः स स्वरुः । ४.२.१-४ यः प्रथमः शकलः परापतेत् तं अपि आहरेत् ।

तैसं ७.५.४ जगतीं वै छन्दांसि प्रत्यवरोहन्ति, आग्रयणं वै ग्रहाः, बृहत् पृष्ठानि, त्रयस्त्रिंशस् स्तोमाः । १०.५.८५

| | |
|---|---|
| ऐब्रा १.२८ | जगत्या वैश्यस्य कार्यं जागतो हि वैश्यः। ८.३.२२ जगतीं वैश्यस्य अनुब्रूयात् जागतो हि वैश्यः। |
| तां १४.३.५ | जगदाख्यं साम ऋक्तः स्यात् (विषुवति)। १०.५.५८ जगत्यां उत्पन्नं साम स जगत्सामा। |
| जगत्साम ११५२ | प्रो अयासीदिन्दुरिन्द्रस्य निष्कृतं सखा सख्युर् न प्र मिनाति सङ्गिरम्। |
| ऋ ९.८६.१६ | मर्य इव युवतिभिः समर्षति सोमः कलशे शतयामना पथा॥ |
| साम ११५३ | प्र वो धियो मन्द्रयुवो विपन्युवः पनस्युवः संवरणेष्वक्रमुः। |
| ऋ ९.८६.१७ | हरिं क्रीडन्तमभ्यनूषत स्तुभोऽभि धेनवः पयसेदशिश्रयुः॥ |
| साम ११५४ | आ नः सोम संयतं पिप्युषीमिषमिन्दो पवस्व पवमान ऊर्मिणा। |
| ऋ ९.८६.१८ | या नो दोहते त्रिरहन्नसश्चुषी क्षुमद् वाजवन् मधुमत् सुवीर्यम्॥ १०.५.५८ |
| ऋ १०.४७.१ | जगृभ्मा ते दक्षिणमिन्द्र हस्तं, (वसूयवो वसुपते वसूनाम्। विद्मा हि त्वा गोपतिं शूर गोनामस्मभ्यं चित्रं वृषणं रयिं दाः॥) ९.१.६,९ |
| तां २२.९.३ | जनकसप्तरात्रेण यजेत। ८.३.४ तं. |
| पा १.४.३० | जनिकर्तुः प्रकृतिः। १.३.२४ तं. |
| पा धातुपाठे ३९७,३९८ | जप व्यक्तायां वाचि मानसे च। १२.४.१ |
| तैसं ३.४.६ | जयान् जुहुयात्। (चित्तं चित्तिश्चादयः-तैसं ३.४.४) |
| शत १२.४.१.१ | जरामर्यं वा एतत् सत्रं यद् अग्निहोत्रं दर्शपूर्णमासौ च, जरया ह वा एताभिर् विमुच्यते मृत्युना वा। २.४.४,५ |
| तैसं ५.४.३ | जर्तिलयवाग्वा जुहुयात्, गवीधुकयवाग्वा, न ग्राम्यान् पशून् हिनस्ति नारण्यान्, अथो खल्वाहुः अनाहुतिर् वै जर्तिलाश्च गवीधुकाश्च इति, पयसाऽग्निहोत्रं जुहोति। १०.८.७ अजक्षीरेण जुहोति, आग्नेयी वा एषा यद् अजा। १०.८.७ |
| नि १३.७ | जर्भरी = भर्तारौ, तुर्फरी तु हन्तारौ अश्विनौ। १.२.४९ |
| शत ३.८.५.६ | जाघन्या पत्नीः संयाजयन्ति। ३.३.२०,२३; ६.१.१६; १२.४.१०,११,१६ |
| बौधा धर्म १.२.३.५ | जातपुत्रः कृष्णकेशो अग्नीन् आदधीत। १.३.३ कृष्णकेशो अग्नीन् आदधीत इति श्रुतिः। |
| आप ५.११.४,६ | जाते वरं ददाति, जातं अञ्जलिना गृह्णाति, जातं अभिप्राणिति। ५.१.२ |
| पा १.२.५८ | जात्याख्यायां एकस्मिन् बहुवचनं भवति, बहुषु वा एकवचनम्। न तु एकस्मिन् बहुषु वा द्विवचनं भवति। १०.३.४० |
| गोभिल गृह्यभाष्ये १.८.६ | जामदग्न्या वत्सविदा आर्ष्टिषेणाश्च ते त्रयः पञ्चावत्तिनः, तथैव च भार्गवाश्च्यवना और्वाश्च। १०.७.६४-७१ न्यामा. |
| तैसं २.६.६ | जामि वा एतद् यज्ञस्य क्रियते यद् अन्वञ्चौ पुरोडाशौ उपांशुयाजं अन्तरा यजति। २.२.९ |
| आप २.१८.२३ | विष्णुर् उपांशु यष्टव्यो अजामित्वाय, प्रजापतिर् उपांशु यष्टव्योऽजामित्वाय, अग्नीषोमौ उपांशु यष्टव्यौ अजामित्वाय-आज्यहविर् उपांशुयाजः पौर्णमास्यां एव भवति, वैष्णवोऽग्नीषोमीयः प्राजापत्यो वा। |
| तां १६.५.२५ | जामि वा एतद् यज्ञस्य क्रियते यद् एकं भूयः क्रियते। १०.५.१९ |

तैसं ६.३.१० — जायमानो ह वै ब्राह्मणस्त्रिभिर् ऋणवान् जायते ब्रह्मचर्येण ऋषिभ्यः, यज्ञेन देवेभ्यः, प्रजया पितृभ्यः इति । स वै तर्हि अनृणो यदा यज्वा ब्रह्मचारी प्रजावान् इति । ६.२.३१ एष वा अनृणो यः पुत्री यज्वा ब्रह्मचारिवासी ।

आप ५.४.१० — जायापती अग्नीन् आदधीयाताम् । ६.८.२२ न्यामा. (क्षौमे वसानौ

मैसं १.६.४ — जायापती... )

मैसं १.५.६ — जीर्यति वा एष आहितः पशुर् यद् अग्निः, तद् एतानि एव अग्न्याधेयस्य हवींषि संवत्सरे संवत्सरे निर्वपेत् । तेन वा एष न जीर्यति, तेन एनं पुनर्नवं करोति तन्न सूक्ष्मम् । ३.६.१३

तैसं २.४.१४ — जुषन्तां युज्यं पयः । ८.२.२३

पा धातुपाठे १२१४ — जुषी प्रीतिसेवनयोः । ९.१.३८ तं.

तां १३.१२.१४ — जुहूषा वा एतर्हि वाग्भवति यर्हि पृष्ठ्यः षडहः संतिष्ठते, न बहु वदेत्, नान्यं पृच्छेत्, नान्यस्मै प्रतिब्रूयात्, मधु आशयेद् घृतं वा । १०.४.१/१

तैसं १.५.९ — जुहोति । १०.४.१ अग्निहोत्रं जुहोति ।

मैसं ३.१.१ — जुह्वा जुहोति । ३.७.२३; ४.३.१ जुह्वा होमं अभिनिर्वर्तयति ।

तैसं ६.३.७ — जुह्वा पशुं अनक्ति । ८.१.१२

वाराह १.३.६.५ — 'जुह्वा वसुरसि' आदिभिर् अञ्जनम् । १२.२.२६ जुह्वा परिधीन् अनक्ति- 'वसुरसि' इति मध्यमं, 'उपवसुः' इति दक्षिणं, 'विश्वावसुः' इति उत्तरम् ।

मनुस्मृ ८.५७ — ज्ञातारः सन्ति मेत्युक्त्वा (म इत्युक्त्वा) १.३.२४ तं. साक्षिणः सन्ति मेत्युक्त्वा ।

न्यासू १.१.४१ — ज्ञानस्य प्रामाण्यं अप्रामाण्यं उभयं अपि कारणगुणदोषादिना निर्णीयते । १.१.२ नैयायिकाः विमृश्य पक्षप्रतिपक्षाभ्यां अर्थावधारणं निर्णयः ।

सांख्यसू ५.५१ — ज्ञानस्य प्रामाण्यं अप्रामाण्यं च स्वत एव निर्णीयते । १.१.२ सांख्याः निजशक्त्यभिव्यक्तेः स्वतः प्रामाण्यम् ।

पाम. १.१.३.१ — ज्ञाने धर्म इति चेत्, तथा अधर्मः (अपशब्दज्ञाने) । १.३.२७ तं.

तैसं ३.५.९ — ज्येष्ठो वा एष (दधिग्रहो) ग्रहाणां यस्य एष गृह्यते ज्यैष्ठं एव गच्छति । ४.४.९

तां. ७.६.१२ — ज्योगामयाविनः उभे (बृहद्रथन्तरे) कुर्यात् । १०.६.४

तैसं ७.४.६ — ज्योतिरेव पुरस्ताद् दधाति । ७.३.५

ऐब्रा १८.१५ — ज्योतिर् गौर् आयुर् इति त्रीणि, गौर् आयुर् ज्योतिर् इति त्रीणि षडहे ।

तैसं ७.४.४ — ज्योतिर् गौर् आयुर् इति त्र्यहा भवन्ति । ७.३.५

ता १८.४.१ — ज्योतिष्टोमपूर्वको हि वैश्यस्तोमः । १०.४.४२

आप १०.२.१ — ज्योतिष्टोमः कर्तव्यः सोमेन स्वर्गाय । १.१.३२ ज्योतिष्टोमेन स्वर्गकामो यजेत ।

तां १५.१.१० — ज्योतिष्टोमे गौश्च अश्वश्च दक्षिणा । ३.४.२८

शत १०.२.१.६ — ज्योतिष्टोमेन यजेत । २.२.१९; ८.१.१६; ७.१.२

आप १०.२.१ — ज्योतिष्टोमेन स्वर्गकामो यजेत । १.१.२, ३२; २.३.१; ३.३.१०; ३.५.१८, २३; ३.६.३; ३.७.१८; ३.८.१२; ४.४.३९, ४.४.४०; ६.१.१, ४,२४; ६.२.३; ७.४.१; ८.१.३; ९.१.९, ५०; ९.२.२१, २५/२; १०.१.४; १० ३.२३; १० ३.३९

| | |
|---|---|
| मैसं ३.१०.९ | ज्योतिष्टोमे प्रतिसवनं सवनीयाः पुरोडाशाः । ( मैसं ३.१०.५ अनुसवनं ) तेषु हविष्कृदावृत्तिः कालभेदात् । ११.४.५४ |
| तां. ८.८.१० | ज्योतिष्टोमे प्रथमं बृहद्रथन्तरे वैकल्पिके पृथक् चोदिते । २.३.१ तं. |
| तां. १६.५.२४ | ज्योतिष्टोमे रथन्तरयोनौ पृष्ठं कृतम् । १०.४.४३ पृष्ठाणां रथन्तरं पृष्ठं भवति । |
| तां. ८.८.११ | ज्योतिष्टोमे सौभरं उक्थ्यानां ब्रह्मसाम विहितम् । २.२.२८ तं. यदि बृहत्सामा अतिरात्रः स्यात् सौभरं उक्थ्यानां ब्रह्मसाम कार्यम् । |
| मैसं ३.८.१० | ज्योतिष्मतीर् अनुब्रूयात् । १२.३.३८ ज्योतिष्मतीः कृत्वा अग्निष्टोमेन स्तुवते । |
| साम. ज्योति १८३१ | अग्निर्ज्योतिर्ज्योतिरग्निरिन्द्रो ज्योतिर्ज्योतिरिन्द्रः । सूर्यो ज्योतिर्ज्योतिः सूर्यः ॥ |
| साम १८३२ | पुनरूर्जा नि वर्तस्व, पुनरग्न इषायुषा । पुनर् नः पाह्यꣳहसः ॥ |
| साम १८३ | सहरय्या नि वर्तस्वाग्ने पिन्वस्व धारया । विश्वप्स्न्या विश्वतस्परि ॥ |
| तैब्रा १.५.११.१ | ज्योतींषि स्तोमा यस्य स ज्योतिष्टोमः । ४.४.४० |
| पा ४.१.४,५,१३ | टाबादयः स्त्रीप्रत्ययाः । ९.१.३३ टाप् ङीप् डाप् ङीष् । |
| पा ४.१.१५ | टित्, ढ, अण्, अञ्, द्वयसच्, दघ्नच्, मात्रच्, तयप्, ठक्, ठञ्, कञ्, क्वरप्, ख्युनाम् । स्त्रियां ङीप् । १.३.३ |
| तैसं ७.३.९ | त एता विंशतिं रात्रीर् अपश्यन् । ४.३.१७ - १९ न्यामा. |
| तैसं १.७.३ | त एते वै देवा अहुतादो यद् ब्राह्मणाः, यद् अन्वाहार्यं आहरन्ति, तान् एव तेन प्रीणाति । १२.४.४७ देवाः प्रत्यक्षं |
| वाराह १.६.१.१० | तक्षणं यूपधर्मः । १२.२.२७ अष्टाश्रिर् भवति–तैसं ६.३.३ परशुना प्रहरति । तक्षणं उच्छ्रयणं निखननं इति यूपधर्माः । ६.३.४ खनति एते च परिधिर् विरोधिधर्माः, परिधौ न कार्याः । |
| तैब्रा ३.५.११ | तच्छंयोर् आवृणीमहे । १०.७.३८–३९ न्यामा |
| आप ३.३.२ | तं ( आग्नेयं पुरोडाशं ) चतुर्धा कृत्वा बर्हिषदं करोति । ३.१.२७ तं. |
| तैब्रा ३.३.८.६ | |
| बृहस्पतिस्मृ ६२ | तडागकृद् देवदत्तः नियतोऽस्य स्वर्गः । ४.३.१६ यस्तडागं नवं कुर्यात्, पुराणं वाऽपि खानयेत् । सर्वं कुलं स उद्धृत्य, स्वर्गलोके महीयते ॥ |
| मनुस्मृ ८.२६४ | तडागं खनितव्यम् । १.३.१ तडागानि कार्याणि ॥ |
| आप १.२१.७–९ | तण्डुलान् पिनष्टि । ३.१.७; ४.२.२६; ११.१.२७ |
| तैसं २.५.५ | तण्डुलान् विभजति ( त्रेधा ) ६.५.१६–१७ न्यामा |
| तैब्रा ३.८.१५.३ | तण्डुलैर् जुहोति । २.२.१३ तं. |
| सत्या १.३.५१-५० | तण्डुलैर् आतञ्चनं करोति, सोमेन आतञ्चनं करोति ( दध्यभावे ) |
| पा ४.३.७४ | तत आगतः । २.२.१० तं. पञ्चमी समर्थाद् आगत इत्यर्थे प्रत्ययः । मथुराया आगतः अण् माथुरः । राष्ट्रियः–घः । |
| तां २१.१४.८ | ततः संवत्सरे राजीवा आनयन्ति, तांश्चैव उक्षणस्तान् पर्यग्निकृतान् इतरा आलभन्ते प्रेतरान् उत्सृजन्ति । ११.२.५४ |
| तां ९.८.१३ | ततः संवत्सरेऽस्थीनि याजयेयुः । १०.२.५५ |
| तां ७.८.१ | ततो वसु वामं समभवत् तस्माद् वामदेव्यम् । १.३.२४ तं. |
| तैसं १.३.१२ | ततो वै स वरुणपाशान् अमुच्यत । ३.४.३१ |

तां १०.३.१ द्वादशाहम् ऋद्धिकामा उपासीरन् । ८.२.२५ द्वादशाहम् ऋद्धिकामा उपासीदत् सोऽराध्नोत् द्वादशाहम् ऋद्धिकामा उपेयुः । (तैसं ७.४.५)

तां ४.९.९ द्वादशाहस्य यानि गतरसानि छन्दांसि मानसेन तानि आप्याययन्ति– १०.६.३५ मनसा हिंकरोति, मनसा प्रस्तौति, मनसा उद्गायति मनसा प्रतिहरति, मनसा निधनम् उपयन्ति, असमाप्तस्य समाप्त्यै ।

गोपथ १.५.२३ द्वादशाहिकानि संस्थाविशिष्टानि स्युः । ८.३.९ द्वादशाहसंस्थाकानि । यथा अग्निष्टोमसंस्था, उक्थ्यसंस्था, षोडशीसंस्था, अतिरात्रसंस्था च ।

तैसं ७.२.९ द्वादशाहेन प्रजाकामं याजयेत् । ६.२.१; ९.२.२१/२; १०.५.१; ११.४.१२, १४,१८

तैसं ७.२.१० द्वादशाहेन (प्रजाकामो) यजेत । ८.१.१७ य एवं विद्वान् द्वादशाहेन यजेत ।

तैसं ७.२.९ द्वादशाहेन प्रजाकामो यजेत । ८.२.२५ यः कामयेत प्रजायेय स द्वादशरात्रेण यजेत ।

तां ४.२.१ द्वादशाहे प्रथमम् अहः । प्रायणीयं नाम प्रायणीयोऽतिरात्रः । ७.५.३ प्रायणीयम् एतद् अहर् भवति ।

तैब्रा १.५.१२.३ द्वादशैकाष्टका । ६.५.३३ प्रतिमासे कृष्णपक्षे अष्टमी सा एकाष्टका ।

तां १०.३.९ द्वादशोपसत्ता अहीनस्य धर्मः । ३.१.२१; ७.४.१४; ८.१.१७ चतुर्धा वा एतास्तिस्रस्तिस्रो रात्रयो यद् द्वादशोपसदः, ताभिः यज्ञं सम्भरति

तैसं ७.२.९ द्वादशाहोऽहर्गणः । (द्वादशाहः) प्रायणीयोऽतिरात्रः । ८.२.२४ पृष्ठ्यः षडहः

तैसं ७.२.६ त्रयश्छन्दोमा – चतुर्विंशो भवति चत्वारिंशद् अक्षरा गायत्री गायत्रं ब्रह्मवर्चसं चतुश्चत्वारिंशो भवति, चतुश्चत्वारिंशदक्षरा त्रिष्टुप् । अष्टाचत्वारिंशो भवति, जगती ।

तैसं ७.३.१ अविवाक्यम् अहः दशमेऽहनि भवति ।

तैसं ७.३.३ उदयनीयोऽतिरात्रः । सूत्रम् – उभयसंज्ञको सत्रम् अहीनश्च । ८.२.२४

तैसं ५.१.४ द्वाभ्यां खनति । १२.३.३०; १२.४.४ + प्रतिष्ठित्यै ।

ऐब्रा १.२८ द्वाभ्यां गायत्रीभ्यां वैश्यस्य । ८.३.२२ जागतो वैश्यः ।

तैसं ७.४.९ द्वाभ्यां लोमम् अवद्यति, द्वाभ्यां त्वचं, द्वाभ्याम् असृक्, द्वाभ्यां मांसं, (द्वाभ्यां अस्थि, द्वाभ्यां मज्जानम् आत्मदक्षिणम् वै सत्रम् आत्मानम् एव दक्षिणां नीत्वा सुवर्गं लोकं यन्ति) इत्येवं षड् द्विकान् अनुक्रम्य आह यद् द्वादशोपसदो भवन्ति आत्मानम् एव निरवदयत । ७.४.१४;८.१.१७

तैसं २.५.१० द्वाविंशतिं – द्वात्रिंशतं (सामिधेनीः) अनुब्रूयात् प्रतिष्ठाकामस्य । १०.५.२७

पा १.४.४९ द्वितीया विभक्तिः कर्तुर् इप्सिततमे स्मर्यते । २.१.१० कर्तुर् ईप्सिततमं कर्म द्वितीया कर्मणि – कर्मणि द्वितीया । २.१.१०

तां ६.१०.१४ द्वित्व – द्वियजमानके प्रयोगे प्रतिपदम् आह । ३.३.१७ तं.

साम १००१ ऋ.९.१९.२ युवं हि स्थः स्वःपती इन्द्रश्च सोम गोपती । ईशाना पिप्यतं धियः ॥

तैसं १.८.८ द्विदेवतत्वसामान्येन ऐन्द्रापौष्णादीनाम् अग्नीषोमीय-ऐन्द्राग्नप्रकृतिकत्वम् । २.१.१७ तं.

मैसं ३.१०.३ द्विरवद्यति । ५.२.५; १०.७.७२

| | |
|---|---|
| शत ३.८.३.२७ | 'द्विर् अवद्यति' इति तस्य प्रतिषेधः । १०.७.६ अनिज्याङ्गावदाने न अंसयोर् अवद्यति, न शिरसो, न अनूकस्य, न अपरसक्थ्योर् अवद्यति । (अनूकं मूत्रबस्तिः– सायण) |
| सत्या १७.६.१ | द्विरात्रादीनां आ एकादशरात्रात् अहीनत्वं यजतिचोदनात् । ८.२.२६ द्विरात्रेण यजेत । ८.१.१७; ८.२.२६; १०.५.१, १२,१३; १०.६.६० |
| शांब्रा १३.६ | द्विर् ऐन्द्रवायवस्य भक्षयति । द्विर् ह्येतस्य वषट्करोति । ३.५.१८ |
| शत ५.५.४.२६ | द्विर् हविषोऽवद्यति । ३.४.८; ५.२.६; १०.८.३१; ११.१.३७ |
| शांब्रा १३.६ | द्विर् ह्येतस्य वषट्करोति । ३.५.१८ (ऐन्द्रवायवस्य) |
| पा ६.३.१ वा | द्विवचनबहुवचनानाम् असमासः । ६.७.३३ |
| काठकसं २९.८<br>मैसं ४.७.९ तैसं ६.६.४ | द्वे द्वे रशने यूपम् ऋच्छतः–तस्मात् स्त्रियः पुंसोऽतिरिक्तास्तस्माद् उत एको बह्वीर् जायाः विन्दते, नैका बहून् पतीन् । १.३.९ तं. |
| मुंडक. उप १.१.४.५ | द्वे विद्ये वेदितव्ये, इति ह स्म यद् ब्रह्मविदो वदन्ति परा चैव अपरा च । तत्र अपरा ऋग्वेदो यजुर्वेदः सामवेदोऽथर्ववेदः, शिक्षा कल्पो व्याकरणं निरुक्तं छन्दो ज्योतिषं इति । अथ परा यया तद् अक्षरम् अधिगम्यते २.३.५-११ न्यामा. |
| मैसं १.१०.८<br>तैसं १.६.८ | द्वे ऊरू वै देवानां (यद्) याज्यानुवाक्ये, एकया प्रत्यागच्छति गमयति अनया अथात्र तिस्रः कार्याः इति पितृयज्ञे याज्यानुवाक्यात्रयविधानपरे वाक्ये तयोर् द्वित्वं उचितं दर्शयति–न सर्वाणि सह यज्ञायुधानि प्रहृत्यानि मानुषं तत् क्रियते नैकमेकं पितृदैवं तत् । द्वे द्वे सह प्रहृत्ये याज्यानुवाक्ययो रूपम् । १२.४.४ |
| तां ९.३.९ | द्वे वै संस्तुतानां विराजम् अतिरिच्यते । २.४.८,२६; १०.५.३५ द्वे स्तोत्रीये । |
| शत २.४.४.६ | द्वे हि पौर्णमास्यौ द्वे अमावास्ये यजेत, अत्र ह्येव खलु सा संपद् भवति । २.३.९ दाक्षायणे |
| आप २.१६.७ | द्वौ वृणीते । ६.१.४३ न्यामा. द्वयोर् गोत्रप्रवर्तकयोर् ऋष्योर् नामोच्चरणकर्तृकं वृणीते । यथा उपमन्युवसिष्ठगोत्रोत्पन्नोऽहम् । |
| कात्या ७.५.२३ | द्वौ शंयू द्वे इडे । १०.७.४० पूर्वश्च उत्तरश्च द्वौ शंयू, पूर्वा च उत्तरा च द्वे इडे । पूर्वः पत्नीसंयाजानां पश्चादुत्तरः । |
| तैसं ६.११.२ | द्व्यक्षरो वषट्कारः, एष वै प्रजापतिः, सप्तदशो यज्ञे अन्वायत्तः । ८.४.१६ |
| शत १.७.४.११ | द्व्यवदानं जुहोति । ३.४.३८, ४०; ६.४.२ द्विर् हविषोऽवदाय अथोपरिष्टात् आज्येनाभिघारयति । |
| मैसं ३.६.६ | द्व्यहं नाश्नाति । ३.८.९ सायं प्रातर् वै मनुष्याणां देवहितं अशनम्, अविनीय सायम् अशनं व्रतं व्रतयति । |
| शत २.५.१.३ | द्व्यहं साकमेधैः । ५.१.२२ स वै द्व्यहं अनूचीनाहं यजते (साकमेधैः) |
| पा. १.४.२२ | द्व्येकयोर् द्विवचनम् एकवचनम् । ३.४.१३ तं. |
| ऋ १०.४.१<br>तैसं २.५.१२ | धन्वन्निव प्रपा असि (त्वमग्न इयक्षवे पूरवे प्रत्न राजन् । प्र ते यक्षि प्र त इयर्मि मन्म भुवो यथा वन्द्यो नो हवेषु ॥) १.३.२ |
| तैसं १.१.७<br>तैब्रा ३.२.७.२ | धर्ममसि अन्तरिक्षं दृंह, प्राणं दृंह, अपानं दृंह सजातान् अस्मै यजमानाय पर्यूह इति द्वितीयं कपालम् अङ्गारेषु उपदधाति । १०.५.१-६ न्यामा. |

आपध २.५.११,१२,१३ धर्मप्रजासंपन्ने दारे नान्यां कुर्वीत, अन्यतरापाये कुर्वीत । ६.८.१८
धर्मं प्रति हि विप्रतिपन्ना बहुविदः । १.१.१
आप परि १.१.१.१ धर्मं व्याख्यास्यामः । १.३.२४ तं.
पाम १.१.१ धर्माय नियमः । लोकतोऽर्थं प्रयुङ्क्ते शब्दप्रयोगे शास्त्रेण धर्मनियमः ।
१.३.२७ तं.
मनुस्मृ मेधातिथि धर्मे च अर्थे च कामे च नातिचरितव्या । ६.१.१४,१७; ६.८.१७,१८
पा ३.१.९१ धातोः । २.२.१ तं.
मैसं ४.६.२ धाना आश्विनपात्रे निदधाति । ३.८.३३
तैसं ६.५.९ धानाभिर् हारियोजनं श्रीणाति । ९.१.१२;९.४.४५; ११.२.६८
तैसं १.१.६ तैब्रा ३.२.६.३ धान्यमसि धिनुहि देवान् इति दृषदि आवपति । ९.१.३८/२
वाज १.३१.३ धामनामाऽसि प्रियं देवानाम् अनाधृष्टं देवयजनमसि ( सवितुस्त्वा प्रसवे
आज्यग्रहणमन्त्रः । ) ११.४.४४
भर १३.१४.१ धारया गृह्णाति । २.२.१७–२० न्यामा. तिरःपवित्रं स्रवन्त्या धारया
सत्या ८.३.४६ ग्रहान् गृह्णाति ।
मनुस्मृ ४.३६ धारयेद् वैणवं दण्डं शुभे रौक्मे च कुण्डले । ३.४.२४ तं. धारयेद् वैणवीं
यष्टिं सोदकं च कमण्डलुम् । यज्ञोपवीतं वेदं च शुभे रौक्मे च कुण्डले ॥
मैसं ४.८.९ धारयेयुस्तं यं कामाय गृह्णीयुः । १०.५.६९,७२,७४ ऐन्द्रवायवं गृहीत्वा
सादयेत्, तं यं कामाय गृह्णीयुः ।
आप ६.३.१-३ धार्येऽग्नौ पर्युक्षणं परिसमूहनं तृणापचयम् अहनि अहनि क्रियन्ते । ९.४.२९
धार्यो गतश्रिय आहवनीयः ।
नित्यो गतश्रिय आहवनीयो धार्यते ।
अस्यानुगमे प्रायश्चित्तम्–अग्नये ज्योतिष्मते अष्टाकपालं निर्वपेत् । ९.४.२९
साम १९३ धुरि सामानि । १०.५.१० एकस्याम् ऋचि गेयम् । सूत्रम्--एकस्यां वा
स्तोमस्य आवृत्तिधर्मत्वात् । १०.५.११
साम १९३ ऋ ८.४९.१ त्वावतः पुरूवसो वयम् इन्द्र प्रणेतः । स्मसि स्थातर् हरीणाम् ॥
ऋ १.२७.११ धूमकेतुः । अग्नेर् नाम । १०.४.२३ स नो महाँ अनिमानो धूमकेतुः
पुरुश्चन्द्रः । धिये वाजाय हिन्वतु ॥
आप २२.२.२७ धेनुः –अथैष भूर् विश्वेदेवः त्रिवृदेव सर्वस्तस्य विश्ववत्यः स्तोत्रिया धेनुर्
दक्षिणा । १०.६.१५
तैब्रा १.६.१.५ तैसं ५.७.३ धेनुर् दक्षिणा । १०.६.२० अग्नौ दक्षिणा–चतस्रो धेनूर् दद्यात् ।
शत २.९.२.११ धेनुर् भुवि कृत्स्नस्य क्रतुदाक्षिण्यस्य निर्वर्तयित्री । १०.६.१९
तैसं १.१.७ ध्रुवमसि पृथिवीं दृंह आयुर् दृंह, प्रजां दृंह, सजातान् अस्मै यजमानाय पर्यूह
आप १.२२.२ इति मध्यमं कपालं अङ्गारेषु उपदधाति । १०.५.१ न्यामा.
मनुस्मृ ५.५ न कलञ्जं भक्षयितव्यं, न लशुनं, न गृञ्जनम् । ६.२.१९
काठकसं १२.६ न केसरिणो ददाति । ६.७.४; १०.३.४७ अश्वो न प्रतिगृह्यः, उभयादन् वा ।
आप ६.४.८ नक्षत्राणि दृष्ट्वा जुहोति । ५.१.३३ नक्षत्रं दृष्ट्वा प्रदोषे निशायां वा सायम् ।
तैसं ६.१.१ नखानि निकृन्तते । ३.८.३; ४.३.१
मैसं २.६.५ नखावपूतानां चरुः । १०.४.१

तां ८.६.९,१० ' न गिरा गिरा ' इति ब्रूयात् । यद् गिरा गिरा इति ब्रूयात् आत्मानं तद् उद्गाता उद्गिरेत् ।

साम ७०३ ऋ. ६.४८.१ ऐरं कृत्वा उद्गेयम् । ९.१.५० यज्ञायज्ञा वो अग्नये गिरागिरा च दक्षसे । यज्ञायज्ञीयं साम

तैब्रा १६.६.७ न च प्रयाजान् यजति न च अनुयाजान् यजति । ४.४.३१

तैसं ५.२.७ न चेतव्यम् – हिरण्यं निधाय चेतव्यं । १.२.५,१८ रुक्मम् उपदधाति, अमृतं वै हिरण्यम् अमृते एव अग्निं चिनुते ।

मैसं १.४.११ न चैतद् विद्मो वयं ब्राह्मणा वा स्मः अब्राह्मणा वा । १.२.२ नैव एतद् ज्ञायते किं वा ब्राह्मणा वयम् उत अब्राह्मणा वा । १.२.२ (सूत्रम्–स्यपराधात् कर्तुश्च पुत्रदर्शनात् । १.२.१३ )

पाम २.१.५१ न चैष नियोगो वृत्तिपक्षे नित्यः समास इति । विभाषां हि स्म भगवान् पाणिनिर् अधीते । १०.६.५

काठकसं १२.४ न जगत्या परिदध्यात् । यज् जगत्या परिदध्यात्, तत् छन्दांसि गमयेत । त्रिष्टुभा परिदधाति । १०.५.३१

मनुस्मृ ४.३४ न जीर्णमलवद्वासाः स्यात् सति विभवे । ३.४.२४ तं. न सीदेत् स्नातको विप्रः क्षुधा शक्तः कथञ्चन । न जीर्णमलवद्वासा भवेच्च विभवे सति ॥

निरुक्त १.१८ न तज् ज्वलति कर्हिचित् । १.३.२४ तं. यदधीतम् अविज्ञातं निगदेनैव शब्द्यते । अनग्नाविव शुष्केन्धौ न तज् ज्वलति कर्हिचित् ॥

ऋ ६.२८.३ न ता नशन्ति न दभाति तस्करो नासामामित्रो व्यथिरा दधर्षति । देवाँश्च याभिर् यजते ददाति च ज्योगित् ताभिः सचते गोपतिः सह ॥ २.१.३० ( गोसूक्ते )

शत १.५.३.२५ न तावत्येव होतव्यम्, अथ सौविष्टकृतानि अवद्यति । अथ सौविष्टकृतानि अवदाय नैव जुहोति । ऐडानि अवद्यति । ५.२.१० हविर्भिश्चरति उभौ स्विष्टकृद् इडा च ।

शत १.६.३.१९ न तौ पशौ करोति ( आज्यभागौ ) न सोमे । १०.८.५

साम ६८१ ऋ ७.३२.२३ न त्वावान् अन्यो दिव्यो न पार्थिवो न जातो न जनिष्यते । अश्वायन्तो मघवन्निन्द्र वाजिनो गव्यन्तस्त्वा हवामहे ॥ ९.२.२५/१

तैसं ७.२.१० न द्वौ पुरुषौ संभूय यजेयाताम् । ६.१.१७ एक एव यजेत इति वचनात् । ( सत्रम् अपोद्य )

वाराह १.१.१.१६ न ध्यानेन इति मन्त्रान्तेन कर्मसंनिपातः स्यात् । ९.४.९ ( ' न ध्यानादिना ' मन्त्रान्तेन–पाठान्तरम् ) मन्त्रान्तेन कर्म संनिपातयेत् ।

आप २.१६.८ न पञ्चातिवृणीते । ६.१.४३

काठकसं २३.९ न पत्नीः संयाजयन्ति । १०.७.३८ पत्नीं तु न संयाजयन्ति ।

शत १.६.३ १९ न पशौ । ४.१.१४ न तौ ( आज्यभागौ ) पशौ सोमे न ।

शत १२.१.१.१० न पूतः पावयेत् । ५.१.२ तं.

तैसं ५.२.७ न पृथिव्याम् अग्निश्चेतव्यः, नान्तरिक्षे, न दिवि, हिरण्यं ( रुक्मं ) निधाय चेतव्यम् । १.२.५.१८

मनुस्मृ ११.९४ — न पेया ब्रह्मवादिभिः । १.३.७ तं. गौडी पैष्टी च माध्वी च विज्ञेया त्रिविधा सुरा । यथैवैका तथा सर्वा न पातव्या द्विजोत्तमैः ॥ न पेया ब्रह्मवादिभिः (पाठान्तरम्)

शत १४.२.२.४४
भर ११.१२.१३ — न प्रथमे यज्ञे प्रवृज्यात्, द्वितीये तृतीये वा प्रवृज्यात् । ३.३.३२

तां ८.६.११
साम ७०३
ऋ ६.४८.१ — न 'प्र प्र' इति ब्रूयात् प्रप्रीति ब्रूयात् । ९.१.५८ वैश्वानरे वा एतद् उद्गाता आत्मानं प्रदधाति यत् 'प्र प्र वयं' इत्याह, 'प्रप्री वयं' इति वक्तव्यम् । यज्ञा यज्ञा वो अग्नये गिरागिरा च दक्षसे । प्र प्र वयममृतम् जातवेदसं प्रियं मित्रं न शंसिषम् ॥

तैब्रा २.१.४.९ — न बर्हिर् अनुप्रहरति, असंस्थितो हि तर्हि यज्ञः । ९.१.३०

तैसं २.६.१० — न ब्राह्मणं हन्यात् । ३.४.१७

आपध २.१४.१६ — न भर्त्रा सह विभजते । ६.१.१७ तं.

मनुस्मृ ५.५६ — न मांसभक्षणे दोषो न मद्ये न च मैथुने । प्रवृत्तिरेषा भूतानां निवृत्तिस्तु महाफला ॥ १.३.४ तं.

तैब्रा १.१.९.७ — न मांसम् अश्नीयात् । १०.६.५३

वसिष्ठस्मृ १२ — न म्लेच्छभाषां शिक्षेत । १.३.२४ तं.

तैब्रा ३.७.५.१० — न राजन्यो न वैश्यो वा सांनाय्यं पिबेत्, असोमपीथो ह्येषः । १२.४.४५

तां २४.१५.१ — नव त्रिवृन्ति अहानि भवन्ति । ८.३.३,५ (पञ्चमे एकोनपञ्चाशद्रात्रे)

कात्या २२.३.३७ — नवनीतम् आज्यं भवति । ३.८.३६ इति नवनीतम् आज्यम् – श्येने

तैसं ६.१.१ — नवनीतेन अभ्यङ्क्ते । ३.४.११; १०.४.१०

तैब्रा १.६.२.३ — नव प्रयाजा इज्यन्ते, नवानुयाजा इज्यन्ते । अष्टौ हवींषि द्वौ आघारौ द्वौ आज्यभागौ त्रिंशत् संपद्यन्ते ॥ ७.१.१८-२१ न्यामा.

मैसं १.१०.८ — नव प्रयाजा नवानुयाजाः । ५.३.१;१०.३.१

तैसं ७.२.४ — नवरात्रेण यजेत । १०.५.१

शत १४.४.३.१५ — न वा अरेऽहं मोहं ब्रवीमि, अविनाशी वा अरेऽयं आत्मा अनुच्छित्तिधर्मा । मात्रा संसर्गस्तु अस्य भवति । १.१.५

तां १६.१.११ — न विश्वजिति कृत्स्नाः प्रतीयन्ते । तस्माद् द्वादशशतम् अत्र देयम् । विश्वजितः प्रकृतिर् ज्योतिष्टोमः, ज्योतिष्टोमे च द्वादशशतम् । ६.७.१५ सूत्रम्- अतद्गुणत्वात् तु नैवं स्यात् । 'द्वादशशतं दक्षिणा' इति गुणो विश्वजितो नास्ति । ६.७.१६

कात्या ७.१.७ — न वेदे तावन्तो (षोडश ऋत्विजो) वरीतव्याः । चतुरो वा आद्यान् वृणीते । (अध्वर्युं, ब्रह्माणं, होतारम्, उद्गातारं च) ३.७.२४

तां ७.७.५ — न वै बृहद्रथन्तरम् एकच्छन्दोऽयच्छत् । ततः ककुभौ उत्तरे उपादधुः तस्माद् बृहद्रथन्तरे एकस्मिन् तृचे कुर्वन्ति । ९.२.२५/१

मैसं १.१०.१३ — न वैश्वदेवे उत्तरवेदिम् उपवपन्ति, न शुनासीरीये । ७.३.२० न वैश्वदेवे उत्तरवेदिं उपवपन्ति, उप अत्र (वरुणप्रघासेषु) वपन्ति । न वैश्वदेवे त्रिंशदाहुतयः सन्ति, न साकमेधेषु, वरुणप्रघासेषु वाव त्रिंशदाहुतयः ।

| | |
|---|---|
| याज्ञस्मृ १.१३२ | न संशयं प्रपद्येत नाकस्माद्प्रियं वदेत् । नाहितं मानृतं चैव न स्तेनःस्यात् न वार्धुषी ॥ ३.४.१३ तं. |
| लाट्यायन ८.२.१ | अवभृथाद् उदेत्य वत्सत्वचम् आच्छादयति । ( शेषकर्म ) ६.७.१० |
| तैसं १.६.८ | न सर्वाणि सह यज्ञायुधानि प्रहृत्यानि मानुषं तत् क्रियते । न एकम् एकं पितृदेवं तत् । द्वे द्वे सह प्रहृत्ये याज्यानुवाक्ययो रूपम् । १२.४.४ |
| मैसं ३.८.२ | न सोमम् आज्येन आघारयति । ८.१.६ |
| शत १.६.३.१९ | न सोमेऽध्वरे तौ ( आघारौ ) करोति, न पशौ । १०.८.५ न्यामा. |
| आश्व ५.६.३ | न सोमेन उच्छिष्टा भवन्ति । ३.५.५२ न हि सोमेन |
| तैब्रा १.१.९.७; मैसं ३.३.१ | न स्त्रियम् उपेयात् । ५.३.२६,२७; १०.६.५३ |
| शत ३.८.३.९ | न स्वाहा करोति । १०.३.१७ सूत्रम् – मन्त्रं च नाह, पूर्वस्मिन् ( आघारे – वायव्यपशोः ) अमन्त्रवायव्यपशौ पूर्वाघारोऽमन्त्रकः – उत्तरेऽस्मिन् आघारे हिरण्यगर्भमन्त्रः ( तैसं ५.५.१ ) |
| शत १.५.३.२५ | न हि ततः पराम् आहुतिं यक्ष्यन् भवति । ३.५.४ नो हि ततः काञ्चन हविषो अग्नौ आहुतिं होष्यन् भवति । |
| छां ८.१५.१ | न हिंस्यात् सर्वभूतानि । १.१.२ अहिंसन् सर्वभूतानि । |
| पा १.१.७३ | न हि विस्मृते 'वृद्धिरादैच्' इत्यस्य सूत्रस्य कर्तरि 'वृद्धिर् यस्य अचाम् आदिस्' तद् वृद्धम् इति किञ्चित् प्रतीयेत । १.१.५ |
| पा १.१.१ | न हि वृद्धिशब्देन अपाणिनेर् व्यवहारतः आदैच् पाणिनिकृतिम् अननुमन्यमानस्य वा । १.१.५ |
| पा परिभाषा १ | न हि संदेहाद् अलक्षणम् । १.३.२४ तं. |
| आश्व ५.६.३ | न हि सोमेन उच्छिष्टा भवन्ति । ३.५.५२ ( न सोमेन ) |
| तैब्रा १.६.९.१,२ | न हि होतारं वृणीते न आर्षेयम् ( पितृयज्ञे )। ७.४.४,५; १०.८.१; ११.३.२० |
| शत ३.४.१.१८ | न ह्यत्र अनुयाजान् यक्ष्यन् भवति । ४.१.४०,४१ चतुर् गृहीतानि आज्यानि भवन्ति, न हि अत्र अनुयाजान् यक्ष्यन् भवति ( आतिथ्यायां ) चतुर् गृहीतानि आज्यानि गृह्णाति, न हि अत्र अनुयाजा भवन्ति । |
| वाराह ३.२.१.३४ | न ह्यत्र गौर् दीयते न वासो न हिरण्यम् । १०.२.३५,३८; १०.६.५८; अदक्षिणानि सत्राणि आहुः । |
| तां ८.६.९ | न ह्यात्मानं गिरेत् । ९.२.४० |
| मनु ४.६३ | नाञ्जलिना वारि पिबेत् । न कुर्वीत वृथाचेष्टां, न वार्यञ्जलिना पिबेत् । १.४.३० तं. |
| तां २०.१.४,५,६,७ | नातिरात्रे गृह्णाति ( षोडशिनम् )। २.४.२७; १०.८.६ ज्योतिष्टोमस्यातिरात्रे, नवसप्तदशातिरात्रे, विषुवदतिरात्रे, गोष्टोमातिरात्रे, आयुष्टोमातिरात्रे, एतेषु अतिरात्रेषु षोडशिनं गृह्णाति । |
| तैसं ६.३.१ | नाध्वर्युर् गायेत् । ३.७.३० |
| आप ४.३.६ सत्या २१.२.६० | नानुयाजेषु ये यजामहं करोति । १०.८.१,४,६ |
| तैसं २.२.५ | नानृतं वदेत् । ३.४.१२,१३; ४.१.४ |
| तैसं ५.२.७ | नान्तरिक्षे न दिवि अग्निश्चेतव्यः । १.२.५,१८ |

| | |
|---|---|
| मैसं ३.९.४ | नान्यस्य (वृक्षस्य) स्वरुं कुर्यात्, यदि अन्यस्य वृक्षस्य स्वरुं कुर्याद् अन्ये अस्य लोकम् आरोहेयुः। यूपस्य स्वरुं कुर्यात्। ४.२.३ |
| लाट्यायन २.१.११ | नाभिचरितव्यम्। १.१.२ न व्यभिचरेत्। अभिचारो नाम परस्य नाशोपायचिन्तनम्॥ |
| शत ३.८.३.२७ | नांसयोर् अवद्यति, न शिरसो, न अनूकस्य, न अपरसक्थ्योः। १०.७.६ |
| गोभिलगृ १.६.१८ | नायज्ञियां वाचं वदेत्। ६.१.१७-२१ न्यामा. |
| आप ८.७.१७ | नायुर्दा जुहोति, न साम गायति, न वा गमनमन्त्रं जपति। नाभिप्रव्रजनमन्त्रम्। वरुणप्रघासेषु अवभृथः। तत्र सौमिकाद् अवभृथाद् धर्मातिदेशः। सूत्रम् – तथा अवभृथः सोमात्। ७.३.१२ |
| मनुस्मृ ५.८७ | नारं स्पृष्ट्वास्थि सस्नेहं स्नात्वा विप्रो विशुध्यति। आचम्यैव तु निस्नेहं गामालभ्यार्कमीक्ष्य वा॥ ६.६.२ |
| तैब्रा ३.७.५.११,१२. | नारिष्टहोमान् जुहोति। ५.२.१७ दश ते तनुवो यज्ञ यज्ञियाः (चत्वारो मन्त्राः) |
| तैब्रा ३.७.५.११,१२,१३ | नारिष्टहोमेषु पार्वणहोमयोश्च पूर्णमासाय सुराधसे स्वाहा। ८.४.१५,१६ (नारिष्टान् जुहोति। ८.४.१९) |
| तैब्रा १.६.९ | नार्षेयं वृणीते। न होतारम्। १०.८.१-४ न्यामा. |
| सत्या १.१.७३ | नासोमयाजिनो ब्राह्मणस्य अग्नीषोमीयः पुरोडाशो विद्यते, एकेषाम् आग्नेयोऽष्टाकपालः, ऐन्द्राग्नो एकादशकपालो द्वादशकपालो वा। १०.८.३५-४६ न्यामा. |
| तैसं २.५.५ | नासोमयाजी संनयेत्। ५.४.२५ |
| मैसं १.४.११ | नास्य यज्ञो व्यथते प्रजापतौ यज्ञेन प्रतितिष्ठति। ८.४.१ |
| तैसं २.५.१ | नास्याः अन्नम् अद्यात्, अभ्यञ्जनं वाव स्त्रिया अन्नं इति उपगमनप्रतिषेधो विधीयते। ३.४.१९ |
| आप १.११.२ | नास्यैतां रात्रिं कुमाराश्च न पयसो लभन्ते। ११.१.४९ नास्यैतां रात्रिं पयसाऽग्निहोत्रं जुहुयात्, यथाऽन्यस्यै देवतायै प्रत्तम् अन्यस्यै देवतायै दद्यात् तादृक् तत् स्यात्। यवाग्वा जुहुयात्। ११.१.५१ |
| सत्या १७.१.२ | निकायिनः–साहस्राः साद्यस्क्राः (सहस्रदक्षिणाः) ८.१.१९ चत्वारः साहस्राः, चत्वारः साद्यस्क्राः, चत्वारो द्विरात्राः। सूत्रम्-निकायिनां च पूर्वस्य उत्तरेषु प्रवृत्तिः स्यात्। |
| न्यायसूत्र १.१.३९ | निगमनं-प्रतिज्ञायाः हेतोश्च पुनर्वचनं निगमनम्। ७.१.१२ |
| तर्कसङ्ग्रह ६ | नित्यद्रव्यवृत्तयो विशेषाः। १.३.३० तं. [नित्यद्रव्यवृत्तयो व्यावर्तका विशेषाः। तर्कसंग्रह (६)] |
| पा ४.३.१४४,३ | नित्यं वृद्धशरादिभ्यो मयट् विकारे। शरमयम्। १०.४.२ न्यामा. |
| भर ६.८.६ आप ६.२.११ | नित्यो गतश्रियो ध्रियते। १२.४.२६ नित्यो गतश्रिय आहवनीयो धार्यते। |
| बौधाध ३.१.१ | नित्योदकी नित्ययज्ञोपवीति। ३.४.९ तं. |
| पा २.२.६ | 'नित्यो हि अस्य न शब्दस्य सुबन्त सम्बन्धेन समासः' इति कात्यायनवार्तिकविभाषां हि पाणिनिर् आह। नानुयाजेषु। १०.८.४ |
| तैब्रा ३.२.७.१ | नियतम् अग्निसंयोगे दाह्यस्य सूक्ष्मा अवयवाः क्षीयन्ते। तप्तेषु च कपालेषु अधःपाकार्थं पुरोडाशोऽधिश्रीयते, उपरि च अङ्गारा अभ्युह्यन्ते। ६.४.१७ |

भर १४.१८.१५ निरवधयन्तो चुश्रुषाकारं भक्षयन्ति (कृष्णलान् – हिरण्यशकलान्) १०.२.१४

तैसं २.५.५ निरुप्तं हविः । ३.५.१२-१५ न्यामा.

भर १४.१८.१५ निर्धानं चुश्रुषाकरणम् । १०.२.१७

आप १६.१३.७ निर्मन्थ्येन इष्टकाः पचन्ति । १.४.१२; ७.३.१८ निर्मन्थ्यशब्दः सद्यो निर्मन्थितम् अग्निम् आह । (तैसं ६.३.५ – निर्मन्थ्योऽग्निः ।)

तैब्रा ३.२.४,५ 'निर्वपणं प्रोक्षणम् अवहननम्' इत्यादयो औषधस्य हविषो धर्माः । ३.१.७

तैसं २.५.११ निवीतं मनुष्याणां, प्राचीनावीतं पितॄणाम्, उपवीतं देवानाम् । उपव्ययते देवलक्ष्मम् एव तत् कुरुते । ३.४.७,९

षड् ४.२.२२ निवीता ऋत्विजः प्रचरन्ति । ११.१.१६; १०.४.१

मैसं ३.२.४ / तैसं ४.२.५ निवेशनः सङ्गमनो वसूनां विश्वा रूपाऽभि चष्टे शचीभिः ।
देव इव सविता सत्यधर्मेन्द्रो न तस्थौ समरे पथीनाम् ॥
३.२.३;३.३.११,१४

तैब्रा १.६.५.५ निष्कासेन तुषैश्च अवभृथम् अभ्यवयन्ति । ११.२.६४ तुषैश्च निष्कासेन च

शत १३.५.१० निष्केवल्यं शंसति । २.१.१३,२४,२८ यत् पृष्ठेषु न्यदधुस्तेन ऐन्द्रं सर्वाणि हि पृष्ठानि इन्द्रस्य निष्केवल्यानि ।

तैसं ६.१.५ निष्कासे निर्वपति । ११.२.६७ (उखायां लग्नं निष्कासम्)

ऋ ५.८५.३ / निरुक्त १०.४ नीचीनबारं वरुणः कवन्धं प्र ससर्ज रोदसी अन्तरिक्षम् ।
तेन विश्वस्य भुवनस्य राजा यवं न वृष्टिर् व्युनत्ति भूम ॥ १.३.२४ तं.

तैसं ६.१.३ नीतासु दक्षिणासु चात्वाले कृष्णविषाणां प्रास्यति । ४.२.१६;६.३.६;१२.२.६५

तैब्रा ३.७.५.३ 'नीवाराणां मेध, सुमनस्यमानः' इति 'व्रीहीणां मेध सुमनस्यमानः' इति मन्त्राद् ऊहितम् । ३.७.५

तैसं ३.२.५ नृचक्षसं त्वा देव सोम सुचक्षाअवख्येषम् । ३.२.२४,२५

तैब्रा १.६.६.५,६ / काठकसं ३६.१४ नेध्मा बर्हिः संनह्यते, न प्रयाजा इज्यन्ते, नानुयाजा इज्यन्ते, न सामिधेनीर् अन्वाह इति । अप्रतिष्ठिता वै त्र्यम्बकाः । ८.४.२१

मैसं १.१०.१५ अन्वाह इति । अप्रतिष्ठिता वै त्र्यम्बकाः । ८.४.२१

ऋ ८.९७.१२ नेमिं नमन्ति चक्षसा मेषं विप्रा अभिस्वरा ।
सुदीतयो वो अद्रुहोऽपि कर्णे तरस्विनः समृक्वभिः ॥ ६.१.५०

ऐब्रा ६.१० / ऋ १.२२.९ नेष्टा त्वष्टारं पत्नीश्च । अग्ने पत्नीरिहा वह देवानामुशतीरुप । त्वष्टारं सोमपीतये ॥ ३.२.३९

मैसं ३.९.८ नेष्टारं वृणीते । ७.४.२०

तैब्रा १.८.६.४ नैतस्य पशोर् ग्रहं गृह्णाति । पुरोडाशवान् एष पशुः । १०.१.२८ पुरोडाशवान् एष पशुर् भवति, न हि एतस्य ग्रहं गृह्णाति । नैतेषां पशूनां पुरोडाशा भवन्ति, ग्रहपुरोडाशा हि एते पशवः । १०.१.२७ ग्रहपुरोडाशयोर् एकार्थतां दर्शयति ।

मैसं २.६.५ नैर्ऋतं चरुं नखावपूतानां (व्रीहीणां) परिवृक्त्यै गृहे । ९.२.४०; १०.४.१

तैसं १.८.९ नैर्ऋतं चरुं निर्वपेत् कृष्णानां व्रीहीणां नखनिर्भिन्नं कृष्णा कूटा दक्षिणा । ४.२.२५; १०.७.६४

तैसं १.८.१ नैर्ऋतम् एककपालम् । ४.४.१,२ राजसूये

संकर्ष १.१.३६ नैव पशोर् हविष्कृद् अस्ति औषधार्था अवहननार्था वा। यथा पत्नी तुल्यवत् श्रूयते। १२.२.११

तैसं ५.६.२
शब्रा ११.८.१२ नैवारश्चरुर् भवति। यदेनम् उपदधाति । २.३.१८ नैवारश्चरुर् भवति, यदेनम् उपदधाति। बार्हस्पत्यं नैवारं चरुं पयसि शृतं मध्ये कुम्भेष्टकानाम् उपदधाति।

तैब्रा १.३.४.५,६,८ नैवारः सप्तदशशरावः क्षीरे चरुर् भवति। १०.२.६४

वसिष्ठस्मृ १२.६
मनुस्मृ ४.३७ 'नोद्यन्तम् आदित्यम् ईक्षेत नास्तं यन्तं' स्नातकव्रते। तस्य नियमः। एतावता ह्येनसाऽयुक्तो भवति। ४.१.३ नैतत् फलपरवचनं वर्तमानापदेश एषः।

काठकसं १२.६ नोभयदतः प्रतिगृह्णाति। ६.७.४ अश्वो न प्रतिगृह्यः उभयादन् वा।

तां ११.४.९,१० नौधसकालेययोः एकत्र सप्तदश बृहत्यः। ९.२.२८/२ नौधसं भवति, ब्रह्म वै नौधसम्। नौधसा ऋषिणा दृष्टम्।

षड् १.३.९-१५ पञ्चछन्दा आवाप आर्भवपवमानः सप्तसामा। ९.२.२५/३ 'गायत्री, अनुष्टुप्, उष्णिक्, ककुप्, जगती' इति पञ्चछन्दाः। गायत्रं, संहितं, श्यावाश्वम्, आन्धीगवं, सर्फं, पौष्कलं, कावम् – सप्तसामा ६८९-९१; ६८९-९१; ६९७-९९; ६९७-९९; ६९२-९३; ६९४-९६; ७००-७०२

काठकसं १५.१० पञ्चदश माध्यन्दिनपवमानः। १०.४.२० (द्वात्रिंशपवमानः – पञ्चदश माध्यन्दिनः, सप्तदश आर्भवपवमानः)

तां २३.८.१ पञ्चदशरात्रस्त्रिवृदग्निष्टुदग्निष्टोमस्त्रिरात्रो दशरात्रः, उदयनीयोऽतिरात्रः। यद् अन्यतोऽतिरात्रस्तेन यज्ञः (अहीनः) अथ द्वादशाहस्य दशाहानि तेन सत्रम्। ८.२.२९ (तां–ब्रह्मवर्चसकामाः पञ्चदशरात्रं उपेयुः। २३.७.३) सूत्रम्–सत्रे वा उपायिचोदनात्।

तां २३.८.१ पञ्चदशरात्रे अग्निष्टुद् एकाहः। ततो ज्योतिर् गौरायुरिति त्र्यहः परिशिष्टानि एकादशाहानि द्वादशाहप्रकृतीनि। १२.२.२२ तत्र

तैब्रा ३.५.२ पञ्चदश सामिधेनीर् अन्वाह। १०.५.१,२७

तां २०.१.१ पञ्चदशानि आज्यानि भवन्ति। १.४.३; ४.४.४०; १०.६.२३ (तां १२.८.१; 'जनस्य गोपा अजनिष्ट जागृविर्' इति आग्नेयम् आज्यं भवति। साम ९०७-९०९; ऋ ५.११.१,६,२) (तां १२.८.३ 'अयं वाव मित्रावरुण' इति बार्हतं मैत्रावरुणम्। साम ९१०-९१२; ऋ २.४१.४-६) (तां १२.८.५ 'इन्द्रो दधीचो अस्थभिर्' इति दाधीचस्तृचो भवति। साम ९१३-९१५; ऋ १.८४.१३-१५) (तां १२.८.७ 'इयं वामस्य मन्मन' इति ऐन्द्राग्नम्। साम ९१६-९१८; ऋ ७.९४.१-३)

शत ११.१.२.१३ पञ्चदशैव वर्षाणि यजेत (दर्शपूर्णमासाभ्याम् अत्र ह्येव सा संपत् संपद्यते) २.३.९

मनुस्मृ ५.१८ पञ्च पञ्चनखा भक्ष्या इति शशादीनां पञ्चानां कीर्तनात् अन्येषां भक्षणं प्रतिषिध्यते। १०.७.२८ श्वाविधं शल्यकं गोधां खड्गकूर्मशशांस्तथा। भक्ष्यान् पञ्चनखेष्वाहुरनुष्ट्रांश्चैकतोदतः॥

वाल्मीकि रामायण ४.१७-३१ पञ्च पञ्चनखा भक्ष्याः ब्रह्मक्षत्रेण राघव। शल्यकः श्वाविधो गोधा शशः कूर्मश्च पञ्चमः॥ १.३.२४ तं,

तैब्रा ३.१२.९.८ तां २५.१८ पञ्च पञ्चाशतस्त्रिवृतः संवत्सराः, पञ्च पञ्चाशत पञ्चदशाः, पञ्च पञ्चाशतः, सप्तदशाः, पञ्च पञ्चाशतः एकविंशाः, विश्वसृजां अयनं सहस्रसंवत्सरम्। ६.७.३१,३७; ९.४.१२ यदि पञ्चपञ्चाशतस्त्रिवृतः न संवत्सराः, अथ संवत्सरास्त्रिवृतः म पञ्चपञ्चाशतः इति लावुकायन आचार्यो मन्यते स्म। सूत्रम्– ६.७.३७–विप्रतिषेधात्तु गुणी अन्यतरः स्यात् इति लावुकायनः।

तैसं २.६.१० पञ्च प्रयाजा इज्यन्ते, चत्वारः पत्नीसंयाजाः। ३.६.२०-२३ न्यामा.

तैसं २.६.१ पञ्च प्रयाजान् यजति। ३.६.६ समिधो यजति, तनूनपातं यजति, इडो यजति, बर्हिर् यजति, स्वाहाकारं यजति। १२.१.२

मैसं ३.४.४ पञ्चभिर् युनक्ति पाङ्क्तो यज्ञो यावानेव यज्ञस्तम् आलभते। ११.३.१८

वाराह ३.२.७,८ पञ्चभिः पशुभिर् यक्ष्यमाणाः संनिवपेरन् – (संहत्य संनिवापः) १०.६.४९ पञ्चपशूनां यक्ष्यमाणानां एकोऽग्निः। तेभिर् इष्ट्वा निवपन्ते।

तां २.७.१ पञ्चभ्यो हिंकरोति स तिसृभिः, स एकया, स एकया। पञ्चभ्यो हिंकरोति स एकया, स तिसृभिः, स एकया। सप्तभ्यो हिंकरोति स एकया, स तिसृभिः, स तिसृभिः। ९.२.२८/२

तैसं ७.१.१ पञ्चरात्रेण यजेत। १०.५.१

तैब्रा ३.७.१.७ पञ्चशरावस्तु द्रव्यश्रुतेः प्रतिनिधिः स्यात्। यस्योभयं हविर् आर्तिम् आर्च्छेत् ऐन्द्रं पञ्चशरावम् ओदनं निर्वपेत्। ६.४.२८ चोदना वा द्रव्यदेवताविधेः अवाच्ये हि। ६.४.२९ पञ्चशरावो इन्द्रदेवतया सम्बध्यते (ऐन्द्रं पञ्चशरावं) तस्मात् कर्मान्तरं न सांनाय्यस्य प्रतिनिधिः।

तां २१.१४.१,२,७,८,९,१० पञ्चशारदीयोऽहीनो मारुतीयः, पञ्चशारदीय यः कामयेत बहु स्यां इति स एतेन यजेत। वैशाख्यां अमावास्यायां सप्तदश मारुतीस्त्रिवत्सा अप्रवीता (अप्रसूताः) उपाकरोति। सप्तदश पृश्नीन् उक्षणस्तान् पर्यग्निकृतान् प्रोक्षितान् इतरा आलभन्ते, प्रेतरान् उत्सृजन्ति इति ततः संवत्सरे राजीवा आनयन्ति। तांश्चैव उक्षणस्तान् पर्यग्निकृतान् इतरा आलभन्ते, प्रेतरान् उत्सृजन्ति। तेषां च सुत्यासु प्रतिप्रसवः त्रीन् त्रीन् उक्षणः एकैकस्मिन् अहनि आलभन्ते पञ्च उत्तमे अहनि आलभन्ते ११.२.५४

वाराहगृ ४.२४ पञ्चशिखा केचित्। १.३.१५ अङ्गिरसादयः, पञ्चचूडा अङ्गिरसाः, पञ्चशिखिनः।

तां ४.४.१ पञ्चसु माःसु बार्हताः प्रगाथा आप्यन्ते। ९.२.२८/४

आप २.१८.२ पञ्चावत्तं जमदग्नीनाम्। ६.७.२८ जमदग्नीनां तु पञ्चावत्तम्–जमदग्नि-गोत्राणाम्।

तैसं ७.४.५ पञ्चाहा भवन्ति। ८.३.६ पञ्च वा ऋतवः संवत्सरे, ऋतुषु एव संवत्सरे प्रतितिष्ठन्ति, अथो पञ्चाक्षरा पङ्क्तिः, पाङ्क्तो यज्ञो यज्ञम् एव रुन्धते।

महाभारत १.१९८.४९,५० पञ्चेन्द्रोपाख्याने वृद्धकुमारी वरं प्रार्थयते 'पतिं मे देहि' इति पञ्चकृत्वोऽभ्यासः। २.२.२ तं. पञ्चकृत्वात्वस्त्वयोक्तोऽहं, पतिं देहीति वै पुनः तत् तथा भविता भद्रे ...

आप ८.२.३ पञ्चैतानि हवींषि सर्वपर्वसु सञ्चरन्तीति पञ्चसञ्चराणि उच्यन्ते। ७.१.१७

| | |
|---|---|
| तैसं १.८.२ | (१) आग्नेयं अष्टाकपालं निर्वपति (२) सौम्यं चरुं (३) सावित्रं द्वादशकपालं (४) सारस्वतं चरुं (५) पौष्णं चरुम् । |
| तैब्रा १.३.३ | पञ्चैद्रान् अतिग्राह्यान् गृह्णाति । १०.८.२६ |
| तैसं ७.५.८ | पत्नय उपगायन्ति । ८.१.१८ |
| मैसं १.४.८ | पत्नि पत्नि एष ते लोकः ३.४.१८ |
| पा ४.१.३३ | 'पत्नी' इति यज्ञस्य स्वामिनी इति उच्यते । ५.१.१७ पत्युर् नो यज्ञसंयोगे ङीप् । पत्नी इति सबन्धी शब्दोऽयम् । दम्पत्योः सहाधिकाराद् यज्ञफलभोक्त्री । |
| तैब्रा ३.२.९.१४ | पत्नीं संनह्य । ३.८.२०; ६.८.२८,-९.३.२० नाभिप्रदेशे परिहितस्य वाससः उपरि योक्त्रेण संनह्य पत्नीम् उदानयति । |
| ऋ ३.६.९ | पत्नीवतस्त्रिंशतं त्रींश्च देवान् अनुष्वधम् आवह मादयस्व । ३.२.२६ न्यामा. |
| तैसं ६.२.१<br>मैसं ३.७.९ | पत्नी वै पारिणह्यस्य ईष्टे, पत्यैव गतम् अनुमतं क्रियते । ६.१.१६ पत्नी अन्वारभते, पत्नी हि परीणह्यस्य ईशे पत्नियै वा अनुमतं निर्वपति । |
| आप १०.४.६<br>वाराह ३.२.१.३७ | पत्नीसंयाजान्तानि अहानि संतिष्ठन्ते । ९.१.२९,३०,३२; १०.४.२३,३०,३२; ११.४.२३ |
| तैब्रा १.३.१.६ | पत्नीसंयाजान्तानि भवन्ति । ९.१.३२,३३ |
| वाराह १.३.७२ | पत्नीसंयाजानां अपरयोर् अग्न्योर् होमः । ८.४.२४ अपरो होता दक्षिणोऽध्वर्युर् उत्तरः । |
| शत १.९.२.५ | पत्नीसंयाजान् यजति । २.२.३ गार्हपत्ये पत्नीसंयाजान् जुहोति । पत्नीः संयाजयन्ति । |
| तां ४.९.१.८ | पत्नीः संयाज्य प्राञ्च उदेत्य मानसाय प्रसर्पन्ति । १०.६.३६,४० मनसा उपावर्तयन्ति । |
| काठकसं ३४.६ | पत्न्य उपगायन्ति, पिच्छोलाभिर् उपगायन्ति, काण्डवीणादिभिर् उपगायन्ति, आपाटलाभिर् उपगायन्ति, अपघाटिलाभिर् उपगायन्ति । १०.४.८,९ |
| तैब्रा ३.३.४.१ | पत्न्यवेक्षते । ६.१.२४ पत्न्याज्यमवेक्षते । |
| आप २.६.६ | पत्न्यवेक्षितेन यजमानवेक्षितेन च आज्येन होम उच्यते । ६.१.१७ |
| तैब्रा ३.३.४.१ | पत्न्याज्यम् अवेक्षते । ६.१.२४ |
| तां ५.६.८<br>काठक ३४.५ | पत्न्यो गायताम् । १०.४.८ पत्न्य उपगायन्ति । ( गानं प्राप्तम् एव प्राकृतम्, ऋत्विजां गानस्य उपचयनम् = उपगानम् ) |
| पा ५.१.१२८ | पत्यन्त पुरोहितादिभ्यो यक् (तस्य कर्म इत्यर्थे) । २.३.३ पुरोहितादि गणपाठे राजन् पठित्वाद् राज्यं=राजकर्म इत्यर्थः । |
| तैसं ६.१.५ मैसं ३.७.१<br>काठकसं २३.८.९ | पथ्यां स्वस्तिम् इष्ट्वा अग्नीषोमौ यजति, अग्नीषोमौ इष्ट्वा सवितारं यजति, ( अदितिम् ओदनेन । सत्या. ७.२.६ ) १०.१.४४ |
| तैसं ६.१.८ | पदे जुहोति । १२.४.२१ सप्तमे पदे जुहोति । ( अश्वस्यैव मेध्यस्य पदे पदे जुहोति–तैब्रा. ३.९.२३.१ ) |
| वसिष्ठस्मृ १८.११.१२ | पद्यु वा एतत् श्मशानं यत् शूद्रः, तस्मात् शूद्रसमीपे नाध्येतव्यम् । ६.१.३८ |
| काठकसं ६.३ | पयसा अग्निहोत्रं जुहोति । १०.८.७ |
| तैसं ५.४.९ | पयसा जुहोति । २.२.१३,१६,२३,२४; ७.३.४ |

तैसं ६.४.८ पयसा मैत्रावरुणं श्रीणाति। ३.६.३२,३४; ६.४.४३; ९.१.१२; ९.४.४५; ११.२.६८

मैसं ४.६.२ पयस्यां मैत्रावरुणपात्रे निदधाति। ३.८.३३

आप १.११.२ पयःप्रतिषेधः कुमाराणाम्। ११.१.१९,५१ नास्यैतां रात्रिं कुमाराश्च न पयसो लभन्ते।

शत १२.७.३.१७ पयोग्रहाः सुराग्रहाश्च गृह्यन्ते। ३.५.१४-१५ न्यामा.

शत ४.१.४.९ पयोमिश्र सोमो भवति। ९.४.४५ तद् यदेव अत्र पयः तन् मित्रस्य सोम एव वरुणस्य तस्मात् पयसा श्रीणाति। पयोविकारः पशुः। ८.२.१८ सूत्रम्-द्रवत्वं च अविशिष्टं पशुपयसोः तस्मात्

तैआ २.८
तैसं ६.२.५ पयोव्रतं ब्राह्मणस्य, यवागू राजन्यस्य, आमिक्षा वैश्यस्य। ४.३.८,९; ६.१.२८; ६.८.२८; १०.४.१; १२.१.२९

तैसं ६.२.५ पयोव्रतानि—वत्सस्य एकस्तनो भागी हि सोऽथैकं स्तनं व्रतम् उपैति, अथ द्वौ, अथ त्रीन्, अथ चतुरः, एतद् वै क्षुरपवि नाम व्रतम्,... चतुरोऽग्रे स्तनान् व्रतम् उपैति अथ त्रीन् अथ द्वौ अथ एकम्, एतद् वै सुजघनं नाम व्रतम्। यवागू राजन्यस्य व्रतम्, आमिक्षा वैश्यस्य, पयो ब्राह्मणस्य, तेजो वै ब्राह्मणः, तेजः पयस्, तेजसैव तेजः पयः। ३.७.६

पा ३.१.२ परश्च। ३.४.१३ तं. प्रत्ययो धातोर् वा प्रातिपदिकाद् वा परो भवति।

तां ६.८.१५ पराग् बहिष्पवमानेन स्तुवन्ति। १० ५.१८ सकृद् हिंकृताभिः पराचीभिः स्तुवन्ति।

तैसं ५.१.८ पराचीः सामिधेनीर् अन्वाह। १०.५.१८,४५ चतुर्विंशतिं सामिधेनीर् अन्वाह पराचीर् ( अनभ्यस्ताः ) अन्वाह।

तैसं १.५.४ पराङ्म् अग्न्याधेयाद् पुनर् आदधाति। १०.५.४७ पराचीनं पुनराधेयाद् अग्निम् आदधीत।

तैसं ६.३.८ परावर्तते अध्वर्युः पशोः संज्ञप्यमानात्। ३.७.२८-२९ न्यामा.

तैसं ३.३.४ परा वा एतस्य आयुः प्राणः एति यो अंशुं गृह्णाति। २.३.२०; ५.३.१५

काठकसं ३४.९ परिक्रयः प्रत्यक्षम् आम्नातः। १०.२.२५ दक्षिणापरिक्रीता ऋत्विजो याजयन्ति।

तां १६.१.११ परिक्रयो ज्योतिष्टोमे द्वादशशतम्। ३.८.१ तस्य ज्योतिष्टोमस्य द्वादशशतम् ( दक्षिणा )

तैसं १.७.३
शत ११.१.३.७ परिक्रयोऽन्वाहार्यं आम्नातो दर्शपूर्णमासयोः। १२.१.३२ दर्शपूर्णमासयोर् ह्येषा दक्षिणा यद् अन्वाहार्यः।

तैब्रा ३.३.७.४ परिधिं संमार्ष्टि। २,१.९

तैसं ६.३.३ परिधिर् उभयधर्मा स्यात्-परिधिधर्मा यूपधर्मा च। १२.१.२६ सूत्रम्-परिधिर् द्व्यर्थत्वाद् उभयधर्मा स्यात् द्व्यर्थौ—अग्नेश्च परिधानं पशोश्च अप्रावर्त्यं= नियोजनम्। यूपधर्माः यवमतीभिर् अद्भिः प्रोक्षणम् अञ्जनं परिव्याणं च ते परिधौ कर्तव्याः।

वाराह १.३.५.१६; परिधिधर्माः— इध्मसंनहनं, संमार्जनं, 'जुह्वा वसुरसि' इति एवम् आदिभिर्

१.३.६.५,७ — अञ्जनम्, अभ्याश्रावणम् इति। परिधिविरोधियूपधर्माः यथा—तक्षणम्, उच्छ्रूयणं, निखननं ते परिधौ न कर्तव्याः। १२,२.२६

आप १.५.७ — परिधिस्त्वक्सहितः शयानश्च। ९.२.४१-४३ न्यामा.

सत्या ७.४.३ — परिधिः शयानः। ९.२.४१.४३ न्यामा. शयाः परिधयः।

वाराह १.१.२.२३ — परिधेर् आहवनीयपरिधानार्थोत्पत्तिः। ९.२.४१ 'युनज्मि त्वा' इति च परिधिषु परिधीयमानेषु आहवनीयम्।

तां १७.१३.१ — परिधौ पशुं नियुञ्जन्ति। ९.२.४०; १०.३.१८; १०.४.१; १२.२.२८,३०

संकर्ष १.४.२६ — परिधौ पशुं नियुञ्जीत। १०.४.१

मनुस्मृ २.८७ — परिनिष्ठितकार्यस्तु स्वाध्यायेनैव वै द्विजः। कुर्याद् अन्यत् न वा कुर्यात् मैत्रो ब्राह्मण उच्यते॥ १.३.४ तं.

तैसं १.३.६ — परिवीरसि परि त्वा दैवीर् विशो व्ययन्तां परीमं रायस्पोषो यजमानं मनुष्याः। ३.८.२१

तैसं ६.३.४ — परिव्ययति ऊर्ग्वै रशना यजमानेन यूपः संमितो, यजमानं एव ऊर्जा समर्धयति। ३.६.३१ न्यामा.

शत ४.२.५.१२ — परिव्याणं कृत्वा उपाकरोति पशुम्। ४.४,२०
आप १२.१८.१२

तैसं २.२.४ — परिश्रिते याजयेत् रक्षसाम् अनन्ववचाराय। २.३.१५; १२.२.१४

आप ६.३.१ — परिसमूहनं पर्युक्षणम्। ९.४.३० परिसमूहनेन अग्निम् अलंकुर्वन्ति, तृणापचयं शोधनं च।

मैसं ३.९.२ — परुष्येव जुहोति आयतने। ११.२.२७

तैब्रा २.३.११.४ — परोक्षप्रिया हि देवाः। ३.७.८-१० न्यामा.

तैसं ६.६.६ — पर्यग्निकृतं पात्नीवतम् उत्सृजन्ति। ९.४.५६; १०.७.५६

तैब्रा ३.९.४.३ — पर्यग्निकृतान् आरण्यान् उत्सृजन्ति। ९.४.५१,५२; ११.२.५०

आश्व २.२.११ — पर्युक्षणम्– 'ऋतसत्याभ्यां पर्युक्षामि' इति जपित्वा पर्युक्षेत्, त्रिस्त्रिर् एकैकं पुनः पुनर् उदकम् आदाय। ९.४.२९

आप ६.३.१ — पर्युक्षणं समूहनं तृणापचय इत्येवम् आदयः धार्येऽग्नौ अहनि अहनि क्रियन्ते। ९.४.२९,३०

आपध १.४.१२.३,४,५,९ — पर्वणि नाध्येयं, वाते नाध्येयं, स्तनयित्नौ नाध्येयम्। १२.३.१८

वाराह १.२.१.१६ — पर्व प्रतिलुनाति। ३.४.१ विशाखानि प्रति लुनाति। (पर्वणि दाति-भर १.३.११)

तैब्रा ३.७.५.१३ — पर्वशब्दः काले-समुदाये च प्रसिद्धः, आ हिमवतः आ च कुमारीभ्यः। ९.२.५१ पार्वणहोमयोः पर्वशब्दः काले-पर्वस्यादुत्सवग्रन्थौ प्रस्तावे विषुवादिषु। दर्शप्रतिपदोः सन्धौ स्यात् तिथेः पञ्चकान्तरे (धरणिकोशे)

साम ६५१/७६३ — पवमानाय इन्दवे, अभि देवाँ इयक्षते। ३.३.१४ तं. (उपास्मै गायता नरः+)
ऋ ९.११.१

भर ५.२०.७ — पवमानवान् सौम्यो भवति–'अग्न आयूंषि पवसे'। १०.४.३०

तां १६.५.२४ — पवमाने रथन्तरं करोति, आर्भवे बृहत्, (मध्ये इतराणि) वैरूपं होतुः साम, वैराजं मैत्रावरुणस्य, रैवतं ब्राह्मणाच्छंसिनः, शाक्वरम् अच्छावाकस्य। षाडहिकानि पृष्ठानि। ७.३,८;१०.६.१४
तैब्रा १.२.२.३

| | |
|---|---|
| शत २.५.३.४ | पवित्रवति गां दोहयति । ९.४.३७ दोग्धि । |
| तां १८.८.१ | पवित्राद्यः सोमाः । ४.४.१;११.२.१२ |
| शत १२.८.१.९ | पवित्राभ्यां पुनाति । ९.३.२० तं. |
| तैब्रा ३.७.४.११ | पवित्रे स्थः । ९.३.२० तं. |
| तैसं ५.२.९ | पशवो गोऽश्वाः । १.४.२६ तं. |
| मैसं ४.६.५ | पशुकामः उक्थ्यं गृह्णीयात् । ३.६.४३ यद् उक्थ्यो गृह्यते यज्ञस्य च पशूनां च अवरुध्यै । |
| तैसं २.४.६ | पशुकामश्चित्रया यजेत । १.१.५ |
| तैसं २.५.४ | पशुकामो यजेत । १.२.४;२.३.७ साकंप्रस्थायीयेन यजेत पशुकामः । |
| तैसं ६.३.६ | पशुधर्माः– उपाकरणम्, उपानयनम्, अक्ष्या बन्धः, यूपे नियोजनं, संज्ञपनं, विशसनम् । ३.६.१८ |
| काठकसं ८.१ | पशुना यजते । १.३.३० तं. ( तैसं. ६.३.११ ) पशुना मध्यत इज्यते । |
| शत ३.८.३.१;५.२.३.१ | पशुपुरोडाशम् अनुनिर्वपति । १२.३.४ यद्देवत्यः पशुर् भवति तद्देवत्यं पुरोडाशं अनुनिर्वपति । |
| तैब्रा १.७.४.४ | पशुपुरोडाशस्य हैविकाद्धविषां च अग्नये स्विष्टकृतेऽवद्यति । १२.३.३ |
| शत ३.८.३.१ | पशुपुरोडाशः । ४.१.१८; १२.१.१४ यद्देवत्यः पशुस्तद्देवत्यः पुरोडाशः । |
| तैब्रा ३.१२.५.६,७ | पशुबन्धयाजी सर्वान् लोकान् जयति । १.२.४ इमम् एव लोकं पशुबन्धेन अभिजयति । |
| तैब्रा २.३.६.३ | पशुबन्धस्य यज्ञक्रतोः षड् ऋत्विजः । ७.२.२१ ब्रह्मा, अध्वर्युर्, होता, आग्नीध्रः, प्रतिप्रस्थाता, मैत्रावरुणश्च । |
| मैसं ३.९.५ | पशुमन्ति त्रीणि सवनानि–यद् वपया प्रातःसवने चरन्ति तेन प्रातःसवनं पशुमत्, यत् पुरोडाशैर् माध्यन्दिने तेन माध्यन्दिनं सवनं पशुमत्, यत् अङ्गैस्तृतीयसवने तेन तृतीयसवनं पशुमत् । १२.२.३१ सूत्रम्–८.२.१० पशुः पुरोडाशविकारः । |
| तैसं ३.१.११ | पशुमालभते । २.२.१७;३.१.१३,१५;६.१.७,९;११.१.४३ |
| तैसं ६.३.१० | पशुमालभ्य पुरोडाशं निर्वपति । ३.३.३५-३८ न्यामा. |
| तैसं ६.३.११ | पशुं संज्ञपयति । १.३.३० तं. |
| तैसं ६.१ ११ | पशुर् अग्नीषोमीयो भवति । २.१.१७ अग्नीषोमीयं पशुम् आलभते । |
| आप १३.२३.६ | पशुर् अनुबन्ध्यः । ३.६.१८ मैत्रावरुणी वशा अनुबन्ध्यपशुः । |
| तैसं ६.१.१ | पशुः पुरोडाशविकारः स्याद् देवतासामान्यात् । ८.२.१० अग्नीषोमीयं पशुम् आलभते । अग्नीषोमीय एकादशकपालपुरोडाशो भवति । |
| शत १.५.२.२४ | |
| तैब्रा ३.२.८.८ | पशोर् वा प्रतिमा पुरोडाशः । + |
| तैब्रा १.३.४ | पशोः संज्ञप्तहोमः । ६.८.२८ |
| तैसं ६.३.७; ६.३.११ | पशौ च अग्नीषोमीये दार्शपौर्णमासिको विधिः । ८.१.१२ एकादशप्रयाजान् यजति एकादशानुयाजान् इति लिङ्गात् । |
| तैसं ६.३.७ | पशौ सप्तदश सामिधेन्यः । ६.६.३६; १०.८.१७ सप्तदश सामिधेनीर् अन्वाह । |
| तैसं ६.३.७ | पशौ साप्तदश्यम् । ८.१.१४ ( सप्तदश ) सामिधेनीर् अन्वाह । |

| | |
|---|---|
| गोभिगृ २.१.२० | पश्चादग्नेः संवेष्टितं कटम् एवंजातीयकं वा अन्यत् पदा प्रवर्तयन्तीं वाचयेत् 'प्र मे पति या नः पन्थाः कल्पताम्'। ६.१.१७-२१ न्यामा. |
| श्लोकवा ५४ | पश्वङ्गं रशना चेत् यद्येकस्मिन् बहून् युञ्जीत । प्रतिपशुः रशना कार्या यूपे चेद् द्वैरशन्यं स्यात् । ४.४.२४ |
| तैसं १.८.१९ | पष्ठौहीम् अश्विभ्याम् आलभते । ४.४.१-२ न्यामा. |
| मैसं ४.४.६ | पष्ठौहीं विदीव्यन्ते । ४.४.१ |
| तैब्रा ३.८.१४.४,५ | पाकयज्ञेषु द्रव्यं भवति–लाजा धानास्तण्डुलाः आज्यम् इति । ९.२.४ |
| तैसं २.५.८ | पाञ्चदश्यम् आम्नातं दर्शपूर्णमासयोः । ३.६.९ पञ्चदश सामिधेनीर् अन्वाह । |
| पा उणादि २.७ | पा तृ तुदि वचि रिचि सिचिभ्यस्थक् । ८.३.८-९ न्यामा. पीथ, तीर्थ, तुत्थ, उक्थ, रिक्थ, सिक्थ । |
| मैसं ४.७.४ | पात्नीवतं गृह्णाति । ३.२.२७ उपांशुपात्रेण + |
| तैसं २.२.२ | पाथिकृतीयं कर्म–पथिकृते पुरोडाशम् अष्टाकपालं निर्वपेत्... ३.२.२० |
| पा ३.१.१२९ | पाय्य सान्नाय्य निकाय्य धाय्यामान हविर्, निवास, सामिधेनीषु । ५.३.५ धाय्याः सामिधेनीषु । |
| तां १३.४.१८ | पार्थुरश्मसाम । ४.३.४; ६.१.२; ६.६.१७,२२ पार्थुरश्मं राजन्याय ब्रह्मसाम कुर्यात् । |
| पार्थुरश्मं साम १००५ ऋ १.८४.१० | स्वादोरित्था विषूवतो मध्वः पिबन्ति गौर्यः । या इन्द्रेण सयावरीर्वृष्णा मदन्ति शोभसे वस्वीरनु स्वराज्यम् ॥ |
| साम १००६, ऋ १.८४.११ | ता अस्य पृशनायुवः सोमं श्रीणन्ति पृश्नयः । प्रिया इन्द्रस्य धेनवो वज्रं हिन्वन्ति सायकं वस्वीरनु स्वराज्यम् ॥ |
| साम १००७, ऋ १.८४.१२ | ता अस्य नमसा सहः सपर्यन्ति प्रचेतसः । व्रतान्यस्य सश्चिरे पुरूणि पूर्वचित्तये वस्वीरनु स्वराज्यम् ॥ ( इदमेव रायोवाजीयं साम ) ४.३.४ |
| तैब्रा ३.७.५.१३ | पार्वणहोमयोर् उत्तरस्वाहाकारः–प्राणाय सुराधसे पूर्णमासाय स्वाहा, अपानाय सुराधसे अमावास्यायै स्वाहा । ८.४.१५,१६ |
| ऐब्रा २.१.३ | पालाशं ब्रह्मवर्चसकामस्य यूपं कुर्यात् । ४.३.१,३ पालाशं यूपं कुर्वीत तेजस्कामो ब्रह्मवर्चसकामः । |
| काठकसंकलन ९.१२ (१३७) | पालाशे बध्नाति । २.२.१७,२०; ४.२.१; ६.३.२८; ११.३.३ |
| तैब्रा ३.८.१९.१ | पालाशो यूपो भवति । १०.७.५१ बैल्वो वा खादिरो वा पालाशो वा अन्येषां यज्ञक्रतूनां भवति । |
| तैसं १.१.६ | पावकवान् सौम्यः कार्यः । १०.४.३० अग्नये पवमानाय अष्टाकपालम् अग्नये पावकाय, अग्नये शुचये... पावकः शीतः । ४.३.१० |
| तैब्रा २.४.३.१ ऋ १.३.१० | पावका नः सरस्वती वाजेभिर् वाजिनीवती ॥ यज्ञं वष्टु धिया वसुः ॥ १२.४.१ |
| ऐब्रा १.३ | पावयति । ५.२.४ एकविंशत्या पावयति । |
| तैसं ६.१.६ | पिङ्गाक्षी एकहायनी । ३.२.२१ तं. |
| आप १.१०.१२ | पिण्डपितृयज्ञः आहिताग्नेर् अनाहिताग्नेश्च । ६.८.१५ अपि अनाहिताग्निः पिण्डपितृयज्ञं कुर्वीत । (वाराह १.२.३.३८) |
| आप ३.१६.७ | पिण्डपितृयज्ञेनैव अमावास्यायां प्रीणाति । ४.४.२१ |

काठकसं २४.८ — पितृदेवत्यम् । १०.४.२३ पितृदेवत्यं हविः ।

मैसं ३.६.५ — पितृदेवत्याः शंसति । २.१.२२ पितृदेवत्यां शंसति ।

तैसं १.८.५ — पितृभ्योऽग्निष्वात्तेभ्योऽभिवान्यायै दुग्धे मन्थम् । ३.४.१७;१०.२.७४ न्यामा.

तैसं १.८.५ — पितृभ्यो बर्हिषद्भ्यो धानाः । १०.२.७४ न्यामा.

आप१.१०.१२ रुद्रदत्तटीका — पितृयज्ञः आहिताग्नेर् अनाहिताग्नेश्च कार्यः । ६.८.८ अपि अनाहिताग्निना ।

तैसं ४.३.१३ ऋ १०.२.१ — पिप्रीहि देवाँ उशतो यविष्ठ, विद्वाँ ऋतूँर् ऋतुपते यजेह । ये दैव्या ऋत्विजस्तेभिरग्ने त्वं होतॄणामस्यायजिष्ठः ॥ १०.४.३२

आप १.१०.१२ — पिपेश्चूर्णनम् । ७.२.१ तण्डुलेषु अन्यद् द्रव्यम् असंवपन्ती (अप्रवेशयन्ती) पिंषाणूनि कुरुताद् इति पत्नीं दासीं प्रति वा प्रैषः ।

भरद्वाज ८.१.२३ — पिष्टकचरुः साध्यते । ३.३.३८ संयुतानां पिष्टानां पौष्णम् अपोद्धरति ।

तैसं ३.१.११ — पीपिवांसं सरस्वतः, स्तनं यो विश्वदर्शतः । धुक्षीमहि प्रजामिषम् ॥ ये ते सरस्व ऊर्मयो, मधुमन्तो घृतश्चुतः । तेषां ते सुम्नमीमहे ॥ २.४.६ न्यामा. सरस्वतो याज्यानुवाक्ये

आप १०.१४.१० — पीवा दीक्षते कृशो यजते । ३.८.९-११ न्यामा.

ऊहः काठकसं ३१.१४ — 'पुण्डरीकैः स्तृणीत रक्तैः' इति श्रीदेवतायै 'दर्भैःस्तृणीत हरितैः' इति मन्त्राद् ऊह्यते । ९.३.३

तैसं १.५.२ — पुनर् निष्कृतो रथो दक्षिणा । १०.३.३०-३३ न्यामा.

तैसं १.५.२ — पुनरुत्स्यूतं वासो दक्षिणा, पुनरुत्सृष्टोऽनड्वान् (दक्षिणा) । १०.३.३०-३३ न्यामा.

पा १.२.६७ — पुमान् शिष्यते । ६.१.१२ स्त्रिया सहवचने पुमान् शिष्यते । (काशिका)

पा १.२.६७ — पुमान् स्त्रिया । ६.१.२२,२३

तैसं ३.४.३ — पुंपशौ प्राप्ते स्त्रीपशुः । १.४.३ सा वा एषा सर्वदेवत्या या अजा वशा ।

मैसं २.३.२ — पुरस्ताच्च उपरिष्टाद् वा जुहुयाद्, बहिर् आत्मनः सजातीयान् दध्याद् यन् मध्यतो जुहोति सजातीयान् मनुते । १०.४.७ न्यामा.

तैसं ७.४.८ — पुरस्तात् पौर्णमास्याश् चतुरहे दीक्षेरन् । ६.५.३०,३१

तैसं ७.५.८ — पुरस्तात् सदसः स्तुवते (श्लोकेन) । १०.४.१५

तैआ ५.६ — पुरस्ताद् उपसदां प्रवर्ग्यं प्रवृणक्ति । ३.३.३२ तं.

तैब्रा १.८.१.२ — पुरस्ताद् उपसदां सौम्येन प्रचरन्ति, अन्तरा त्वाष्ट्रेण, उपरिष्टाद् वैष्णवेन । ४.४.५,११,१९

तैसं १.५.१० — पुरा ब्राह्मणा अभैषुः । २.१.३३ न्यामा.

मैसं १.४.५ — पुरा वत्सान् उपाकर्तोर् दम्पती अश्नीयाताम् । ६.४.३८,४१

तैसं २.२.९ — पुरावाचः प्रवदितोर् निर्वपेत् । ११.२.१९,२२

तैसं ६.४.३ — पुरावाचः प्रवदितोः प्रातरनुवाकम् उपाकरोति यावत्येव वाक् ताम् अवरुन्धे ।

तैसं १.५.१ — पुराऽस्य संवत्सराद् गृहे रोदनं भवति । १.२.१०

तैसं ५.२.९ — पुरुषशीर्षम् उपदधाति । ६.६.२ इति वचनात् शवशिरसां स्पर्शनं स्मृतिप्रतिषिद्धम् अपि क्रियते ।

मनु ५.८.७ — नारं स्पृष्ट्वाऽस्थि सस्नेहं सवासा जलमाविशेत् ।

मैसं ३.९.२ — पुरुषस्यैव-परुष्येव जुहोति आयतने । ११.२.२७

मैसं १.१०.१ पुरोडाश आग्नेयः कर्तव्यः । ३.४.३७ आग्नेयोऽष्टाकपालः पुरोडाशो भवति ।

आप १.२०.९ पुरोडाशकपालेन तुषान् उपवपति । ४.१.२६; ६.६.६; १२.४.१२ मध्यमेन पुरोडाशकपालेन ।

तैसं २.५.५ पुरोडाशम् अग्नये दात्रे मध्यमानां (तण्डुलानां) कुर्यात्, ये स्थविष्टास्तान् इन्द्राय प्रदात्रे दधंश्चरुं कुर्यात्, क्षोदिष्ठान् विष्णवे शिपिविष्टाय शृते चरुम् । ६.५.१

शत १.२.२.७-८ पुरोडाशम् अध्वर्युः 'प्रथस्व' इति ब्रूते 'उरु प्रथा उरु प्रथस्व' इति मन्त्रेण । १.२.४३ पुरोडाशं प्रथस्व इति अध्वर्युर् ब्रूते ।

तैब्रा ३.३.९.७ पुरोडाशं चतुर्धा करोति । १०.७.२४-३३ न्यामा.

तैब्रा ३.२.८.५ पुरोडाशं पर्यग्निकरोति । २.१.९,१०; ३.१.१३ दीप्तैर् दर्भैः परितः करोति रक्षसां संशोधनार्थम् ।

मैसं ४.६.२ पुरोडाशशकलम् ऐन्द्रवायवस्य पात्रे निदधाति, धानाः आश्विनपात्रे, पयस्यां मैत्रावरुणस्य पात्रे । ३.८.३३

शत १.५.२.१४ पुरोडाशस्तु अग्नीषोमीय एव । ५.४.२१ तस्माद् अग्नीषोमीय एकादशकपालः पुरोडाशः ।

पुरोडाशम् अतुङ्गम्, अनपूपाकृतिम्, कूर्मस्य इव प्रतिकृतिम्, अश्वशफमात्रम् । (आप १.२५.३)

तैसं ६.६.१ पुरोडाशान् अलङ्कुरु । ५.१.२५

सत्या १.१.७३ पुरोडाशाभ्याम् एव असोमयाजिनं याजयेत्, यौ एतौ आग्नेयश्च ऐन्द्राग्नश्च । १०.८.३५,३६.४५ नासोमयाजिनो ब्राह्मणस्य अग्नीषोमीयः पुरोडाशो विद्यते, इति एकेषाम् आग्नेयोऽष्टाकपालपुरोडाशः ऐन्द्राग्न एकादशकपालो द्वादशकपालः पुरोडाशो वा ।

मैसं ३.१.१० पुरोडाशेन वै देवा अस्मिन् लोके आर्ध्नुवन्, चरुणा अमुष्मिन् लोके । १०.१.४३

मैसं २.३.१ पुरोडाशो व्रीहिमयः कर्तव्यः । ६.३.११

आश्व ४.१.४.५.६ पुरोऽध्वर्युर् विभजति-प्रतिप्रस्थाता मन्थिनं जुहोति,नेष्टा पत्नीम् अभ्युदानयति, उन्नेता चमसान् उन्नयति, प्रस्तोता प्रस्तौति । उद्गाता उद्गायति, प्रतिहर्ता प्रतिहरति, सुब्रह्मण्यः सुब्रह्मण्याम् आह, होता प्रातरनुवाकं ब्रूते, मैत्रावरुणः प्रेष्यति च अनु च आह, अच्छावाको यजति, ग्रावस्तुद् ग्रावस्तोत्रीयम् अन्वाह तस्माद् एतावन्तो वरीतव्याः । ३.७.२१-२४ न्यामा.

तैसं ३.४.१० पुरोनुवाक्यां च प्रथमं प्रयुङ्क्ते । ३.२.१२ तं.

काश्या १.८.९ पुरोनुवाक्या देवतास्मरणार्था, याज्या हविःप्रदानार्था । २.१.१३

तैसं २.६.२ पुरोनुवाक्या पुरस्तात् लक्ष्मा भवति, उपरिष्टात् लक्ष्मा याज्या । २.१.१३ पुरस्तात् लक्ष्मा पुरोनुवाक्या, उपरिष्टात् लक्ष्मा याज्या ।

तैसं ३.४.१० पुरोनुवाक्याम् अनूच्य याज्यया जुहोति सदेवत्वाय । ८.४.३

तैसं ५.४.७ पुरोनुवाक्याम् अन्वाह । २.१.१३

तैब्रा ३.६.११.१,२ पुरोनुवाक्यां वा मैत्रावरुणो ब्रूयात् । ३.७.४४ यत्र प्रैषश्च अनुवाक्या च सह उच्यते, न केवलाऽनुवाक्या वा मैत्रावरुणः पुरोनुवाक्याम् अन्वाह-'आभरतं शिक्षतं वज्रबाहू' अथ प्रैषम् आह 'होता यक्षद् इन्द्राग्नी ...' होतर् यज ।

| | |
|---|---|
| ऐब्रा ८.२४ | पुरोहितं करोति । उपादेयत्वेन हि श्रूयते । ६.६.१३ राजा यक्ष्यमाणो ब्राह्मणं पुरोदधीत । |
| ऐब्रा ७.२५ | पुरोहितं वृणीते । ६.६.१२ पुरोहितस्य आर्षेयेण वृणीरन् । |
| तैसं २.२.५ | पूत एव सः । १.४.२२ |
| तां ९.५.३ | पूतिका एव अभिषोतव्याः । ( सोमाभावे ) ६.३.१६ |
| तैब्रा ३.७.५.१३ | पूर्णमासाय सुराधसे स्वाहा ( प्राणाय + ) । ८.४.१५ |
| तैब्रा ३.८.१०.५ | पूर्णाहुतिं जुहोति । १.२.१३ |
| तैब्रा ३.८.१०.५ | पूर्णाहुत्या सर्वान् कामान् अवाप्नोति । १.२.४,१६ पूर्णाहुतिम् उत्तमां जुहोति, सर्वं वै पूर्णाहुतिः, सर्वम् एव अवाप्नोति । |
| भर १३.१८.१० | पूर्णिकावहन्ति करोति स्वाध्यायकाले । १.२.३० अक्षरानुपूर्व्यां मन्त्रावधारणे यतते । अवहननमन्त्रः क्रियते । |
| पा. ३.४.२१ | पूर्वकालतायां 'क्त्वा' स्मर्यते । १.१.१-९ न्यामा. समानकर्तृकयोः पूर्वकाले क्त्वा । |
| तैसं २.५.३;२.६.३ | पूर्वं दध्नो धर्माः समाम्नाताः दर्शपूर्णमासयोः पश्चाद् आग्नेयस्य । ५.४.३ |
| षड् १.३.१२ | पूर्वपक्षापरपक्षौ वा इन्द्रस्य हरी ताभ्यां सर्वं हरति । ९.१.४३,४४ ( शुक्लकृष्णपक्षौ ) |
| गोभिलगृ १.९.१५ | पूर्वपक्षे सर्वासु तिथिषु अमावास्या । आचार्यः (सूत्रकारः) – वचनं हि भवति । आपौर्णमास्याः अमावास्या नास्त्येति । १.३.१४ |
| आपगृ १.२ | पूर्वपक्षोऽहः । ६.८.२२ एतद् वै देवानां रूपं यद् उद्गयनं पूर्वपक्षोऽहः । |
| तैसं १.१.४-६;१.६.१ | पूर्वं औषधधर्माः समाम्नाताः ततः आज्यस्य । ५.१.१५ |
| तां १६.१३.९ | पूर्वस्मिन् साद्यस्के साण्डक्षिसंवत्सरः सोमक्रयणः स्पर्धमानानाम् । ८.१.१९ |
| तां १६.८.३ | पूर्वस्मिन् साहस्रे सहस्रं दक्षिणा । ८.१.१९ सहस्रदक्षिणाः साहस्रा नाम चत्वार एकाहाः । |
| षड् १.१.१३ | पूर्वापरपक्षौ वा इन्द्रस्य हरी । ९.१.४४ |
| निरुक्ते १.१ | पूर्वापरीभूतं भावम् आख्यातेन च आचष्टे यजति पचति इति उपक्रमप्रभृति अपवर्गपर्यन्तम्, एष हि आख्यातार्थः । १.१.५;६.३.२४ |
| आप २.१८.१० | पूर्वार्धाद् अवद्यति । ५.२.४ |
| शत २.४.२.८ | पूर्वाह्णो वै देवानां, मध्यन्दिनो मनुष्याणाम्, अपराह्णः पितॄणाम् । ६.८.२३ |
| जैब्रा १.२९८ | पूर्वाह्णो वै रथन्तरम् अपराह्णो बृहत् । १०.६.२६ पूर्वाह्णो वै रथन्तरस्य योगोऽपराह्णो बृहतः । |
| मैसं १.४.५ | पूर्वेद्युर् अग्निं गृह्णाति, उत्तरमहर् देवतां यजति । ५.४.२३ |
| तैसं २.५.५ | पूर्वेद्युर् अमावास्यायां वेदिं करोति । ५.१.२९;११.३.१;१२.१.३७ |
| तैसं १.१.२ | पूषा ते ग्रन्थिं ग्रथ्नातु । १२.१.४६ बर्हिषः संनहने मन्त्रः |
| काठकसं ५.१; भर ८.३.१ | पूषानुमन्त्रणानि । ३.२.१ पूष्णोऽहं देवयज्यया पुष्टिमान् पशुमान् भूयासम् । |
| तैसं २.६.८ | पूषा प्रपिष्टभागोऽदन्तको हि । ३.३.३४ न्यामा. |
| सत्या १.६.२० | पूषा वां विभजतु, अर्यमा वां विभजतु, भगो वां विभजतु । १२.३.२९ |
| ऋ १.१६४.३४,३५ | पृच्छामि त्वा ( परमन्तं पृथिव्याः, पृच्छामि यत्र भुवनस्य नाभिः । पृच्छामि त्वा वृष्णो अश्वस्य रेतः, पृच्छामि वाचः परमं व्योम ॥ इयं वेदिः परो अन्तः |

पृथिव्याः, अयं यज्ञो भुवनस्य नाभिः । अयं सोमो वृष्णो अश्वस्य रेतो, ब्रह्मायं वाचः परमं व्योम ॥ ) २.१.३२

पा उणादि ४.११५ — पृणातेः पर्वशब्दः । ९.२.५३ स्ना मदि पदि अत्ति ( ऋ ) पृशकिभ्यो वनिप् । पॄ ( पालनपूरणयोः ) वन्=पर्वन्

ऋ १०.११७.५ — पृणीयादिन्नाधमानाय तव्यान् द्राघीयांसमनु पश्येत पन्थाम् । ओ हि वर्तन्ते रथ्येव चक्राऽन्यमन्यमुप तिष्ठन्त रायः ॥ २.१.३३

शत २.५.२.५ / आप ८.५.११ — पृथग् अग्नी प्रणयतः । ११.२.३३ द्वौ अग्नी भवतः ( शत ) गार्हपत्याद् अग्नी प्रणयतः ।

तैब्रा १.६.४.२ — पृथग् वेदी कुरुतः । ११.२.३३ द्वे वेदी भवतः ( शत २.५.२.५ ) ।

तैआ ३.२ — पृथिवी होता, द्यौर् अध्वर्युर्, रुद्रो अग्नीत्, बृहस्पतिर् उपवक्ता । ३.७.८-१० न्यामा.

तैसं १.८.१३ ७.१.१४ — पृथिव्यै स्वाहा अन्तरिक्षाय स्वाहा वायवे स्वाहा । ८.४.११; १०.८.२०

तैब्रा ३.६.१.२ — पृथुपाजवत्यौ धाय्ये—पृथुपाजा अमर्त्यः, घृतनिर्णिक्स्वाहुतः । अग्निर् यज्ञस्य हव्यवाट् ॥ तं सबाधो यतस्रुचः, इत्थाधिया यज्ञवन्तः । आ चक्रुर् अग्निमूतये ॥ ३.२.२०

मैसं ३.१०.४ — पृषदाज्येन वनस्पतिं यजति । १०.४.३२

तैसं ६.३.११ — पृषदाज्येनानुयाजान् यजति । ४.१.३३; ५.२.८,१६; ५.३.१; १०.४.५०, ५३,५७,५८; १०.६.६४; १०.७.६४

तैसं ६.३.११ — पृषदाज्येनानुयाजाः पशोर् इज्यन्ते । १२.१.२

बाश्रौ ३.२.२.४७ — पृष्ठशमनीयेन यजेरन् । १०.६.४७

तैब्रा १.२.२.३ — पृष्ठानां रथन्तरं पृष्ठं भवति । ७.३.७

तैसं ७.३.१० — पृष्ठानि भवन्ति । १.४.३ यत् पृष्ठानि भवन्ति सुवर्गम् एव तैर् लोकं यजमाना यन्ति ।

तां २५.१.१ — पृष्ठेषु सतो बृहत्यो विधीयन्ते । ९.२.२८/४ ( पञ्चसु मास्सु )

तैसं ५.५.८ — पृष्ठैर् उपतिष्ठन्ते । ७.३.३४,३५,३६; ८.३.२४ उपतिष्ठते ।

तां १६.५.१३ — पृष्ठैः स्तुवते । ३.४.३; ९.१.१३; ७.१.१७; ९.२.७ स्तुवीत ।

तां २५.२.१ — पृष्ठ्यः षडहस्त्रयस्त्रिंशारम्भणः त्रिवृद् उत्तमः कार्यः । १०.६.२७

तां १३.१२.१४ — पृष्ठ्यः षडहः संतिष्ठते । १०.४.१

तां ४.५.१०,१३,१४ — पृष्ठ्यः षडहो द्वौ स्वरसामानौ । त्रिवृत्, पञ्चदश, सप्तदश, एकविंश, त्रिणव, त्रयस्त्रिंशाः, द्वौ स्वरसामानौ, द्वौ सप्तदशौ, एवम् अयम् अष्टाहः । तत्र यत् तृतीयं सप्तदशम् अहस्तत् त्रयस्त्रिंशस्य स्थाने अभिपर्यांहरन्ति, स उत्तराणां स्तोमानाम् अव्यवायाय, त्रयः सप्तदशा अनूचीना भवन्ति, त्रयाणां सप्तदशानां च अनूचीनतायै ( गवामयने ) अभिपर्यांहरे कृते-तद् यत् तृतीयं सप्तदशम् अहस् तत् षष्ठं कार्यम् । तां. पृष्ठ्यः षडहो बृहद्रथन्तरसामा । १०.६.४ अत्र बृहद्रथन्तरसामा इति द्वन्द्वगर्भो बहुव्रीहिसमासः, बृहच्च रथन्तरं च साम्नी यस्य इति चेत् तर्हि बृहद्रथन्तरसाम्नोः प्रत्यहं गाने स्याद् इतरेतयोगे द्वन्द्वसमासत्वाद् ।

| | |
|---|---|
| | यदि तु अनेकपदबहुव्रीहिः – बृहत्साम यस्य रथन्तरसाम यस्य इति तदा विभक्ते साम्नी स्याताम् 'विभक्ते वा असमस्तविधानाद् विभागे अप्रतिषिद्धम्' इति । १०.४.५ सूत्रत्वाद् अनेकपदबहुव्रीहिसमासो ग्राह्यः । १०.६.४,५ (गवामयने) |
| तैसं ७.४.२ | पृष्ठ्यः षडहो भवति । ८.२.२४;२.३.२४ तं. |
| तैसं ६.६.८ | पृष्ठ्ये गृह्णीयाद् अतिग्राह्यान् । १०.८.२३-२८ न्यामा. |
| ऐब्रा ६.१० | पोता मरुतः 'मरुतो यस्य हि क्षये' (ऋ १.८६.१) इति यजति । ३.२.३० |
| मैसं ३.९.८ | पोतारं वृणीते । ३.७.२२ |
| काठकसं २६.१ | पोत्रीयं नेष्ट्रीयम् इति समाख्यायां अपवादः । ३.७.४१; ३.८.१९ |
| तैब्रा ३.१२.९.५ | पोत्रीया नेष्ट्रीया । ३.७.४१ अपचितिः पोत्रीयाम् अयजत्, नेष्ट्रीयाम् अयजत् त्विषिः । |
| सत्या १७.९.१,२ | पौण्डरीकश्च द्वादशाहप्रकृतिः । १०.६.६६ |
| ऊहः–काठकसं ३१.१४ | पौण्डरीकानि बर्हींषि भवन्ति । ९.३ ३ |
| | पौण्डरीकैः स्तृणीत रक्तैः । ९.३.३ 'दर्भैः स्तृणीत हरितैः,' इति मन्त्राद् ऊहितः । |
| तां १०.१८.२,३ | पौण्डरीकेन एकादशरात्रेण स्वाराज्यकामो यजेत । १०.६.६२ |
| तां १७.८.३६;२२.१८.२,३ | पौण्डरीके अश्वसहस्रं दक्षिणा । ३.४.२८;१०.६.६२ |
| काठकसं ९.१४ | पौर्णमासीम् अभिमृशेत (इति हविर्लक्षणा) । ११.२.२ चतुर्होत्रा पौर्णमासीम् अभिमृशेत । |
| तैसं २.५.४ | पौर्णमासीम् एव यजेत भ्रातृव्यवान्, न अमावास्यां, हत्वा भ्रातृव्यम् अमावास्यायां यजेत । पिण्डपितृयज्ञेनैव अमावास्यायां प्रीणाति । ४.४.२१ |
| तैसं १.६.९ | पौर्णमासीम् यजेत । १०.१.१४; २.२.३ |
| तैसं २.६.३ | पौर्णमास्याम् आग्नेयोऽष्टाकपालो भवति । २.२.५ आग्नेयोऽष्टाकपालोऽमावास्यायां पौर्णमास्यां चाच्युतो भवति । |
| सत्या १.१.७१ | पौर्णमास्यां पौर्णमासेन यजेत, अमावास्यायाम् अमावास्यया । ६.२.२३ |
| शत ११.१.३.६ | पौर्णमास्यां पौर्णमास्या यजेत, अमावास्यायाम् अमावास्यया । १.३.१४; ४.२.२३; ६.२.२५,२७; ६.३.४; ११.१.५६; ११.२.१,१३; ११,४,२२ |
| शत ११.१.३.६ | पौर्णमास्यां पौर्णमास्या यजेत - साङ्गया (शबरस्वामी) ११.४.२२ |
| तां ८.५.६ | पौष्कलम् । ९.२.२५/३ अथैतत् पौष्कलम् । |
| पौष्कलं साम ६९४ | इन्द्रमच्छ सुता इमे वृषणं यन्तु हरयः । श्रुष्टे जातास इन्दवः स्वर्विदः ॥ |
| ऋ. ९.१०६.१ | |
| साम ६९५ ऋ ९.१०६.२ | अयं भराय सानसिरिन्द्राय पवते सुतः । सोमो जैत्रस्य चेतति यथा विदे ॥ |
| साम ६९६ ऋ ९.१०६.३ | अस्येदिन्द्रो मदेष्वा ग्राभं गृभ्णाति सानसिम् । वज्रं च वृषणं भरत् समप्सुजित् ॥ ९.२.२५/३ |
| तैसं २.२.१ | पौष्णं चरुं निर्वपेत् । ३.३.३५-३८ न्यामा. |
| तैसं २.१.६ | पौष्णं श्यामाकम् आलभेत अन्नकामः । ३.३.३५-३८ न्यामा. |
| आप ४.१०.१ | पौष्णसावित्रसारस्वतद्यावापृथिव्यादि अनुमन्त्रणानि उत्कृष्यन्ते । ९.३.१५ |
| काठकसं ५.१ | पौष्णानुमन्त्रणानि-पूष्णोऽहं देवयज्यया पुष्टिमान् पशुमान् भूयासम् । ९.३.५,१८ |

| | |
|---|---|
| | प्रउगं शंसति। २.१.१३,२४,२८; ७.२.१७ ( प्रउगम् इति शस्त्रनाम ) |
| शत १३.५.१.८<br>श्लोकवा ९५ | प्रकृतात् कर्मणो यस्मात्, तत्समानेषु कर्मसु। धर्मप्रदेशो येन स्यात्, सोऽतिदेश इति स्थितिः। ७.१.१ |
| | प्रकृतिप्रत्ययौ प्रत्ययार्थं सह ब्रूतः। १.४.१३;११.१.२२,२४ |
| पा. ३.१.६७ वा | प्रकृतौ यदि सर्वार्था, आज्यौषधी सान्नाय्यार्था। १२.२.२१ |
| संकर्ष १.१.३६ | |
| लाट्यायन १.८.११ | प्रगाथः– पूर्वस्तोत्रीयान्तस्य पादस्य पुनर् अभ्यासः पादत्रये च गीत्वा पश्चात् तृतीयं पादं द्विर् अभ्यस्य चतुष्पादेन सह गायत्रीं कृत्वा गायेद्, एवं चतुर्थपादं द्विर् अभ्यस्य पञ्चमेन सह गायत्रीं कृत्वा गायेत्॥ ९.२.२५/१ |
| षड् ४.२.२२ | प्रचरन्ति। १०.४.१ लोहितोष्णीषाः लोहितवाससो निवीता ऋत्विजः प्रचरन्ति। |
| मैसं ४.१०.१००<br>ऋ १.१०९.६ | प्र चर्षणिभ्यः पृतना हवेषु प्र पृथिव्यां रिरिचाथे दिवश्च। प्र सिन्धुभ्यः प्र गिरिभ्यो महित्वा प्रेन्द्राग्नी विश्वा भुवनात्यन्या॥ ३.२.१९;३.३.१२ |
| तैसं ४.३.१० | प्रजा अधीयन्त। १.४.२७ न्यामा. |
| तैसं ६.३.१० | प्रजा उत्पादयितव्या। ६.२.३१ स वै अनृणो यः प्रजावान्। प्रजायस्व प्रजया– ( ऋ १०.८३.२ ) |
| मैसं १.९.६ | प्रजाकामं चतुर्होत्रा याजयेत् चतुर् गृहीतम् आज्यं गृहीत्वा चतुर् होतारं व्याचक्षीत, पूर्वेण ग्रहेण अर्धं जुहोति, तदुत्तरेण अर्धम्। ६.८.१ |
| तां ४.१.४,७ | प्रजाकामा गवाम् अयनं उपेयुः। ज्योतिर् गौर् आयुर् इति। ७.४.१३ |
| तैसं ७.४.३ | प्रजाकामा पशुकामाः त्रिंशद् अतिरात्रं सत्रम् आसीरन्। |
| तैसं २.२.१ | प्रजाकामो यजेत। २.३.७; ६.२.१३ ऐन्द्राग्नम् एकादशकपालं निर्वपेत् प्रजाकामः। |
| वाजसं २४.२९ | प्रजापतये पुरुषान् हस्तिनः आलभन्ते। ४.१.१७; ७.४.१३ |
| भर २.१२.४ | प्रजापतिं मनसा ध्यायन् आघारयति। १०.३.१३-१७ न्यामा. संततम् ऋजुम् आघारयति प्रजापतिं मनसा ध्यायन्। |
| शत १.४.५.१२;१०.४.४.१ | प्रजापतिं मनसा यजेत। १०.८.५२ |
| शत १०.४.४.१ | प्रजापतिं वै प्रजाः सृजमानं पाप्मा मृत्युर् अभिजघान, स तपोऽतप्यत सहस्र-संवत्सरान् पाप्मानं विजिहासन्। ६.७.३१ |
| तैसं ७.१.१ | प्रजापतिर् अकामयत प्रजायेय इति स मुखतस्त्रिवृतं निरमिमीत तम् अग्निर् देवता अन्वसृज्यत, गायत्री छन्दो रथन्तरसाम, ब्राह्मणो मनुष्याणाम् अजः पशूनां, तस्मात् ते मुख्याः मुखतो हि असृज्यन्त। उरसो बाहुभ्यां पञ्चदशं निरमिमीत, तम् इन्द्रो देवता अन्वसृज्यत, त्रिष्टुप् छन्दो बृहत् साम, राजन्यो मनुष्याणाम् अविः पशूनां, तस्मात् ते वीर्यावन्तो वीर्याद् हि असृज्यन्त। मध्यतः सप्तदशं निरमिमीत, तम् विश्वेदेवा देवताः अन्वसृज्यन्त, जगती छन्दो वैरूपं साम, वैश्यो मनुष्याणां गावः पशूनां, तस्मात् ते आद्या अन्नधानाद् हि असृज्यन्त। १.४.२४ |
| तैसं २.१.१ | प्रजापतिर् आत्मनो वपाम् उदक्खिदत्, यः प्रजाकामः पशुकामो वा स्यात् स एवं प्राजापत्यं तूपरम् आलभेत। १.२.१,१० |
| शत १.४.५.१२<br>आप २.१८,२३ | प्रजापतिर् उपांशु यष्टव्यः, तस्माद् यत् किञ्चित् प्राजापत्यं यज्ञे क्रियते, तद् उपांशु एव क्रियते। २.२.९ |

तैसं ६.३.११ प्रजापतिर् यज्ञम् असृजत, स आज्यं पुरस्ताद् असृजत, पशुं मध्यतः पृषदाज्यं पश्चात् । १०.३.१२

तैसं २.३.१२ प्रजापतिर् वरुणाय अश्वम् अनयत्, स स्वां देवताम् आर्च्छत्, स पर्यदीर्यत, स एतं वारुणं चतुष्कपालम् अपश्यत्, तं निरवपत्, ततो वै स वरुणपाशाद् अमुच्यत, वरुणो वा एतं गृह्णाति यो पशुं प्रतिगृह्णाति ( वरुणयागाय )। ३.४.३१

तां १६.१.३.१४ प्रजापतिर् वा अग्निष्टोमः, स उत्तरान् एकाहान् असृजत इति ते सृष्टा अब्रुवन् ' न वै स्वेन आत्मनः प्रभवाम प्रभवाम तेभ्यः स्वातन्त्र्यं ( स्वां तनुं ) प्रायच्छत् तथा च प्राभवन् । + तद् यथा इदम् अग्नेर् जाताद् अधि अग्नयो विह्रियन्ते, एवं वा एतस्माद् यज्ञाद् अन्ये यज्ञक्रतवो विह्रियन्ते यो वै

तां १६.१.४ त्रिवृदन्यं यज्ञक्रतुम् आपद्यते स तं दीपयति, यः पञ्चदशः स तं, यः सप्तदशः स तं, य एकविंशः स तम् । ५.३.४०

शत १.५.८.१-३ प्रजापतिर् वा इदम् एकम् आसीत् स तपोऽतप्यत तस्मात् तपस्तेपानात् त्रयो देवा असृज्यन्त अग्निर् वायुर् आदित्यः, ते तपोऽतप्यन्त, तेभ्यस्तपस्तेपानेभ्यस्त्रयो वेदा असृज्यन्त, अग्नेर् ऋग्वेदो वायोर् यजुर्वेदः आदित्यात् सामवेदः । ३.३.२

तैसं २.१.१ प्रजापतिर् वा इदमेक आसीत् स आत्मनो वपां उदक्खिदत् । १०.८.९

तैब्रा १.१.५.१ प्रजापतिर् वाचः सत्यं अपश्यत् । ३.१.२२ न्यामा.

तैसं ५.५.१ प्रजापतिर् वै हिरण्यगर्भः । १०.३.१३-१७ न्यामा.

साम ५८८ प्रजापतिहृदयं नाम साम – यस्येदमा रजोयुस्तुजे जने वनं स्वः । इन्द्रस्य रन्त्यं बृहत् ॥ ७.२.१४

तैब्रा ३.५.७.१,२ प्रजापते न त्वदेतान्यन्यो विश्वा जातानि परिता बभूव । यत्कामास्ते

ऋ १०.१२१.१० जुहुमस्तन्नोऽस्तु वयं स्याम पतयो रयीणाम् ॥ स वेद पुत्र पितरं स मातरं

तैब्रा ३.५.७.२ ससूनुर् भुवत् स भुवत् पुनर् मघः । सद्यामौर्णोदन्तरिक्षं स सुवः, स विश्वा भुवो अभवत् स आभवत् प्राजापत्ये याज्यानुवाक्ये ।

तैसं ३.१.४ प्रजापतेर् जायमानाः, प्रजा जाताश्च या इमाः । तस्मै प्रति प्र वेदय चिकित्वाँ अनुमन्यताम् । इमं पशुं पशुपते ते अद्य बध्नाम्यग्ने सुकृतस्य मध्ये अनुमन्यस्व सुयजा यजाम, जुष्टं देवानामिदमस्तु हव्यम् ॥ ३.६.१८-२७ न्यामा.

मैसं ३.३.५ प्रजापतेर् हृदयम् अनुचं गायति । ७.२.१४ आत्मनो

तैसं ५.५.८ प्रजापतेर् हृदयेन हविर्धाने अन्तः स्तुवन्ति । १०.४.१५

तैसं ६.३.१० प्रजाम् उत्पादयेत् । ६.२.३७ स वै अनृणो यदा प्रजावान् ।

आप १.२४.३ प्रणीताभिर् हवींषि संयौति । ४.२.१४; १०.१.५१ ( पूर्वं चमसे संगृहीता आपः प्रणीताः )

मर १.१७.५ प्रणीताः प्रणेष्यन् वाचं यच्छति, तां स हविष्कृता विसृजति । ९.१.२० प्रणीताः प्रणेष्यन् वाचं यच्छति आ हविष्कृतः ।

तैसं १.८.२२ ऋ ६.६१.४ प्रणो देवी सरस्वती वाजेभिर् वाजिनीवती । धीनामवित्र्यवतु ॥

ऋ ५.४३.११ आ नो दिवो बृहतः पर्वतादा सरस्वती यजता गन्तु यज्ञम् । हवं देवी जुजुषाणा घृताची शग्मां नो वाचमुशती शृणोतु ॥ ५.१.१५ सरस्वत्यै याज्यानुवाक्ये ।

तैब्रा २.४.३.४
ऋ १.१५४.२ प्र तद् विष्णुः स्तवते वीर्याय मृगो न भीमः कुचरो गिरिष्ठाः । यस्योरुषु त्रिषु विक्रमणेष्वधि क्षियन्ति भुवनानि विश्वा ॥ पौर्णमास्याम् उपांशुयाजे विष्णोर् मन्त्रः । १०.८.५३

तैसं ३.२.९ प्रतिगरोऽध्वर्यूणाम् । ३.७.४२

याज्ञस्मृ १.११८ प्रतिग्रहोऽधिको विप्रे, याजनाध्यापने तथा । १२.४.४२-४७ न्यामा.

तां २३.२.४ प्रतितिष्ठन्ति ह वा एते ये एता रात्रीर् उपयन्ति । (त्रयोदशरात्रीः) ४.३.१७

कात्या २२.१.१६ प्रतिप्रसवो हि ज्योतिष्टोमे सर्वस्वस्य उच्यते-द्वादशशतं विधाय आह एतावता वाव ऋत्विज आनेया अपि वा सर्वस्वेन । सहस्रसर्ववेदसयोर् विकल्पः ।

सत्या ८.१.४८
भर १४.९.९ प्रतिप्रस्थातः सवनीयान् निर्वपस्व इति प्रेष्यति । ५.१.३५

शत ३.८.२.२० प्रतिप्रस्थाता नाम ऋत्विक् श्रूयते । १०.७.२२ प्रतिप्रस्थाता वपां श्रपयति । दक्षिणतः परीत्य प्रतिप्रस्थाता श्रपयति । प्रतिप्रस्थातुश्च वपा श्रपणादपि अभक्षः वपायाः सर्वप्रदानत्वात् । १०.७.२२-२३ न्यामा.

मैसं ३.१०.५ प्रतिसवनं सवनीयाः पुरोडाशाः– तेषु हविष्कृदाह्वानस्य आवृत्तिः, वाजपेये ऋतुपशवः प्राजापत्याः तेषु अध्रिगुप्रैषस्य आवृत्तिः, कृष्णग्रीवयोः पुरोनुवाक्या मनोता सूक्तस्य च आवृत्तिः । ११.४.५४ सूत्रम् – हविष्कृदध्रिगु पुरोनुवाक्या मनोतस्य आवृत्तिः कालभेदात् स्यात् ।

तैसं ६.६.११ प्रतिसवने गृह्णाति षोडशिनम् । १०.५.४४ सवने सवने प्रतिगृह्णाति ।

वाराह २.२.५.२६ प्रतिसूक्तम् उपदधाति ( इष्टकाः ) । १०.६.७४ आग्नेयैः सूक्तैर् उपदधाति, प्रतिसूक्तम् उपदधति ।

तैसं ६.१.३ प्रत्तासु दक्षिणासु चात्वाले कृष्णविषाणां प्रास्यति । ४.२.१९ न्यामा. नीतासु ।

मनुस्मृ १२.१०५ प्रत्यक्षम् अनुमानम् च शाब्दं च विविधागमम् । त्रयं सुविदितं कार्यं धर्मशुद्धिम् अभीप्सता । १.३.३ तं.

पा. ३.१.१,२,३ प्रत्ययः, परश्च, आद्युदात्तश्च इति त्रयाणां सूत्राणाम् एकवाक्यम् अपि भवेत् । ३.४.१३ तं.

षड् ४.२.४.३ प्रत्यवायाय श्येनः, वज्रः, इषुः– श्येनेन वा वज्रेण वा इषुणा अभिचरन् यजेत । १.१.२

आश्व ८.१२.१४ प्रत्यसित्वा प्रायश्चित्तं जुहुयुः । १.३.२४ तं. (क्त्वाऽपि छन्दसि पा. ७.१.३८)

षड् १.२.१० प्रत्यहं सुब्रह्मण्याह्वानम् । ११.३.२८ तं. संस्थिते संस्थितेऽहनि अग्नीद् आग्नीध्रागारं प्रविश्य 'सुब्रह्मण्ये; सुब्रह्मण्याम् आह्वय इति प्रेष्यति' ।

नारदशिक्षा २.७.१ प्रत्यूषे ब्रह्म चिन्तयेत् । १.३.२४ तं. प्रत्युषसि ( नारदस्मृति ) ।

पा परिभाषा ११६ प्रत्येकं वाक्यपरिसमाप्तिः । ३.१.१२;८.३.५८;८.४.२

तां ४.२.१ प्रथम् अहः प्रायणीयं नाम प्रायणीयोऽतिरात्रः । ७.३.५

तां ८.८.१० प्रथमं बृहद्रथन्तरे वैकल्पिके पृथक् पृष्ठसाधनत्वेन चोदिते ततः पुनः श्रूयते यदि रथन्तरसामा ज्योतिष्टोमे +

तां ७.७.१,२ प्रथमाया ऋचः अष्टाक्षरेण प्रस्तोतव्यं त्र्यक्षरेण उत्तरयोः...। १०.६.२ अष्टाक्षरेण प्रथमाया ऋचः प्रस्तौति ...

सत्या ३.७.९ प्रथमास्तमिते जुहोति। ५.१.३३ प्रथमास्तमिते सायम् अग्निहोत्रं जुहोति।

मैसं १.८.७ प्रदोषे अग्निहोत्रं जुहोति, व्युष्टायां प्रातर्। ६.२.२३,२५,२७

वसिष्ठस्मृ २ ३८ प्रपा प्रवर्तयितव्य। १३.१

पा ३.३.११५ प्रमाण-प्रमा ल्युट्। १.३.३ तं.

ऋ ७.६६.१ प्रमित्रयोर्वरुणयोः स्तोमो न एतु शूष्यः। नमस्वान् तुविजातयोः॥ ६.१.२२ मित्रावरुणयोः। प्रमाण + अय्-क्विप् (पा. ६.१.६७) प्रमाणा। यलोपः—व्योर् वलि लोपः (पा. ३.१.६६) १.३.३ तं. पा. ३.२.१७७ अकःसवर्णे दीर्घः। (पा. ६.१.१०१)

तैसं २.६.१ प्रयाजशेषेण हवींषि अभिघारयति। ४.१.३३ प्रयाजान् इष्ट्वा हवींषि अभिघारयति।

पाम १.१.१ प्रयाजा सविभक्तिकाः कार्याः। १.३.२४ तं. अग्नाग्ने अग्नावग्नेऽग्निनाऽग्निमग्न

आप ५.२८.६ इति चतुर्षु प्रयाजेषु चतस्रो विभक्तीर् दधाति।

तैसं २.३.२ प्रयाजे प्रयाजे कृष्णलं जुहोति। २.२.४; ३.६.४; ४.४.३१; ७.१.८; ७.४.४, ५,८; ८.१.११,२७,२९

तैब्रा ३.३.४.५ प्रयाजौ द्वौ यष्टव्यौ। ४.१.४० प्रयाजं द्वयस्य समानयनादि प्रयोजकत्वम्।

शत ३.४.१.१८ उपभृति द्वे चतुर् गृहीते प्रयाजानुयाजेभ्यः। उपभृति समानयनार्थम् एव चतुर् गृहीतं ग्राह्यम्। न हि अत्र अनुयाजा यक्ष्यन् भवति।

तां २२.९.१,३ प्रयोगश्च उत्पत्तिं न त्यजति। ८.३.४ तं. जनकसप्तरात्रे चत्वारि त्रिवृन्ति अहानि अग्निष्टोममुख्यानि।

आप ८.७.१ प्रवयसं ऋषभं दक्षिणां ददाति। ११.२.४८ प्रवया इव ऋषभो दक्षिणा

भर ८.१०.१२ चातुर्मास्येषु।

लाट्यायन १.१०.२५ प्रवरास्तु निवर्तन्ते चात्वालावेक्षणप्रभृति च प्राग् हिंकारात्। बहिष्पवमानस्य हिंकारात् प्राग्। अग्निः प्रस्तोता अहं मानुषः (इत्यादयः प्रवराः) बृहस्पतिर् उद्गाता अहं मानुषो वायुः प्रतिहर्ता अहं मानुषः। १०.४.१६

मैसं १.४.११ प्रवरे प्रव्रियमाणे 'देवाः पितरः' इति ब्रूयात्। १.२.१३ देवाः पितरः, पितरो देवाः, योऽस्मै स सन् यजे, योऽस्मि स सन् करोमि, शुनं म इष्टं शुनं शान्तं शुनं कृतं भूयात्॥

मैसं ४.१०.१०१ प्रव (च) र्षणिभ्यः पृतना हवेषु प्र पृथिव्या रिरिचाथे दिवश्च। प्र सिन्धुभ्यः प्र गिरिभ्यो महित्वा प्रेन्द्राग्नी विश्वा भुवनात्यन्या॥ ३.३.१२

तैब्रा ३.५.२ 'प्र वो वाजा अभिद्यव' इत्याद्या एकादश सामिधेन्यः। ३.६.९ व्यामा. प्र वो वाजा अभिद्यवः हविष्मन्तो घृताच्या। देवान् जिगाति सुम्नयुः॥ इति प्रथमाम् अन्वाह (त्रिरुत्तमाम्)। ९.१.३३

तैब्रा ३.६.६.२ प्रशसा बाहू। ९.४.२३ सूत्रम्—बाहुप्रशंसा वा। ९.४.२४ प्रशस्तौ बाहू कृणुतात्।

तैब्रा १.६.३.२ प्रसुत्रो भवन्ति। ७.१.१७ (प्रसूनोपेताः—पुष्पोपेता दर्भाः—प्रसुवः वरुणप्रघासेषु।)

| | |
|---|---|
| | प्रसूनं बर्हिः। १२.२.३५ पुष्पितं बर्हिः। |
| भर ८.१.१३ | प्रस्तरम् उत्तरं बर्हिषः सादयति। १.४.२३ बर्हिष उत्तरं प्रस्तरं सादयति। |
| तैसं २.६.५ | प्रस्तरं प्रहरति। ६.२.९ कुशमुष्टिं जुहोति। |
| तैसं २.६.५ | प्रस्तरे जुहूम् आसादयति। सर्वा वा स्रुचः। १.४.२३ स्रुचोऽध्यासादयामि। |
| तैब्रा ३.७.६.८ | स्रुचः प्रस्तरे सादयति अपि वा जुहूमेव। |
| आप २.९.१४; २.१०.१ | |
| कात्या ३.१.३ | प्राक् स्विष्टकृतः प्रथमस्थानेन मध्यमेन इडायाः शेषं तृतीयस्थानेन। ९.१.२५ तं. |
| तैसं ६.३.१ | प्राग् आसीनो धिष्ण्यान् आघारयति। ७.३.३२ |
| तैब्रा ३.२.९.८ | प्राग् उदक्प्रवणं देवयजनम्। १.३.७ तं. प्राचीम्, उदीचीं प्रवणां करोति। |
| गौतमध २ | प्राग् उपनयनात् कामचारवादभक्षः। ६.२.२२ तं. |
| आपध १.११.३०.१ | प्राङ्मुखोऽन्नानि भुञ्जीत। ६.२.२० |
| आप ८.१.५ | प्राचीनप्रवणे वैश्वदेवेन यजेत। १.३.२२; ४.२.२३; ११.२.१ |
| मैसं ३.८.२ | प्राचीनम् अग्नीषोमीयात्। ३.३.९ तं. तस्माद् यत् किञ्च + |
| तैसं ६.१.१ | प्राचीनवंशं करोति। ३.४.१० |
| तैसं २.५.११ | प्राचीनावीतं पितृणाम्। ३.४.७ |
| आप ९.११.८ | प्राचीनावीती दोहयेत्, यज्ञोपवीती हि देवेभ्यो दोहयति। १.४.९ + १.३ |
| शत १२.५.१.६ | |
| तैसं ६.१.१ मैसं ३.६.१ | प्राचीं देवा अभजन्त, दक्षिणां पितरः, प्रतीचीं मनुष्याः, उदीचीम् असुराः। ३.४.१० |
| तैब्रा ३.२.१.३ | प्राचीमाहरति, उदीचीम् आहरति, प्रागुदीचीम् आहरति। (पलाशशाखाम्) आहरेत्। ४.२.७ |
| तैब्रा ३.२.९.८ | प्राचीमुदीचीं प्रवणां करोति। १.३.७ तं. |
| आप २.१४.१ | प्राञ्चं आघारयति। १२.३.८ प्राञ्चम्, उदञ्चम्, ऋजुं, संततं ज्योतिष्मति आघारयति। |
| तैसं १.६.५ | प्राच्यां दिशि देवा ऋत्विजो मार्जयन्ताम्। (इत्यादयो दर्शपूर्णमासयोर् अवभृथः।) ७.३.१२-१५ न्यामा. |
| आप ११.२०.१३ | प्राजहिते पुरोडाशश्रपणम्। १२.१.१४ प्राजहितं परिक्रम्य पुरोडाशश्रपणम्। |
| मैसं २.२.२ | प्राजापत्यं घृते चरुं निर्वपेत, शतकृष्णलम् आयुष्कामः। ८.१.३५; १०.२.१,१६ |
| तैब्रा १.३.४.३ | प्राजापत्याः पशवः। २.२.२१ सप्तदश प्राजापत्यान् आलभते। |
| तैसं ५.२.१०; ४.३.२ | प्राणभृत उपदधाति (इष्टकाः) एतस्यैव प्राणान् दधाति। १.४.२८ तत्र मन्त्रः अयं पुरो भवस्तस्य प्राणो भौवायनः .... |
| तैसं ४.७.१ | प्राणश्च मे अपानश्च मे व्यानश्च मे असुश्च मे चित्तं च मे आधीतं च मे वाक् च मे मनश्च मे इत्यादयो द्वादश आहुतयः। |
| छांउ ३.१७.६ | प्राणसंशितमसि। २.१.२७ न्यामा. |
| तैसं ३.४.८ | प्राणान् एव अस्य प्रतीचः प्रतियौति। ५.१.७ |
| तैसं २.५.२ | प्राणापानौ एव आत्मन् धत्ते। ३.४.१४,१५ |

कात्या १.३.३७ प्राणिमात्रपुष्करा हि सा एकपुष्करा च । ५.२.१६ प्राणिमात्रपुष्करा, बाहुमाग्यः स्रुचः ।

तैसं १.७.९ प्राणो यज्ञेन कल्पताम् । २.१.४७

तैसं २.५.२ प्राणो वै दक्षोऽपानः क्रतुः तस्मात् जंजभ्यमानो ब्रूयात् 'मयि दक्षक्रतू' इति प्राणापानौ एव आत्मन् धत्ते । ३.४.२०-२२ न्यामा.

मैसं ४.५.२ प्रातरनुवाकश्रवणे । १.२.३५ तं.

तैसं २.५.६ प्रातर् जुहोति (अग्निहोत्रं) । ५.१.३३ प्रातः पुरोदयाद् अपहते तमसि जुहुयात् (शांब्रा २.७)।

ऐब्रा ५.३१ प्रातः प्रातरनृतं ते वदन्ति, पुरोदयात् जुह्वति येऽग्निहोत्रम् ।
दिवाकीर्त्यं अदिवा ते कीर्तयन्ति सूर्यो ज्योतिर् न तदा ज्योतिरेषाम् ॥
इति अनुदितं होमं निन्दन्ति । २.४.८

मैसं ४.७.६ प्रातःसवने गृह्यः षोडशी, तेजो वै प्रातःसवनं, तेजसः एव वज्रं निर्मिमीते । १०.५.४४ प्रातःसवने ग्राह्यः (षोडशी) माध्यन्दिने सवने ग्राह्यस्तृतीय-सवने ग्राह्यः ।

सत्या १३.२.२२ प्रातःसवने च प्रयाजशेषः, विप्रकृष्टकाले माध्यन्दिने सवने ब्रह्मसामकाले प्राजापत्यानां (पशूनाम्) आलम्भः । ४.१.३३

मैसं ३.९.५ प्रातःसवने वपाप्रचारे । ३.६.२९ यद् वपया प्रातःसवने चरन्ति ।

तैसं १.८.४ प्रातःसवने साङ्गं श्रूयते, तथा माध्यन्दिने सायं च । ५.१.२१ अग्नयेऽनीकवते प्रातर् अष्टाकपालो मरुद्भ्यः सांतपनेभ्यो माध्यन्दिने चरुः मरुद्भ्यो गृहमेधिभ्यः सर्वासां दुग्धे सायम् ओदनम् ।

मैसं ३.१.९ प्रादाव्याद् आहरेत् । १२.४.२७ प्रादावाद् आहरेत् ।

शत १२.४.४.५ प्रादाव्येन संसर्गः । १२.४.२२,२७ अग्नये शुचये अष्टाकपालं निर्वपेत् यस्याग्निः प्रादाव्येन संसृज्यते ।

पा ३.३.१६३,२ प्राप्तकाले लोट् च । ३.८.२२ प्रैषातिसर्गप्राप्तकालेषु कृत्याश्च लोट् च । प्रोक्षणी आसादयितव्या ।

तां ४.२.१ प्रायणीयम् अहः । २.३.२४ तं.

तां ४.२.३ प्रायणीयशब्दः परत्रापि श्रूयमाणो न धर्माणां ग्राहकः-तस्मात् प्रायणीयस्य अह्नः ऋत्विजा भवितव्यम् । ७.३.५ तं.

तैसं ६.१.५ प्रायणीयस्य निष्कासे उदयनीयं निर्वपति । ११.२.६६

तां ५.३.६ प्रायणीयाग्निष्टोमसाम्नि यज्ञायज्ञीयेन सह विकल्पिकं जराबोधीयं (साम १३२३-२५) अग्निष्टोमसाम कार्यम् इति पञ्चविंशे (तां ४.२.१९) अभिहितम् अपि माशकानुवृत्त्या कात्यायनेन आभंवीयगायत्रतृतीयत्वेन 'जरासाद्' इति (साम ९३७) लक्षितम् । आभंवीयगायत्रीगतगायत्र्या-नन्तरसाम्नो हि तेन सम् इति संज्ञा कृता । यज्ञायज्ञीयम् एव अग्निष्टोम-सामत्वेन नियतम् । १.३.११ तं.

तैब्रा १.३.१.६ प्रायणीयायां पत्नीसंयाजान् केवलान् न करोति, नान्यं न करोति । १०.७.३८ प्रायणीयायां पत्नीसंयाजान्तानि संतिष्ठते । अर्थात् प्रायणीयायां विहितानि पत्नीसंयाज-पूर्वाणि कर्माणि करोति, न पत्नीसंयाजान् ।

| | |
|---|---|
| | प्रायणीयोऽतिरात्रः । ८.२.२४ |
| ऐब्रा ४.१७<br>मनुस्मृ ११.४५ | प्रायश्चित्तं कामकृतेऽप्येके । १.३.७ तं. अकामतः कृते पापे प्रायश्चित्तं विदुर् बुधाः । कामकारकृतेऽप्याहुर् एके श्रुतिनिदर्शनात् ॥ |
| गोभिलगृ २.१.१९-२२ | प्रावृतां यज्ञोपवीतिनीम् अभ्युदानयन् जपेत् । ६.१.१७-२१ न्यामा. |
| तैसं २.६.८ | प्राशित्रं चतुर्धाकरणं शंयुवाककालभक्षा दर्शपूर्णमासयोः । ६.४.४ प्राशित्रं ब्रह्मणो भागः, यवमात्रं पिप्पलिकामात्रम् अवदानम् । |
| तैब्रा ३.६.६.१ | 'प्रास्मा अग्निं भरत' पशव इति ब्रूयात् । ९.१.४६ प्रास्मा अग्निं भरत स्तृणीत बर्हिर् अनु एनं माता मन्यताम् अनु पिता अनु भ्राता । ९.३.२२ |
| तां ५.५.९.१०<br>तैब्रा १.२.६.६.७ | प्रेङ्खम् आरुह्य होता शंसति, यदा वै प्रजामहः आविशन्ति प्रेङ्खं तर्हि आरोहन्ति । १.३.७ तं. |
| सत्या ९.६.२०,२१ | प्रेष्यति च अनु च आह ( मैत्रावरुणः ) । ३.७.२२; ३.७.४३-४५ न्यामा. |
| शत ४.२.१.१९ | प्रैतु होतुश्चमसः प्र ब्रह्मणः प्रोद्गातॄणां प्र यजमानस्य प्रयन्तु सदस्यानाम् । ३.५.२२,२३,३३,३४ |
| तैसं ६.६.५ | प्रैवाऽऽग्नेयेन वापयति मिथुनं सारस्वत्या करोति, रेतः सौम्येन दधाति, प्रजनयति पौष्णेन । ९.३.४३ |
| तैब्रा ३.६.१.१-३ | प्रोक्षणम् अञ्जनम् उच्छ्रयणं परिव्याणम्–यूपधर्माः । ११.३.५ |
| तैब्रा ३.२.९.१४ | प्रोक्षणीर् आसादय, इध्माबर्हिर् उपसादय, स्रुवं च स्रुचश्च संमृड्ढि, पत्नीं संनह्य आज्येनोदेहि । १.२.४५; १.४.१०-११; ३.८.२२; ६.८.२८; ९.३.२० |
| तैसं २.६.४ | प्रोक्षणीर् आसादयेति । उच्चारणाद् अदृष्टं कर्तव्यम् इत्यपि अयं प्रैषः । |
| कात्या २.३.३९<br>आप १.२१.३.५ | प्रोक्षिताभ्यां दृशदुपलाभ्यां पिनष्टि । ४.१.८; ९.१.२,३ पात्राणि दैव्याय ( शुन्धध्वम् ) इति बहुवचनत्वात् सर्वाणि पात्राणि एकत्र राशिकृत्य प्रोक्षति । |
| कात्या २.३.३९<br>शत २.२.२.१ | प्रोक्षिताभ्यामुलूखलमुसलाभ्याम् अवहन्ति । ४.१.८; ९.१.२,३ |
| तां ५.८.४ | प्लवो अन्वहं भवति । ७.४.१३ |
| साम ६७५<br>ऋ ९.१०७.४<br>साम ६७६<br>ऋ ९.१०७.५ | प्लवं साम–पुनानः सोम धारयापो वसानो अर्षसि ।<br>आ रत्नधा योनिमृतस्य सीदस्युत्सो हिरण्ययः ॥<br>दुहान ऊधर् दिव्यं मधु प्रियं प्रत्नं सधस्थमासदत् ।<br>आपृच्छ्यं धरुणं वाज्यर्षसि नृभिर् धौतो विचक्षणः ॥ |
| तां २५.१०.२२,२३ | प्लक्षं प्रस्रवणं प्राप्य अग्नये कामाय अष्टाकपालं पुरोडाशं निर्वपति । तस्याम् अश्वां पुरुषीं च धेनुके दत्वा प्रति यमुनाम् अवभृथम् अभ्यवयन्ति १०.२.४४ |
| ऐब्रा ७.३० | फलमयचमस एकेषाम् । ( राजन्यवैश्यानां ) ६.६.२२ फलानि च औदुम्बराणि आश्वत्थानि प्लाक्षानि अभिषुणुयात् । |
| तैसं ६.१.१० | बबरः प्रावाहणिर् अकामयत, वाचः प्रवदिता स्याम् । १.१.२८; १.२.६ |
| मैसं १.१.४ | 'बर्हिर् देवसदनं दामि' इति बर्हिर् लवने मन्त्रः । १.२.३१,३८; १.४.१; ३.२.१; ३.३.११; ६.३.१८; ११.४.४४ |
| तैसं २.६.१ | बर्हिर् यजति । ३.३.११ |

| | |
|---|---|
| तैब्रा ३.२.२.६ | बर्हिर् लुनाति । १.४.११; ४.२.३० बर्हिर् लूयते । |
| तैसं ६.३.४ | बर्हिषा यूपावटम् अवस्तृणाति । १.४.१०;३.८.२१;७.३.१८ पितॄणां सदनं ( निखातं–यूपावटं ) बर्हिर् अवस्तृणाति । |
| तैसं १.६.७ | बर्हिषा वै पौर्णमासे व्रतम् उपयन्ति, वत्सेन अमावास्यायाम् । ६.४.३४,३८ पुरस्ताद् बर्हिराहरणे पूर्णमासे परस्ताद् वत्सानाम् अपाकरणे अमावास्यायाम् । ( वाराह– १.१.२.७ बर्हिराहरणस्य पुरस्ताद् पौर्णमास्यां वत्सापाकरणस्य पुरस्ताद् अमावास्यायाम् ) |
| तैसं ६.३.१ | बर्हिः स्तृणाति । ५.१.२५ |
| तां १९.७.३ | बलभिदा यजेत् । १.४.१; ११.१.२० |
| तां ७.७.१० | बलवद् गेयम्, उच्चैर् गेयम् । ९.२.४८ |
| मैसं २.३.२ | बहिरात्मा वै प्रयाजानुयाजाः आत्मा देवता यत् प्रयाजानुयाजानां पुरस्तात् उपरिष्टाद् वा जुहुयाद्, बहिर् आत्मानं सजातानाम् आदधीत, अथ यत् मध्यतो जुहोति मध्यत एव सजातानाम् आत्मानं धत्ते । १०.४.२७ |
| तां १६.५ साम ६५१-५९ | बहिष्पवमानस्य नवस्तोत्रीयाः ते तिसृभिर् विष्टुत्या गेयाः । १.४.३ पवमान-मन्त्रार्थकत्वाद् बहिः सम्बन्धात् च । बहिष्पवमाने त्र्यस्तृचाः नवस्तोत्रीयाः तत्र चत्वारस्तृचा आगमयितव्याः । ( सत्या १७.२.३४ ) |
| लाट्यायन १.१२.५ शत ४.२.५.९ | बहिष्पवमानेन स्तुवते । १.४.३ तं. |
| तैसं ६.३.१ | बहिष्पवमाने स्तुते आह 'अग्नीद् अग्नीन् विहर, बर्हिः स्तृणीहि, पुरोडाशान् अलङ्कुरु ।' ५.१.२५-२६ न्यामा. |
| तैब्रा ३.२.३.८ मैसं ४.१.३ | बहु दुग्धि इन्द्राय देवेभ्यो हविः । २.१.१७; ११.१.४९ |
| मानव १.१.३.२९ | बहु दुग्धि महेन्द्राय देवेभ्यो हविः । २.१.१७ |
| पा २.४.३९,७३,७६; ३.२.८१,८८;५.२.१२२; ६.१.३०;६.७.७५; ७.१.८,१०,१०३ | 'बहुलं छन्दसि' इति अनेन सूत्रेण कतिपयशब्दाः यथा मध्यम् अपां स्थाने नीचीनबारं द्वारं स्थाने सिध्यन्ति । १.३.२४ तं. |
| पा १.४.२१,२२ | बहुषु बहुवचनं द्व्येकयोर् द्विवचनैकवचनम् । ३.४.१ तं. ११.१.३८ |
| पा १.२.५८ | बहुषु वा एकवचनं जात्याख्यायाम् । १०.३.४० |
| तां ७.७.५ | बार्हतः प्रगाथः । ९.२.२५/२ |
| साम ६८० ऋ ७.३२.२२ | अभि त्वा शूर नोनुमोऽदुग्धा इव धेनवः । ईशानमस्य जगतः स्वर्दृशमीशानमिन्द्र तस्थुषः ॥ |
| साम ६८१ ऋ ७.३२.२३ | न त्वा वाँ अन्यो दिव्यो न पार्थिवो न जातो न जनिष्यते । अश्वायन्तो मघवन्निन्द्र वाजिनो गव्यन्तस्त्वा हवामहे ॥ ९.२.२५/२ बार्हतः प्रगाथः–द्वितीयः । |
| साम ६७५ ऋ ९.१०७.४ | पुनानः सोम धारयापो वसानो अर्षसि । आ रत्नधा योनिमृतस्य सीदस्युत्सो देवो हिरण्ययः ॥ |

साम ६७६ ऋ ९.१०७.५ — दुहान ऊधर् दिव्यं मधु प्रियं प्रत्नं सधस्थमासदत् ।
आपृच्छ्यं धरुणं वाज्यर्षसि नृभिर् धौतो विचक्षणः ॥ ९.२.२५/१

तां १३.४.१४,१५ — बार्हद्गिरं ब्राह्मणस्य ब्रह्मसाम कुर्यात्, पार्थुरश्मं राजन्यस्य, रायोवाजीयं वैश्यस्य । ४.३.४ बार्हद्गिरं ब्रह्मसाम–

साम १००२; ऋ १.८१.१ — इन्द्रो मदाय वावृधे शवसे वृत्रहा नृभिः ।
तमिन्महत्स्वाजिषूतिमर्भे हवामहे स वाजेषु प्र नोऽविषत् ॥

साम १००३; ऋ १.८१.२ — असि हि वीर सेन्योऽसि भूरि बरादिदः ।
असि दभ्रस्य चिद्वृधो यजमानाय शिक्षसि सुन्वते भूरि ते वसु ॥

साम १००४ ऋ १.८१.३ — यदुदीरत आजयो धृष्णवे धीयते धनम् ।
युङ्क्ष्वा मदच्युता हरी कश्हनः कश्वसौ दधोऽस्माँ इन्द्र वसौ दधः ॥ ४.३.४

काशा २२.५.१३ सत्या १७.३.८ — बार्हस्पत्यं ग्रहं गृह्णाति । १०.४.३ अतिग्राह्यवद् ग्रहं गृह्णाति बृहस्पतेः बार्हस्पत्यम् अतिग्राह्यं गृह्णाति ।

तैब्रा १.३.६.७-९ — बार्हस्पत्यं चरुं नैवारं सप्तदशशरावं निर्वपति । ९.२.४०

तैसं १.८.९ मैसं २.६.४ — बार्हस्पत्यश्चरुर् ब्रह्मणो गृहे । ११.२.१३,१४

मैसं ३.६.८ — बार्हस्पत्याम् अनूच्य वाग्यन्तव्या । १२.४.१

तैसं ५.६.२ — बार्हस्पत्यो भवति (नैवारश्चरुः) । २.३.१८ तं.

काशिका ७.१.७७ वा — बाहू ते इन्द्र रोमशौ अक्षी ते इन्द्र पिङ्गले । ९.१.९ डुलेरिव (कपेरिव–काशिका)

तैसं ४.१.११; १.३.१४ — बुधन्वान् आग्नेयः – अग्निं स्तोमेन बोधय समिधानो अमर्त्यम् । हव्या देवेषु नो दधत् ॥ पवमानसोम्यः – अग्न आयूंषि पवसे आसुवोर् जमिषञ्च नः । आरे बाधस्व दुच्छुनाम् ॥ इति याज्यानुवाक्ये अग्नये पवमानाय पावकाय शुचये अस्या इष्टेः आज्यभागयोः । १०.४.३१

साम १६९ तैब्रा १.२.२.४ — बृहच्चित्रादिकां सस्तुतिं कुर्वन् पृष्ठं बृहत्पृष्ठं साधयति – कया नश्चित्र आ भुवदूती सदावृधः सखा । कया शचिष्ठया वृता ॥ इति गीयमाने समुद्रं मनसा ध्यायेत् । ९.२.४८ (तां ७.७.९ रथन्तरे गीयमाने । जैब्रा १.३२८ रथन्तरेण स्तोष्यमाणः पृथिवीम् अभिमृशेत । )

साम १६९ ऋ ४.३१.१ — बृहतो योनिं अनुशंसति । ७.२.१७ कया नश्चित्र...

साम २३४ ऋ ९.४६.१ — बृहतो योनिर् बृहत्येव – त्वामिद्धि हवामहे सातौ वाजस्य कारवः । त्वां वृत्रेष्विन्द्र सत्पतिं नरस्त्वां काष्ठा स्वर्वतः ॥ ९.२.२५/३

तैब्रा १.२.२.४ साम १६९ — बृहत्पृष्ठं भवति । ९.२.८,२०,२५,४६; १०.६.५; १०.७.५१

तैब्रा १.२.२.४ — बृहत्पृष्ठं भवति रथन्तरं पृष्ठं भवति । ९.२.४६ उभयोः पृथक् पृथगेव धर्माः कार्याः । सूत्रम्– ९.२.४७–निर्देशाद् वा व्यवतिष्ठेरन् ।

तै सं ७.५.४ — बृहत्पृष्ठानि त्रयस्त्रिंशत् स्तोमाः । १०.५.८५

तां ७.७.१०,१२ — बृहत्युच्चैर् गेयं बलवद् गेयम् । ९.२.४७,४८

साम ८०९-१० — बृहद् उत्तरयोर् गायति । ९.२.२३; १०.४.४७ उत्तरार्चिके पठिते द्वे ऋचौ (तृचे प्रगाथे) गायति ।
बृहदुत्तरयोर् न पश्यामि इति वसिष्ठस्तपस्तेपे । ७.२.१०

तैब्रा १.१.८.२ बृहद् गायति । ९.२.३

तां १२.३.५ साम ८५६-५८ बृहद् रथन्तरं पृष्ठं भवति । ६.६.९,११

बृ साम ८०९,८१० बृहद् रथन्तरयोर् ज्योतिष्टोमे प्रगाथद्वयम् । ९.२.२८/४ (पञ्चसु मास्सु)

रसाम ६८०,६८१ बृसाम, ८०९,८१० रसाम ६८०,६८१ आसाम् ऋचां प्रगाथः क्रियते ।

बृहद्रथन्तरसामा । १०.६.४ यदा द्वन्द्वगर्भो बहुव्रीहिः बृहत्साम च रथन्तरसाम च बृहद्रथन्तरसाम्नी ते यस्य तदा इतरेतरयोगे द्वन्द्वत्वाद् उभे अहनि अहनि, यदा तु अनेकपदो बहुव्रीहिः बृहत्साम यस्य रथन्तरसाम यस्य तदा विभक्ते (पृष्ठ्यः षडहो बृहद्रथन्तरसामा)।

तां १९.८.३ बृहद्रथन्तरे उभे कुर्यात् एकाहे अपचितौ । ९.२.४९; १०.६.४ बृहति बृहद्धर्मान् रथन्तरे च रथधर्मान् पृथक् पृथक् कुर्यात् । सूत्रम् –९.६.५० स्वार्थत्वाद् वा (धर्माणां) व्यवस्था स्यात् प्रकृतिवत् ।

तां ६.७.१ बृहस्पतिर् वै देवानाम् उदगायत् । १.३.१३ तं.

तैसं १.१.२ बृहस्पतेर् मूर्ध्ना हरामि । १२.१.४६ बर्हिषो हरणमन्त्रः ।

तैब्रा १.३.६.७,९ बृहस्पतेर् वा एतद् अन्नं यन् नीवाराः । २.३.१८

कौब्रा १०.१ बैल्वं च अन्नाद्यकामाय यूपं कुर्यात् । २.३.१८

तैसं २.१.८ बैल्वो (यूपो) ब्रह्मवर्चसकामेन कर्तव्यः । ३.६.१० बैल्वो यूपो भवति ब्रह्मवर्चसम् अवरुन्धे ।

तैब्रा ३.८.१९.१ बैल्वो वा खादिरो वा पालाशो वा अन्येषां यज्ञक्रतूनां यूपा भवन्ति । १२.३.१४

आपध १.९.२६.८ ब्रह्मचर्यावकीर्णी नैर्ऋतं गर्दभम् आलभेत । ६.८.२२

आपध २.८.१८.१ ब्रह्मचारी मधुमांसं च वर्जयेत् । १०.६.३२

तैसं ६.६.१ ब्रह्मणे ददाति । ७.३.३६-३७ न्यामा. ततो ब्रह्मणे (ददाति) ।

तां १८.२.१०,१२ ब्रह्मणे चमसो देयः, यः पशून् दद्यात् स ब्रह्मणे सगोत्राय । १०.३.७०

तैब्रा ३.५.८.२; १३.२ ब्रह्मदेवकृतम् उपहूतम् ९.१.४० तं.

षड् २.५.४ ब्रह्मन् उपह्वयस्व । ३.७.३८ तं.

बौधा ६.२३ 'ब्रह्मवनिं त्वा क्षत्रवनिं त्वा इति प्रदक्षिणं पांसुभिः पर्यूह्य ब्रह्म दृंह क्षत्रं दृंह'

तैसं १.३.१ इति मैत्रावरुणो दण्डेन समभूमिपरिदृंहणं कृत्वा 'उत्तंभय पृथिवीम्' इति अद्भिः परिसिञ्चति, खलेवाली-यूपे यत् सार्थकम् अविरुद्धं भवेत् तत् । १०.२.७३ न्यामा.

तैसं २.३.२ ब्रह्मवर्चसकामः सौर्येण चरुणा यजेत । २.३.११-१५ न्यामा. ब्रह्मवर्चसकामः सौर्यं चरुं निर्वपेत् । ४.३.१७

तां २३.७.१ ब्रह्मवर्चस्विनो अन्नादा भवन्ति य एता (विंशतिं) रात्रीर् उपयन्ति । ४.३.१७

तैब्रा १.३.४.१,२ ब्रह्मवादिनो वदन्ति–नाग्निष्टोमो नोक्थ्यो न षोडशी नातिरात्रः, अथ कस्माद् वाजपेये सर्वे यज्ञक्रतवो अवरुध्यन्ते इति, पशुभिर् इति ब्रूयात्, यद् आग्नेयं पशुम् आलभते अग्निष्टोमम् एव तेन अवरुन्धे, ऐन्द्राग्नेन उक्थ्यम्, ऐन्द्रेण षोडशिनं, सारस्वत्या अतिरात्रं, मारुत्या बृहत्स्तोत्रम्, एतावन्तो वै यज्ञक्रतवः तान् पशुभिर् एव अवरुन्धे । १०.४.६

मैसं २.३.५ ब्रह्म वै ब्रह्मा । ब्रह्मसामकाले प्राजापत्यानां पशूनाम् आलम्भः । ४.१.३३

| | |
|---|---|
| | ब्रह्मसाम गवामयने-अभीवर्तो ब्रह्मसाम भवति । ९.२.२५/४ |
| तां ४.३.१<br>साम २३६, ६८५<br>ऋ ८.८८.१ | तं वो दस्ममृतीषहं वसोर् मन्दानमन्धसः ‖ अभि वत्सं न स्वसरेषु धेनव इन्द्रं गीर्भिर् नवामहे ॥ |
| तां १३.४.१८<br>साम १००२-४;१००५-७ | ब्रह्मसाम बार्हद्गिरं ब्राह्मणानां, पार्थुरश्मं राजन्यानां, रायोवाजीयं वैश्यानाम्। ६.६.२२ |
| आप १८.६.७ | ब्रह्मसाम्नि आलभते । ४.१.३३;११.३.५१ |
| तैसं ५.३.१२<br>शत १३.३.१.१ | ब्रह्महा अश्वमेधेन यजेत । ३.४.२८ तं. तरति ब्रह्महत्यां योऽश्वमेधेन यजेत। |
| तैब्रा ३.७.६.१ | ब्रह्माणम् एव ते समामनन्ति । ३.७.३८ तं. 'ब्रह्माणं त्वा वृणीमहे' इति ब्रह्माणं समामनन्ति । |
| तैब्रा ३.७.६.१ | ब्रह्माणं वृणीते । ३.७.२४ ब्रह्माणं त्वा वृणीमहे । |
| कात्या २.१.१८ | ब्रह्मा म्रियते प्रणीताप्रणयनकाले । १.२.१.३६,३९ अग्निहोत्रं हुत्वा ब्रह्माणं वृणीते । |
| तैसं ४.३.१० | ब्रह्मासृज्यत । १.४.२७ न्यामा. |
| तैब्रा १.१.२.६<br>तां १.३.७२,१२ | ब्राह्मण आत्मार्थम् आदधीत । २.३.४ वसन्ते ब्राह्मण आदधीत । आदधीतस्य आत्मनेपदत्वात् कर्त्रभिप्राये कर्मफलं, तस्माद् आत्मार्थम् । |
| तैब्रा १.१.२.६ | ब्राह्मण आदधानो वसन्ते, राजन्यो ग्रीष्मे, वैश्यः शरदि । ६.१.२७ |
| पाम १.२.६४ | ब्राह्मणजातीयो न हन्तव्यः । १०.३.४० |
| तैसं २.६.११ | ब्राह्मणं न हन्यात् । १.३.७ तं. |
| आपध १.१.१.१९ | ब्राह्मणम् उपनयीत । ६.१.२४ तं. |
| तैब्रा १.८.६.२ | ब्राह्मणम् परिक्रीणीयात् उच्छेषणस्य यातारम् । ३.५.१५ |
| मैसं ४.७.६ | ब्राह्मणस्य च अतिरात्रे (षोडशिनं गृह्णीयात्)। १०.५.३९,४५ |
| काठकसं १२.११ | ब्राह्मणस्य मूर्द्धनि आसादयति । १०.३.१८ ब्राह्मणस्य मूर्द्धन् सादयेत् । |
| काठकसं १२.१२ | ब्राह्मणः सुरां न पिबेत् । १.३.७ तं. |
| मैसं ३.९.८ | ब्राह्मणाच्छंसिनं वृणीते । ३.७.२४ |
| ऐब्रा ६.१० | ब्राह्मणाच्छंसी इन्द्रं 'इन्द्र त्वा वृषभं वयं सुते सोमे हवामहे' इति यजति । |
| तैब्रा ३.७.५.९<br>मैसं १.४.१२ | ब्राह्मणानाम् एव इदं हविः सौम्यानां सोमपीथानां, निर्भक्तो ब्राह्मणः न इह अब्राह्मणस्य अस्ति । १२.४.३९ |
| ऋ ६.७५.११ | ब्राह्मणासः पितरः सोम्यासः । १.३.३५. न्यामा. ( आत् जसेः असुक् पा ७.१.५० ) |
| सत्या १७.३.२३ | ब्राह्मणाः संस्थापयत मे यज्ञम् । १०.२.५७ ब्राह्मणाः समापयतम् एतं यज्ञम् । |
| पाम १.१.१.२० | ब्राह्मणेन निष्कारणो धर्मः षडङ्गो वेदोऽध्येयः । १.३.२४ तं. |
| तैब्रा १.१.२.६ | ब्राह्मणोऽग्निं आदधीत । ६.१.३७ |
| तैब्रा १.१.२.६ | ब्राह्मणोऽग्नीन् आदधीत । २.३.४;६.६.३१ अग्निम् । |
| पाम ६.१.८४ | ब्राह्मणो न हन्तव्यः । १.३.७; तं. १.३.३४ तं. |
| निरुक्त ९.६ | ब्राह्मणो व्रवणात् । १.३.२४ तं. संवत्सरं शिशयाना ब्राह्मणा व्रतचारिणो ब्रुवाणात् । |
| तैब्रा १.१.२.६ | ब्राह्मणो वसन्तेऽग्निम् आदधीत । २.६.११;६.१.३७;६.२.८ |

मैसं २.१.४ ब्राह्मणो वसन्ते ब्रह्मवर्चसकामः अग्नीषोमीयम् एकादशकपालं निर्वपेत् श्यामाकम् । ५.४.२५

तैसं ३.२.५ भक्षमन्त्रः– भक्षेहि माऽऽविश दीर्घायुत्वाय शन्तनुत्वाय रायस्पोषाय वर्चसे सुप्रजास्त्वायेहि वसो पुरोवसो प्रियो मे हृदोऽसि । अश्विनोस्त्वा बाहुभ्यां सध्यासम् । नृचक्षसं त्वा देव सोम सुचक्षा अवख्येषम् । मन्द्राभिभूतिः केतुर् यज्ञानां वाग्जुषाणा सोमस्य तृप्यतु मन्द्रा स्वर्वाच्यदितिर् अनाहतशीर्ष्णी वाग्जुषाणा सोमस्य तृप्यत्वेहि विश्वचर्षणे शंभूर् मयोभूः स्वस्ति मा हरिवर्ण प्र चर क्रत्वे दक्षाय रायस्पोषाय सुवीरतायै मा मा राजन् विबीभिषो मा मे हार्दि त्विषा वधीः । वृषणे शुष्मायाऽऽयुषे वर्चसे । वसुमद् गणस्य सोम देव ते मतिविदः प्रातःसवनस्य गायत्रछन्दसः। इन्द्रपीतस्य नराशँसपीतस्य पितृपीतस्य मधुमत उपहूतस्योपहूतो भक्षयामि रुद्रगणस्य सोम देव ते मतिविदो माध्यन्दिनस्य सवनस्य त्रिष्टुप् छन्दस इन्द्रपीतस्य नराशंसपीतस्य पितृपीतस्य मधुमत उपहूतस्योपहूतो भक्षयामि । आदित्यवद् गणस्य सोम देव ते मतिविदस्तृतीयस्य सवनस्य जगतीछन्दसः इन्द्रपीतस्य नराशंसपीतस्य पितृपीतस्य मधुमत उपहूतस्योपहूतो भक्षयामि । आ प्यायस्व समेतु ते विश्वतः सोम वृष्णियम् । भवा वाजस्य सङ्गथे ॥ हिन्व मे गात्रा हरिवो गणान् मे मा तीतृपः । शिवो मे सप्तर्षीन् उप तिष्ठस्व मा मेऽवाङ् नाभिमति गाः ॥

भक्षयन्तो म्रियेरन् ( भक्षाणां बहुत्वात् )। ६.४.४ सर्वं भक्षयन्तो न समापयेयुः (अश्वमेधे)।

भक्षिताप्यायितान् चमसान् दक्षिणस्यानसोऽवलम्बे सादयन्ति । ३.५.२०

तैब्रा २.८.९.८ भगं मे भक्षीत्याह। २.१.३३

सत्या १.६.२० भगो वां विभजतु, अर्यमा वां विभजतु । २.१.४६

तैसं ३.१.१ भद्रादभिश्रेयः प्रेहि बृहस्पतिः पुर एता तेऽस्तु । ११.४.५१ दीक्षितस्य प्रस्थितस्य प्रयाणमन्त्रः ।

तां १९.८.४ भर्गयशसी भवतः। १०.४.१६

भर्गसाम ६९७ ऋ ९.१०१.१ पुरोजिती वो अन्धसः सुताय मादयित्नवे। अप श्वानँ श्नथिष्टन सखायो दीर्घजिह्व्यम् ॥

साम ६९८ ऋ ९.१०१.२ यो धारया पावकया परि प्रस्यन्दते सुतः । इन्दुरश्वो न कृत्व्यः ॥

साम ६९९ ऋ ९.१०१.३ तं दुरोषमभी नरः सोमं विश्वाच्या धिया । यज्ञाय सन्त्वद्रयः ॥

यशःसाम १४११ ऋ ८.९०.५ त्वमिन्द्र यशा अस्यृजीषी शवसस्पतिः । त्वं वृत्राणि हंस्यप्रतीन्येक इत्पुर्वनुत्तश्चर्षणी धृतिः ॥

साम १४१२ ऋ ८.९०.६ तमु त्वा नूनमसुर प्रचेतसं राधो भागमिवेमहे । महीवकृत्तिः शरणात्त इन्द्र प्र ते सुम्ना नो अश्नवन् ॥ १०.४.१६

पाम २.१.१. वा २.१.५१ भवन्ति वै प्रधानस्य सापेक्षस्यापि समासः । ३.४.१३ तं. २.१.१७

पाम १.१.१.३ भवन्ति हि अनर्थकानि ( अर्थरहितानि ) वचनानि यथा दशदाडिमानि, षडपूपाः । ३.३.१०

| | |
|---|---|
| तैसं २.६.१ | भस्मनाऽभिवासयति । ५.१.२९ न्यामा. |
| मैसं ३.२.२ | भस्मना इष्टकाः संयुज्यात् । ३.६.३५ |
| भर ५.१७.५ | भाग्ययशःश्रीकामानां पुनरादधीत । १०.३.३ योऽग्नीन् आधाय भाग्यज्यानिं पुत्रज्यानिं जीयेत स पुनरादधीत । |
| मनु ८.४१६ | भार्या दासश्च पुत्रश्च निर्धनाः सर्व एव ते । यत् ते समधिगच्छन्ति यस्य ते तस्य तद् धनम् । ६.१.१२ |
| आप ९.१३.८,९ | भिन्नं कपालम् अप्सु प्रहरन्ति । ६.४.१६ अथैनद् (भिन्नं कपालं) अपोऽभ्यवहरेत् । |
| शत १२.४.१.६ | भिन्ने जुहोति, स्कन्ने जुहोति । ६.२.१९;६.३.७;६.४.१०;६.५.४५,४६,४७; ८.४.१०,१९;११.४.३५ भिद्येत चेत् अवपद्येत स्कन्नं वा प्रायश्चित्तेन अभिमृश्य व्याहृतिभिश्च, अद्‌भिर् उपनिनीय कपालानि भस्मोद्वापे वा कुर्यात् । |
| ऋ १०.११६.७ | भुङ्क्ते देवता – इदं हविर् मघवन् तुभ्यं रातं, प्रति सम्राळहृणानो गृभाय । तुभ्यं सुतो मघवन् तुभ्यं पक्वोऽद्धीन्द्र पिब च प्रस्थितस्य ॥ |
| ऋ १.९५.१० | विश्वा सनानि जठरेषु धत्तेऽन्तर्नवासु चरति प्रसूषु ॥ ( धन्वन्स्रोतः कृणुते गातुमूर्मिं, शुक्रैरूर्मिभिरभि नक्षति क्षाम् + ) |
| ऋ ८.७७.४ | एकया प्रतिधापिबत्, साकं सरांसि त्रिंशतम् । इन्द्रः सोमस्य काणुका ॥ ९.१.६ देवतायै प्रत्तं हविर् नीरसं भवति । |
| ऋ १०.१२१.१ | भूतस्य जातः पतिरेक आसीत् । १०.३.१३ ( हिरण्यगर्भः समवर्तताग्रे + ) |
| तैसं ४.३.१० | भूतानि असृज्यन्त । १.४.२७ न्यामा. 'सृष्टीरुपदधाति 'तत्र मन्त्रः । |
| तैसं २.१.१ | भूतिकाम आलभेत ( वायव्यं पशुम् ) । १.२.७ |
| तैसं ७.३.७ | भूतिकामा उपेयुः । ८.२.३१ कुण्डपायिनाम् अयने पञ्चदशरात्रे य एवं विद्वांसः पञ्चदशरात्रम् आसते भ्रातृव्यान् पराभाव्य विजित्य श्रियं गच्छन्ति, पाप्मानं निर्दहन्ते, ओजो बलम् इन्द्रियम् आत्मन् धत्ते । |
| तैसं २.१.१ | भूतिकामो वायव्येन श्वेतेन पशुना यजेत । २.३.१२-१५ न्यामा. वायव्यं श्वेतम् आलभेत भूतिकामः । |
| तैसं ६.२.८ | 'भूतेभ्यस्त्वा' इति अपूर्वां स्रुचं गृह्णाति । ८.४.७ 'भूतेभ्यस्त्वा' इति स्रुचम् उद्गृह्णाति । |
| तैसं ५.६.३ | भूतेष्टका उपदधाति । ३.६.३५;५.३.१५,१७,२० |
| लाट्यायन १.७.९ | भूमिगतं स्वाहाकरोति । ८.४.१५ अन्यतरां वा स्वाहाकारां द्वितीयां यथा भूमिम् आज्यं प्राप्स्यति । |
| ऐब्रा ५.३३ | 'भूःस्वाहा' इति गार्हपत्ये जुहुयात्, 'भुवः स्वाहा' इति दक्षिणाग्नौ, 'स्वः स्वाहा' इति आहवनीये जुहुयात्, 'भूः भुवः स्वः स्वाहा' इति आहवनीये जुहुयात् ॥ |
| तैसं १.१.७ | भृगूणाम् अङ्गिरसां धर्मस्य तपसा तप्यध्वम् । १०.१.५२ |
| तैब्रा ३.६.१५.१<br>भर १३.८.१ | भृज्जन् इन्द्राय हरिवते धानाः पूषण्वते करम्भं, सरस्वते परिवापम्, अयं यजमान इन्द्राय हरिवते धानाभिः पूषण्वते करम्भेण सरस्वते परिवापेण, सूपस्था अद्य देवा वनस्पतिः । ११.३.४५ |
| तां १६.१.११ | भृतास्ते ऋत्विजः सोमार्थेन परिक्रयेण तस्य द्वादशशतं दक्षिणेति वचनेन । १२.१.३२ |

Digitized by Madhuban Trust



| | |
|---|---|
| आपध १.११.३०.१ | भोजने प्राङ्मुखता एव । ५.२.९ प्राङ्मुखो अन्नानि भुञ्जीत । |
| मनु ९.१८२ | भ्रातृणाम् एकजातानाम् एकश्चेत् पुत्रवान् भवेत् । सर्वे तेनैव पुत्रेण पुत्रिणो मनुरब्रवीत् । १.३.७ तं. |
| मैसं ३.१.९<br>काठकसं १९.१० | भ्राष्ट्राद् अन्नकामस्य आहृत्य अन्वादध्यात् । १२.४.१७,१९,२४ [ काठकसं- ( भृज्जनात् ) भ्राष्ट्राद् आहरेत् । ] |
| पिङ्गलसूत्र १.२ | मकारेण अपिङ्गलस्य न सर्वगुरुत्रिकः प्रतीयेत । १.१.५ धी श्री स्त्री मः- त्रिगुरुं विद्धि मकारम् । |
| ऋ ७.१०३ | मण्डूकसूक्तम् २.१.२३ |
| तैसं ५.४.४ | मण्डूकसूक्तस्य अग्नौ अर्थवत्ता । २.१.२३ |
| तैसं ५.४.४ | मण्डूकेन अग्निं विकर्षति । ९.१.२६ |
| पा. ५.२.५९ | मतौ छः सूक्तसाम्नोः । ९.१.५४-५८ न्यामा. |
| चरक २६.८१ | मत्स्यान् न पयसा समश्नीयात् । १०.६.६६ |
| पा. ४.३.८५ | मथुरां अभिप्रस्थितो माथुरः । तद् गच्छति पथिदूतयोः अण् - माथुरः । १.३.२१ तं. प्राच्यैः दाक्षिणात्यैः उदीच्यैः । द्यु प्राच् अपाच् उदच् प्रत्यच् एतेभ्यो यत् ( पा ४.२.१०१ ) । उद ईत् ( पा ६.४.१३९ ) । प्राच्य उदीच्य प्रतीच्य अपाच्य दक्षिणा पश्चात् पुरसस्त्यक् । तद्धिते किता वृद्धिः दाक्षिणात्यः । |
| पा ४.३.४ | मथुराया निर्गतः । तत आगतः-अण्-माथुरः । १.३.२१ तं |
| पा. ४.३.८९ | मथुरायां वसन् । सोऽस्य निवासः अण् – माथुरः । १.३.२१ |
| गौतमध २ | मद्यं नित्यं ब्राह्मणो वर्जयेत् । १.३.७ तं. |
| तां १३.१२.१५ | मधुघृताभ्यां उपासीत । ९.२.४० संस्थिते षडहे पृष्ठ्ये मधु आशयेत् घृतं वा । |
| आपध २.८.१८.१ | मधुमांसं च वर्जयेत् (ब्रह्मचारी) । १०.६.३२ |
| आपध २.११.२९.१ | मध्यगं हि इदं दम्पत्योर् धनम् । ६.१.१७ कुटुम्बिनौ धनस्य ईशाते । |
| आप १२.२३.४ | मध्यतः कारिणां चमसाध्वर्यवः ते च ऋत्विग्भिर् वरितव्याः । ३.७.२५ मध्यकारिणः- होता ब्रह्मा उद्गाता यजमानश्च चत्वारः । |
| भर १०.२.१<br>आप १२.२३.४ | मध्यतः कारिणां चमसाध्वर्यवो वषट्कृतेऽनुवषट्कृते जुहुत, होत्रकाणां चमसाध्वर्यवः सकृत् हुत्वा शुक्रस्य अभ्युन्नीय उपावर्तध्वम् । ३.२.३० होत्रकाणाम् चमसाध्वर्यवः- मैत्रावरुणः, ब्राह्मणाच्छंसी, पोता, नेष्टा, अच्छावाकः, आग्नीध्रः षड् होतारः । |
| तैसं ६.२.५ | मध्यन्दिने अपररात्रे व्रतं व्रतयति । ६.८.२९ मध्यरात्रे |
| तैसं २.५.५ | मध्यमानां तण्डुलानाम् अग्नये दात्रे पुरोडाशः, स्थविष्ठानां इन्द्राय प्रदात्रे दधनि चरुः, क्षोदिष्ठानां विष्णवे शिपिविष्टाय शृते चरुः । ६.५.१० |
| जैब्रा २.१४५ | मध्यमापस्य तिष्ठति । १.३.२४ तं. मध्ये आपस्येति । |
| मैसं ४.७.६ | मध्यमेऽहन् त्रिरात्रस्य गृह्यते ( षोडशी ) । १०.५.३४,३९ |
| आप २.१८.१० | मध्यात् पूर्वार्धाद् अवदेयम् । ६.४.२ मध्यात् पुरोडाशस्य अवदाय पूर्वार्धाद् अवद्यति । |
| आप २.१८.१० | मध्याद् अवद्यति, पूर्वार्धाद् अवद्यति । ५.२.४ आग्नेयस्य पुरोडाशस्य मध्याद् अङ्गुष्ठमात्रं तिरीचीनम् अवद्यति पूर्वार्धाद् द्वितीयं अनूचीनम् । |

| | |
|---|---|
| तां १३.१२.१५ | मध्वाशयेद् घृतं वा । १०.४.१ मधु वा आशयेद् घृतं वा । |
| तैसं २.५.११;६.३.७ ऐब्रा ५.२३ | मनसा आघारम् आघारयति । मनसा प्रस्तौति, मनसा उद्गायति, मनसा प्रतिहरति । ३.४.८ |
| वसिष्ठस्मृ २१.७ | मनसा भर्तुर् अतिचारे यावकं क्षीरोदनं वा भुञ्जाना अधः शयीत । ऊर्ध्वं त्रिरात्राद् अप्सु निमग्नायाः सावित्र्या अष्टशतेन शिरोभिर् जुहुयात्, पूता भवति ॥ ६.१.१७-२१ न्यामा. |
| तैसं २.२.१० | मनुर् वै यत् किंचिद् अवदत् तद् भेषजं भेषतायै । १.३.७ तं. |
| शांब्रा १०.६ | मनोताम् अन्वाह । १०.४.४२ तं. अथ मनोताम् अन्वाह । |
| तां २३.१६.६ | मनोर् ऋचस्ताः सामिधेनीषु धाय्या इति उच्यन्ते । ३.२.१९;१०.७.७३ मनोर् ऋचः सामिधेन्यो भवन्ति । |
| तां ४.४.९ | मनो मानसम् । १०.६.३४ वाग्वै द्वादशाहो मनोमानसम् । |
| शत १४.५.४.५ | मन्तव्यो बोद्धव्यः । १.३.२७ तं. द्रष्टव्यः श्रोतव्यो मन्तव्यो निदिध्यासितव्यः । |
| पा १.३.२२,२५ | मन्त्रकरणे उपतिष्ठतेर् आत्मनेपदं भवति । ७.३.३६ |
| | मन्त्रकार्यान्तर् हि संहत्य कारित्वात् एकविनाशे समस्तावृत्तिः । २.२.२१ तं. |
| सत्याषाढ १.१.६ | मन्त्रब्राह्मणयोर् वेद इति नामधेयम् । १.३.११ तं. |
| | मन्त्राश्च ब्राह्मणं च वेदः । २.१.३३ सूत्रम्—शेषे ब्राह्मणशब्दः । अथ किं लक्षणं ब्राह्मणं, मन्त्राश्च ब्राह्मणं च वेदः । २.१.३३ |
| वाराह १.१.१.१६ | मन्त्रान्तेन कर्म संनिपातयेत् । ९.४.९ |
| निरुक्त ७.१.१ | मन्त्रेण तत्र देवता स्मर्यते । ४.१.२० यत्कामः ऋषिर् यस्यां देवतायां आर्थपत्यम् इच्छन् स्तुतिं प्रयुङ्क्ते तद्देवतः स मन्त्रः । |
| मैसं ४.१.९ | मन्त्रेण पुरोडाशम् अध्वर्युः 'प्रथस्व' इति ब्रूते । १.२.४३ 'उरु प्रथा उरु प्रथस्व' इति मन्त्रेण अध्वर्युः पुरोडाशं 'प्रथस्व' इति ब्रूते । |
| पा. शिक्षा ५१ | मन्त्रो हीनो स्वरतो वर्णतो वा, मिथ्याप्रयुक्तो न तमर्थमाह । स वाग्वज्रो यजमानं हिनस्ति, यथेन्द्रशत्रुः स्वरतोऽपराधात् । ९.४.२१ |
| तैसं ७.२.७ | मन्थ्यग्रान् अभिचर्यमाणस्य गृह्णाति । १०.५.६७,७०,७३,७५ |
| ऐब्रा १४.४४ आश्व ५.१.३ | मन्द्रं प्रातःसवने । ३.३.९ तं. मन्द्रया वाचा प्रातःसवने शंसेत्, बलीयस्या माध्यन्दिने, बलिष्ठतमया तृतीये सवने । |
| सत्या २१.२.२६ | मन्द्रया आज्यभागान्तं, परं मध्यमया, उत्तमया अनुयाजादि । ३.३.८ तं. |
| तैसं ३.२.५ | 'मन्द्राभिभूतिः केतुर् यज्ञानां वाग्जुषाणा सोमस्य तृप्यतु' इति मन्त्रो जिह्वायास्तृप्तिं प्रकाशयति । ३.२.२४,२६ |
| तैसं ३.२.५ | 'मन्द्राभिभूति...उपहूतस्योपहूतो भक्षयामि' इति मन्त्रो भक्षं प्रकाशयति । ३.२.२७ |
| गीता ३.२३; ४.११ | मम वर्त्मानुवर्तन्ते मनुष्याः पार्थ सर्वशः । १.३.७ तं. |
| मैसं १.४.५ काठ ३१.१५ | 'ममाग्ने वर्चो विहवेषु अस्तु' इति पूर्वम् अग्निं गृह्णाति देवता एव तत् पूर्वेद्युर् गृहीताः श्वोभूते यजति । ३.८.२५;१२.१.२५;१२.२.२९ |
| आप २२.७.२१ | मरणकामो हि एतेन (सर्वस्वारेणक्रतुना) यजेत्, यः कामयेत अनामयं स्वर्गलोकं इयाम् । १०.२.५६,५७ |
| तैसं १.८.४ | मरुद्भ्यः सांतपनेभ्यो मध्यन्दिने चरुं निर्वपति । ५.१.३० |

| | |
|---|---|
| शत २.५.३.४,१२,१३ तैसं १.८.४ | मरुद्भ्यो गृहमेधिभ्यः सर्वासां दुग्धे सायं ओदनम् । आज्यभागौ यजति यज्ञतायै । १०.७.२४ |
| तैसं २.५.१ | मलवद्वाससा न संवदेत, न सह आसीत, न अस्या अन्नम् अद्यात्, अभ्यञ्जनं वाव स्त्रिया अन्नम् । ३.४.१८ |
| महाभारत १.१.२७४ | महत्त्वात् भारतत्वाच्च महाभारतमुच्यते । निरुक्तम् अस्य यो वेद सर्वपापैः प्रमुच्यते । १.३.११ तं. |
| तैसं १.४.२० | महाँ इन्द्रो य ओजसा पर्जन्यो वृष्टिमाँ इव । स्तोमैर् वत्सस्य वावृधे ॥ |
| तैसं १.४.२१ | २.१.१९ ( माहेन्द्रयाज्यानुवाक्या ) महाँ इन्द्रो नृवदा चर्षणिप्रा उत द्विबर्हा अमिनः सहोभिः । अस्मद्रियग्वावृधे वीर्यायोरुः पृथुः सुकृतः कर्तृभिर् भूत ॥ |
| तैसं १.४.४१ | महाँ इन्द्रो वज्रबाहुः षोडशी शर्म यच्छतु । स्वस्ति नो मघवा करोतु हन्तु पाप्मानं योऽस्मान् द्वेष्टि ॥ २.१.१९ |
| तैसं ६.५.५ ऐब्रा २.२१ | महान् वा अयम् अभूद् यो वृत्रम् अवधीद् इति तत् महेन्द्रस्य महेन्द्रत्वम् । २.१.१६ |
| तैब्रा १.६.९.१ | महापितृयज्ञेन न होतारं वृणीते न आर्षेयम् । १०.८.१ |
| कात्या २१.१.१० | महाभूमिर् न देया ( विश्वजिति सर्वस्वदाने ) । १.१.१ |
| तां ७.६.१५,१६ | महावृक्षौ वै बृहद्रथन्तरे निधनेन समाप्येते, यद् वै महावृक्षौ समृच्छयेते न हि अत्र विभग्नम् इव । १०.६.२६ |
| तैब्रा ३.९.१०.१ | महिमानौ नाम ग्रहौ गृह्णाति । १०.४.३ स एतौ अश्वमेधे महिमानौ गृह्णीत । राजतेन पूर्वं सौवर्णेन उत्तरम् ( आप २०.१३.२ ) । |
| तैब्रा ३.५.१०.३ | महेन्द्र इदं हविर् अजुषत । ३.२.१५-१८ न्यामा. |
| सत्या १.४.९ | महेन्द्रयाजी – और्वो, गौतमो, भरद्वाजः । शुश्रुवान्, ग्रामणी, राजन्यः । ९.४.२९-३० |
| तैसं १.८.१९ | मह्लादयः पशवः । ४.४.१ आदित्यां मह्लां गर्भिणीम् आलभते । मारुतीं पृश्निं पष्ठौहीम् अश्विभ्यः । |
| भर १३.१८.१० | माणवको अवहार्न्ति अधीते । १.२.३७ |
| तैसं १.१.३ | मातरिश्वनो घर्मोऽसि । ३.३.१२ न्यामा. |
| पाम १.२.६४ | माता च परमं दैवतं समा सर्वेषु पुत्रेषु । १०.१.१५ |
| महाभारत १.९५.३० | माता भस्त्रा पितुः पुत्रः । १.२.१३ तं. |
| पाम १.२.६४ | माता समः क्षिप्रश्च । १०.१.१५ धान्यमापकः । |
| याज्ञस्मृ १.५३ मिताक्षराटीका | मातुलस्य सुताम् ऊढ्वा, मातृगोत्रां तथैव च । समानप्रवरां चैव त्यक्त्वा चान्द्रायणं चरेत् । १.३.८-९ न्यामा. |
| ऋ ३.६.९ | मादयस्व । ३.२.२६ ( एभिरग्ने सरथं...अत्र ) |
| शत ४.३.४ | माध्यन्दिनपवमानः पञ्चदशः पञ्चसामा । १०.५.७-९ त्रिभिश्च गायत्रीत्रिष्टुब्बृहतीछन्दोभिः पञ्चभिः–गायत्र – आमहीयव – रौरव– यौधाजय–औशनससामभिः । ( औशनस ) ( साम ६७२-६७९ ) |

| | |
|---|---|
| मैसं ४.७.६ | माध्यन्दिनसवने गृह्यः (षोडशी)। तेजो वै माध्यन्दिनसवनं, तेजस एव वज्रं निर्मिमीते। १०.५.४४ |
| तैसं ६.१.६ | माध्यन्दिने सवने दक्षिणा नीयन्ते। १०.६.६९ |
| तैसं १.१.१२ | मा मा सं ताप्सम्। १.२.३४ तं. |
| तैसं १.३.२ | मा मा हिंसीः। १.२.३४ |
| मैसं १.४.८ | मांसं न पचेयुः, यस्मिन् अग्नौ ये च पचेयुः तं क्रव्यादं कुर्युः। १२.२.२ न हि तस्मिन् अग्नौ मांसं पचन्ति यस्मिन् आहुतीर् जुह्वति। |
| ऊह तैसं १.१.६ | मांसमसि धिनुहि देवान्। ९.१.३९ धान्यमसि धिनुहि देवान् इति मन्त्राद् ऊहितः। |
| आप ७.२८.८ | मांसीयन्ति ह वा एतस्याजुह्वतोऽग्नयो यजमानस्य, ते यजमानम् एव ध्यायन्ति, यजमानं संकल्पयन्ति, पचन्ति ह वा अन्येषु अग्निषु वृथा मांसम्, अथ एतेषां नातोऽन्या मांसाशा विद्यते। १२.२.५ |
| तैसं २.२.११ | मारुतं चरुं निर्वपेत् पृश्नीनां दुग्धे प्रैयङ्गवं ग्रामकामः। १०.१.४१ |
| मैसं ३.३.१० | मारुतं जुहोति। २.१.११ मारुतान्। |
| मैसं २.४.८ | मारुतं सप्तकपालं सौर्यम् एककपालम्। ४.२.१२ |
| तैब्रा २.७.११.१,२ | मारुतान् आलभन्ते। ११.२.५५ सप्तदशपृश्नीन् उक्ष्णः मारुतान् आलभन्ते। |
| मैसं ३.३.१० | मारुतान् जुहोति। ४.२.२७ |
| तैब्रा १.६.५.१ | मारुतीम् आमिक्षां प्रतिप्रस्थाता दक्षिणे विहारे अनुतिष्ठति। ११.२.३३-४१ न्यामा. |
| तैब्रा १.६.५.१ | मारुतीम् एव प्रतिप्रस्थाता दक्षिणस्मिन् विहारे हवींषि आसादयति। |
| आप ८.६.१५ | ११.२.३१ |
| तैसं २.१.६ | मारुतीम् पृश्नीम् आलभते। ४.४.१-२ न्यामा. मारुतं पृश्निम् आलभेत। |
| तैब्रा १.३.७.४ | मारुत्यान् अनवदानीयान् सुराग्रहांश्च आजिसृद्भ्यो हरति। १०.७.७ |
| तैब्रा १.६.५.४ | मारुत्यामिक्षा। ११.२.६३ |
| आप १.१६.२ | मार्तिकेन प्रतिष्ठाकामस्य ( अपः प्रणयेत )। ४.३.४ मृण्मयेन। |
| शत १.१.१.१० | माषान् मे पचत। २.१.३३ |
| तां २५.४.१ | मासं जुहोति। २.३.२४ तं. जुह्वति। |
| तां २५.४.१ | मासं दर्शपूर्णमासाभ्यां यजते। २.३.२४;४.४.२१;७.३.१;८.२.२१ यजन्ते। |
| तां २५.४.१ | मासमग्निहोत्रं जुहोति। २.३.२४;४.४.२१;८.२.२९;७.३.१० अग्निहोत्रवत् जुह्वति। |
| तां २५.४.१.२ | मासमग्निहोत्रं जुह्वति, मासं दर्शपूर्णमासाभ्यां यजन्ते, मासं वैश्वदेवेन, मासं वरुणप्रघासैर्, मासं साकमेधैर्, मासं शुनासीर्येण, त्रिवृता मासं, पञ्चदशेन मासं, सप्तदशेन मासम्, एकविंशेन मासं, त्रिणवेन मासम्, अष्टादश त्रयस्त्रिंशानि अहानि, द्वादशाहस्य दशाहानि, महाव्रतं च अतिरात्रश्च। (२) अग्निहोत्रं दशहोता, दर्शपूर्णमासौ चतुर्होता, चातुर्मास्यानि पञ्चहोता, सौम्योऽध्वरः सप्तहोता। ८.२.२९ |
| तां २५.४.१ | मासं यजते। २.३.२४ तं. मासं दर्शपूर्णमासाभ्यां यजन्ते। |
| तां २५.४.१ | मासं वैश्वदेवेन (यजते)। २.३.२४ तं. |

| | |
|---|---|
| तैसं ७.५.१ | मासि मासि अतिग्राह्या ग्रहा गृह्यन्ते । १०.८.२४,२८ |
| | मासो देवता संवत्सरो देवता । १०.४.२१ न्यामा. ( मन्त्रब्राह्मणे ) |
| याज्ञस्मृ १.९५ | माहिष्येण करण्यां तु रथकारः प्रजायते । ६.१.४४-५० न्यामा. |
| तैसं ६.५.५ | माहेन्द्रग्रहं गृह्णाति । २.१.१७ तं. |
| सत्या १७.५.११ | माहेन्द्रस्य स्तोत्रं प्रत्यभिषिच्यते । ५.२.२१ |
| शत १३.५.१० | मित्रविन्दायां सप्तदशसामिधेन्यः । १०.८.१७ |
| तां २५.१०.१-९ | मित्रावरुणयोर् अयनाख्ये सारस्वतसत्रे – यथा अमावास्यायाम् अतिरात्रः स्यात् तथा दीक्षेरन् तेऽमावास्यायाम् अतिरात्रं संस्थाप्य तदहरेव वत्सान् अपाकुर्युः, तं पक्षम् अमावास्येन व्रजित्वा पौर्णमास्यां गाम् उपेयुः, पौर्णमासेन उत्तरं व्रजित्वा अमावास्यायाम् आयुषम् उपेयुः, एवम् आवर्तन्तो व्रजेयुः । ( सारेण ) २.४.२८ तं. ( गौर् आयुर् एकाहौ ) |
| मैसं १.१०.६ | मिथुनं च वै दधि च शृतं च, अथ यत् संसृष्टं मण्डम् इव मस्तु इव परि च ददृशे गर्भ एव सः । ४.१.२४ |
| तैसं ६.६.५ | मिथुनं सरस्वत्या करोति प्रजनयति सौम्येन । ८.१.१४ रेतः सौम्येन दधाति प्रजनयति पौष्णेन । |
| पा ७.३.८२ | मिदेर् गुणः । ३.४.१३ तं. शितिप्रत्ययपरतः एव मेद्यति, मेद्यतः, मेद्यन्ति । |
| आप २.१८.२३ | मिश्रदैवतं हि आज्यम् – अग्नीषोमीयं, प्राजापत्यं, वैष्णवं च । ५.४.२१ आज्यहविर् उपांशुयाजः पौर्णमास्यां वैष्णवो अग्नीषोमीयः प्राजापत्यः । |
| पा परिभाषा १६ | मुख्यगौणयोश्च मुख्ये कार्यसंप्रत्ययः । ६.५.३४ |
| तैसं ६.१.४ | मुशली अन्वाह । ४.२.१८ ( मुशली = मैत्रावरुणः ) दण्डी प्रैषान् अन्वाह । ३.१.१२;४.२.१८ |
| तैब्रा १.८.२.२ | मुष्करा भवन्ति सेन्द्रियत्वाय । ४.१.१७; ६.८.३८ ( सेन्द्रत्वाय ) |
| आप ७.१९.३ | मुष्टिना पिधाय वपोद्धारणम् आसीत आ वपाहोमात् । ३.६.२३ |
| तैसं ५.२.१ | मुष्टीकरोति ( वाचं यच्छति ) । ३.१.२४ |
| गोभिलगृ २.८.२५ | मूर्धन्यभिजिघ्राणम् । १.३.२४ तं. मूर्धन्यभिघ्राणम् इति वक्तव्ये । |
| आप १.६.६ | मूलतः शाखां परिवास्य उपवेषं करोति । ४.२.८ |
| तैसं ७.३.१९ | मूलेभ्यः स्वाहा । ९.१.६-१० न्यामा. |
| ऋ १०.३३.१-९ | मूषिकासूक्तम् । २.१.२२ प्र मा युयुज्रे जनानाम् । |
| तैसं ६.६.४ | मूषिकासूक्तस्य एकादशिन्याम् अर्थवत्ता । ३.१.२ 'आखुस्ते रुद्र पशुः' इति ब्रूयात् । |
| तैसं ७.५.२२ | मृगारेष्टिः।११.२.२३ अग्नयेऽंहोमुचेऽष्टाकपाल इन्द्रायांहोमुचे एकादशकपालो, मित्रावरुणाभ्यां आगोमुग्भ्यां पयस्या, वायोसावित्र आगोमुग्भ्यां चरुर्, अश्विभ्याम् आगोमुग्भ्यां धाना, मरुद्भ्य एनोमुग्भ्यः सप्तकपालो, विश्वेभ्यो देवेभ्य एनोमुग्भ्यो द्वादशकपालोऽनुमत्यै चरुर्, अग्नये वैश्वानराय द्वादशकपालो, द्यावापृथिवीभ्याम् अंहोमुग्भ्यां द्विकपालः ॥ |
| आप १.१६.२ | मृण्मयेन प्रतिष्ठाकामस्य अपः प्रणयेत् । ४.३.४ न्यामा. |
| मैसं ३.६.२ | मृता वा एषा त्वग् अमेध्यं वा अस्य एतद् आत्मनि शमलं तदेव अपहते मेध्य एव मेधम् एव उपैति । ४.३.१ |

| | |
|---|---|
| तैसं ६.१.३ | मेखलया दीक्षयति । ५.३.२९ मेखलया यजमानं दीक्षयति । |
| आप ७.१८.९ | मेढ्रूं ते आप्यायताम् इति मेढ्रूम् । ४.१.१७ न्यामा. |
| मैसं ४.३.४<br>ऐब्रा २.६ | मेधपतये उपनयत आशासाना मेधपतये मेधम् । ९.३.३४<br>मेधपतये मेधम् इति स यदि एकदेवत्यः पशुः स्यात्, मेधपतये इति ब्रूयात्, यदि द्विदेवत्यो मेधपतिभ्याम् इति, यदि बहुदेवत्यो मेधपतिभ्यः इति स्थितम् । |
| तैब्रा ३.६.६.१ | मेधपतिभ्यां मेधम् आशासाना उपनयत ताभ्याम् । ९.३.३५ उपनयत मेध्या दुर् आशासाना मेधपतिभ्याम् । |
| चरक ६.१.३०,३१ | मेधाजननानि रसायनानि । ६.७.३३ वचा घृतं सुवर्णं च बिल्वचूर्णमितित्रयम् । मेध्यमायुष्यमारोग्यं पुष्टिसौभाग्यवर्धनम् ॥ |
| षड् १.१.१५ | मेधातिथिं हि काण्वायनं मेषो भूत्वा ( इन्द्रो ) जहार । ९.१.४३,४४ |
| षड् १.१.१४,१५ | मेधातिथेर् मेष इति, मेधातिथिं हि काण्वायनं मेषो भूत्वा जहार । ९.१.४३,४४ |
| तैब्रा २.६.६.४ | मेधोऽसि । २.१.३२ ( पाठान्तरं – एधोऽसि ) |
| तैसं २.१.९ | मैत्रं श्वेतम् आलभेत वारुणं कृष्णम् अपां च ओषधीनां च सन्धौ । अन्नकामः । ८.१.१५; ९.३.१०,२७; ९.४.१ |
| मैसं १.४.१२ | मैत्रायणीयानां समिदादयः प्रयाजा नाम्नाताः अथ गुणाः श्रूयन्ते – ऋतवः प्रयाजा समानीयहोतव्याः । |
| मैसं ३.९.८ | मैत्रावरुण ऋत्विक् । १०.७.१८ मैत्रावरुणं वृणीते । |
| तैसं ६.४.८ | मैत्रावरुणं गृह्णाति । २.२.१७;९.४.४७;१०.४.३;१०.७.२ मैत्रावरुणो गृह्यते । |
| तैसं ६.३.४ | मैत्रावरुणदण्डेन भूमेः समक्रिया अदूमिर् अवसेचनं बलवद् अवधानम् अञ्जनम् इति यूपावरोहणे क्रियते । १०.२.७२ |
| तैसं ६.४.८ | मैत्रावरुणं पयसा श्रीणाति । ३.६.३४ |
| मैसं ३.९.८ | मैत्रावरुणं वृणीते । ३.७.२२ |
| सत्या ९.६.२०,२१ | मैत्रावरुणः प्रेष्यति च अनु च आह । ३.७.२२,४१.४३,४४; १०.७.१९ मैत्रावरुणीं पुरोनुवाक्याम् अन्वाह संप्रेषश्च भवति । |
| तैसं ६.१.४ | मैत्रावरुणाय दण्डं प्रयच्छति । ४.२.१७ |
| मैसं ४.६.२ | मैत्रावरुणे ( ग्रहे ) पयस्याम् अवदधाति । ३.८.३३ |
| ऐब्रा ६.१० | मैत्रावरुणो मित्रावरुणौ 'मित्रं वयं हवामाहे' इति यजति । ३.२.२९ |
| तैसं १.८.१९ | मैत्रावरुण्याम् आमिक्षायां न वाजिनेन प्रचरन्ति । ७.३.२६ |
| मैसं २.६.१३<br>तैसं १.८.१९ | मैत्रावरुण्यामिक्षा । ७.३.२६ |
| ऋ १०.११७.६ | मोघम् अन्नं विन्दते अप्रचेताः । २.१.३३ ( + सत्यं ब्रवीमि वध इत् स तस्य । नार्यमणं पुष्यति नो सखायं, केवलाघो भवति केवलादी ॥ ) |
| पा धातुपाठ २०५.१६६३ | म्लेच्छ अव्यक्तायां वाचि । १.३.२७ तं. |
| छांउ ८.७.१ | य आत्मा अपहतपाप्मा विजरो विमृत्युर् विशोको विजिघत्सोऽपिपासः सत्यकामः सोऽन्वेष्टव्यः स विजिज्ञासितव्यः य एष आत्मा । १.३.२७ तं. |
| तैसं २.३.७ | य इन्द्रियकामो वीर्यकामो वा स्यात् तम् एतया सर्वपृष्ठ्या याजयेत् । ३.५.१६-१७ न्यामा. |

तैसं २.६.७ य इमं यज्ञम् अवान् ये यज्ञपतिं वर्धान् । १०.४.५१
काठकसं ८.१ य इष्ट्या पशुना सोमेन आग्रयणेन वा यक्ष्यमाणः स पौर्णमास्याम् अमावास्यायां वा यजेत । ५.४.२४; १२.२.२७
आप १०.२.८ य इष्ट्या पशुना सोमेन वा यजेत स पौर्णमास्याम् अमावास्यायां वा यजेत । ४.३.३९
तैसं ५.३.१२ य उ च एनं वेद तरति मृत्युम् । १.२.४,१६
षड् ४.१.१४ य एकः पशुर् अतिरिच्यते स ऐन्द्राग्नः कार्यः । ११.४.२६ आलभ्यः
तैसं ५.२.८ य एताम् इष्टकाम् उपदध्यात् स त्रीन् वरान् दद्यात् । ३.८.२ योऽविद्वान् इष्टकाम् उपदधाति स त्रीन् वरान् दद्यात् ।
तां १६.१.२ य एतेन (ज्योतिष्टोमेन) अनिष्ट्वा अथ अन्येन यजेत गर्तपत्यम् एव तत् जायते प्र वा मीयते । ५.३.३७,४३
तैसं ३.५.२ य एवं कश्चन स्तोमभागम् (तैसं ४.४.१) अधीयीत स एव ब्रह्मा (वासिष्ठो) भवेत् । ६.६.२५ इन्द्रो वसिष्ठाय एतान् स्तोमभागान् अब्रवीत् ततो वसिष्ठपुरोहिताः प्रजाः प्राजायन्त, तस्माद् वासिष्ठो ब्रह्मा कार्यः ।
तैसं ७.३.७ य एवं भूतिकार्यम् इच्छन्तः त एनं पञ्चदशरात्रम् उपेयुः । ८.२.३१ उपेयत्वात् सत्रत्वम् । श्रियं गच्छन्ति ओजो बलम् इन्द्रियं वीर्यम् आत्मन् धत्ते ।
तैसं ५.६.२ य एवं विद्वान् अग्निं चिनुते ऋध्नोत्येव । २.३.२१; ४.४.१२,१४,१७; ५.२.२२; ५.३ १६; ९.१.२६; १०.३.२३; १०.४.१; १०.८.२३
मैसं १.६.३ य एवं विद्वान् अग्निम् आधत्ते । ३.३.९; ६.१.१२,२९,३७; १०.४.२७,३०
तैसं १.६.९ य एवं विद्वान् अग्निहोत्रं जुहोति । ९.४.२८
तैसं १.६.९ य एवं विद्वान् अमावास्यां यजते । २.२.३; ९.१.२६,२८
मैसं ४.७.९ य एवं विद्वान् एतं षोडशिनं गृह्णाति भवति आत्मना पराऽस्य भ्रातृव्यो भवति । १०.५.३४,४२
तैसं ७.२.१० य एवं विद्वान् द्वादशाहं यजते । ८.१.१७ द्वादशाहेन
तैसं १.६.९ य एवं विद्वान् पौर्णमासीं यजते । २.२.३;९.१.२६,२८
मैसं १.६.७ य एवं विद्वान् यज्ञायज्ञीयं गायति । ३.३.९;१०.८.९ गायते
मैसं १.६.७ य एवं विद्वान् वामदेव्यं गायति । ३.३.९;१०.८.९ गायते
मैसं १.६.७ य एवं विद्वान् वारवन्तीयं गायति । ३.३.९;१०.८.९ गायते
शांब्रा २.३ य एवं विद्वान् विराट्संपन्नं अग्निहोत्रं जुहोति । २.२.१६ तं. गार्हपत्यान्वाहार्यपचनयोश्चतस्रश्चतस्र आहुतीर् आहवनीये च +
तां ४.३.४.५ य एवं विद्वान् साम्ना स्तुवीत । ९.२.३०,३१ ऋचा स्तुवते साम्ना स्तुवते...
तैसं ३.२.२ तैब्रा २.२.४.७ य एवं विद्वान् सोमेन यजते । ३.१.११
तैसं ७.२.९ य एवं विद्वांसः सत्रम् आसते । ६.६.१,१६,२७; १०.६.४५,६०; ११.२.६४ ये सत्रम् आसते ।
ऐब्रा ५.२ य एवं विद्वांसः सत्रं उपयन्ति । ६.६.१,१६,२७;१०.६.४५,६०;११.२.६४ य एवं विद्वांसो यन्ति ।
साम ६.८,९.१ य एव हि अभिवतीभिर् (अभि त्वा शूर नोनुमो) इन्द्रः स्तूयते स एव माहेन्द्रग्रहेण इज्यते । २.१.१५ तं. सूत्र-वशावद् वाऽगुणार्थं स्यात् । गुणी-महेन्द्रः, अगुणम्-इन्द्रः ।

| | |
|---|---|
| छांउ ८.७.१ | य एष आत्मा अपहतपाप्मा विजरो विमृत्युर् विशोको विजिघत्सोऽपिपासः सत्यकामः सत्यसंकल्पः सोऽन्वेष्टव्यः । १.३.२७ तं. |
| आप ४.२०.६ | यं कामयेत पापीयान् स्याद् इति नीचैस्तरां तस्य याज्यया वषट्कुर्यात् । १०.२.५४ |
| आप ४.२०.६ | यं कामयेत प्रमायुकः स्याद् इति तस्य उच्चैस्तरां कुर्यात् (याज्यया) । १०.२.५४ |
| तैसं २.४.१३ | यं कामयेत राजन्यं अनपोध्यो जायेत वृत्रान् घ्नन् चरेत् तस्मै एतम् ऐन्द्राबार्हस्पत्यं चरुं निर्वर्तयेत् । ३.२.१९ न्यामा. |
| आप ४.२०.६ | यं कामयेत वर्षीयान् ( वसीयान् ) स्याद् इति उच्चैस्तरां तस्य याज्यया वषट् कुर्यात् । १०.२.५४ |
| तैसं १.७.१ | यं कामयेत पशुमान् स्याद् इति पराचीं तस्य इडाम् उपह्वयेत अपशुमान् एव स्यात् । १०.२.५४ ( उपहूतेडेति तत् पराची उपहूतेति तत् प्रतीची आप ४.२०.२० ) |
| मैसं १.६.८<br>आप ५.२१.७ | यं कामयेतोत्तरं वसीयान् श्रेयान् स्याद् इति तस्य अग्नये पवमानाय निरूप्य अथ पावकाय शुचये हवींषि समानबर्हिषि निर्वपेत् । ११.४.१३ |
| आप यज्ञपरिभाषा ६४,६३ | यच्च पौर्णमास्यां विहितं सा पौर्णमासी यद् अमावास्यायां विहितं सा अमावास्या । ६.३.१,५ उपदिष्टम् |
| ऐब्रा ७.३३ | यच् चमसान् जुहोति । ३.७.३९ तं. चमसान् जुह्वति । |
| जैब्रा २.२७९ | यच् चामुष्यै कामाय यज्ञा आह्रियन्ते । ४.३.२८ ( कैकेयो यज्ञं... ) |
| पा धातुपाठ १००२ | यज-देवपूजासंगतिकरणदानेषु । १.३.७ तं. |
| तैब्रा १.६.३.४ | यजमान एककपालः । १.४.२३ यजमानो वा एककपालः । |
| तैब्रा १.६.३.६,७ | यजमान एककपालः सर्वहुतः कर्तव्यः, स्वर्गं आहवनीयः तत्र प्रतिष्ठितो भवति । १.४.२३ यजमानो वा एककपालः सकृद् होतव्यः सुवर्गो लोक आहवनीयः, यदेककपालम् आहवनीये जुहोति यजमानम् एव सुवर्गं लोकं गमयति । |
| ऐब्रा ३५.३० | यजमानचमसः फलमयः एकेषाम् । ६.६.२२ क्षत्रियो यजमानोऽथ अस्य एष स्वभक्षो न्यग्रोधस्य अवरोधाश्च । फलानि च औदुम्बराणि आश्वत्थानि प्लाक्षाणि अभिषुणुयात् तानि भक्षयेत् । |
| ऐब्रा ३५.२९ | यजमानचमसः सोममयः एकेषाम् । ६.६.२२ ब्राह्मणानाम् एव त्रयाणां भक्षाणाम् एकम् आहरन्ति, सोमं वा दधि वा अथ सोमं ब्राह्मणानां सभक्षः । |
| शत २.४.४.२५ | यजमानपञ्चमाः समुपहूता इडां भक्षयन्ति । ६.४.४;१०.२.२२; १२.१.३० होता अध्वर्युः ब्रह्मा आग्नीध्रः यजमानश्च । |
| तैसं ६.२.७ | यजमानम् एव प्रजया पशुभिः प्रथयति । १.२.५ |
| आप ११.१६.११-१५ | यजमानम् पत्नीं पुत्रांश्च भ्रातृंश्च अहतेन वाससा प्रच्छाद्य वाससोऽन्ते रदण्डम् उपनिबध्य जुहोति । १.३.४ न्यामा. |
| तैसं ६.२.१० | यजमानसंमिता औदुम्बरी भवति । २.१.३३; ६.६.६; ९.१.४०; १०.२.४९, ५८; १२.४.२८ यजमानेन संमिता । |
| आश्व ५.९.५ | यजमानस्य याज्या सोऽभिप्रेष्यति 'होतर् एतद् यज' इति स्वयं वा निषद्य यजति । ३.५.४४ |
| तैसं २.६.५; ६.२.८ | यजमानः प्रस्तरः । १.४.२३ |

वाराह ३.२.१.२ यजमाना एव ऋत्विजः स्युः । १०.६.५२ ब्राह्मणानां सप्तदशानां सताम् एको
गृहपतिः षोडश ऋत्विजो यजमानाः ।

तैब्रा ३.३.५.२ यजमानावेक्षितेन आज्येन होमः । ६.१.१७ अग्नेर् जिह्वाऽसि सुभूर् देवानाम्
इति यजमानश्चक्षुषी निमिल्य आज्यम् अवेक्षते ।

तैसं ६.२.१० यजमानेन संमिता औदुम्बरी भवति । ९.१.४१ यजमानसंमिता ।

शत ३.६.१.६ यजमानेन संमिता औदुम्बरी परिवासयति । ६.६.४ यजमानेन संमाय ...

तैब्रा १.३.७.३ यजमानो यूपः । १.४.२५; ७.३.३४

मैसं १.१०.७ यजमानो वा एककपाल आहवनीयः स्वर्गो लोको यत् सर्वहुतं करोति
हविर्भूतम् एव एनं स्वर्गं लोकं गमयति । १.४.२३

आप १८.३.१० यजुर्युक्तं रथम् अध्वर्यवे ददाति, ऋग्भिर्युक्तं रथं होत्रे, सामभिर् युक्तं रथम्
उद्गात्रे । १०.३.७५ ( यजुषा युनक्ति– तैब्रा १.३.५ ) इन्द्रस्य वज्रोऽसि
इत्यादिमन्त्रैर् संस्कृतम् ।

ऐब्रा ५.३३ यजुर्वेदतो यज्ञो विनष्टः इति अन्वाहार्यपचने 'भुवः स्वाहा' इति होतव्यः ।
छां ४.१७.५ ३.४.१३ तं. यदि यजुष्टो यज्ञम् आर्तिम् इयात्...

तैब्रा ३.२.१.१ यजुषा वत्सान् अपाकरोति । ९.४.३७ यत् पर्णशाखया वत्सान् अपाकरोति
ब्रह्मणा ( यजुषा ) एव एतान् अपाकरोति ।

तां १६.१५.५ यजेत स्वर्गकामः । २.२.१७; ४.४.१९ स्वर्गकामो यजेत ।

आप १०.२.१ यजेत स्वर्गकामो वसन्ते वसन्ते । २.२.१७ वसन्ते वसन्ते ज्योतिषा यजेत-
ज्योतिष्टोमेन स्वर्गकामो यजेत ।

तैसं २.४.११ यज् जगत्या परिदध्यात् अन्तं यज्ञं गच्छेत् अथ यत् त्रिष्टुभा परिदधाति
मैसं २.४.४ नान्तं गच्छति । ५.३.६

तैब्रा १.१.६.९ यज् जुहुयाद् यथापूर्वम् आहुतीर् जुहुयात् यन् न जुहुयात् अग्निः परा पतेद्
तूष्णीम् एव होतव्यम् । १०.८.८

तैब्रा ३.३.५.५ यज् जुह्वां गृह्णाति ऋतुभ्यस्तद् गृह्णाति, ऋतवो वै प्रयाजाः प्रयाजेभ्यस्तत् ।
शत १.३.२.८ ४.१.४३

पा १.२.३४,३३ यज्ञकर्मणि ( एकश्रुतिः )–अजपन्यूङ्खसामसु । ९.२.३० न्यामा. जपन्यूङ्ख
( ओकाराः ) सामवर्जितेषु एकश्रुतिः ।

वाराह १.२.४.११ यज्ञं तनिष्यन्तौ अध्वर्युयजमानौ वाचं यच्छतः । ९.१.२४ अध्वर्युयजमानौ
वाचं यच्छेताम् आहविष्कृतः ।

तैसं ६.२.७ यज्ञम् एतिम् एव तत् प्रजया पशुभिः प्रथयति । १.२.४३

तैसं ३.१.३ यज्ञं वा एतत् संभरन्ति यत् सोमक्रयण्यै पदम् । ४.१.२५ न्यामा.

सत्या १.१.१ यज्ञं व्याख्यास्यामः । १.३.२४ तं.

आप १.३.३ यज्ञस्य घोषद् असि इत्यादि मन्त्रैर् दात्रच्छिन्नं बर्हिः सम्पाद्यते । १०.१.१-३
न्यामा.

तां १६.१.२ यज्ञानां प्रथमो यज्ञः ( ज्योतिष्टोमः ) । १.३.३९-४२ न्यामा.

साम ७०३ यज्ञायज्ञा वो अग्नये गिरागिरा च दक्षसे गा यीरा गिरा इति गाने, ऐरं कृत्वा
तां ८.६.१० तदा 'आयीरा ( आईरा ) इरा' । ९.२.५०-५३ न्यामा.

| | |
|---|---|
| तां ५.६.२ | यज्ञायज्ञीयं पुच्छं गायति। ९.१.५३ तं. महाव्रतस्य यज्ञायज्ञीयं (साम) पुच्छं कार्यम्। पुच्छेन उद्गाता आत्मना गायेत (तां ५.१.१,१८;५.२.१)। |
| साम ७०३ ऋ ६.४८.१ | यज्ञायज्ञीयं साम-यज्ञायज्ञा वो अग्नये गिरा गिरा च दक्षसे। प्रप्र वयममृतं जातवेदसं प्रियं मित्रं न शंसिषम् ॥ |
| साम ७०४ ऋ ६.४८.२ | ऊर्जो नपातं स हि नाथमस्मयुर् दाशेम हव्यदातये। भुवद् वाजेष्वविता भुवद् वृध उत त्राता तनूनाम्। ९.१.५० न्यामा. |
| तां ८.६.२ | यज्ञायज्ञीयेन स्तुवन्ति ।।९.१.५२ |
| तैसं १.६.८ | यज्ञायुधानि संभरन्ति। ३.१.११ न्यामा. |
| ऋ १०.९०.१६ | यज्ञेन यज्ञम् अयजन्त देवाः, तानि धर्माणि प्रथमानि आसन्। १.१.२;२.१३३ |
| तैसं ७.३.७ | यज्ञे यं कामम् इच्छन्तस्ते एनं पञ्चदशरात्रम् उपेयुः। ८.२.२९-३२ न्यामा. य एवं विद्वांसः पञ्चदशरात्रम् आसते भ्रातृव्यान् एव पराभाव्य विजित्य श्रियं गच्छन्ति, पाप्मानं निर्दहन्ते ओजो बलम् इन्द्रियम् आत्मन् धत्ते। |
| आपध १.२४.२.१५ | यज्ञोपवीतिना कर्तव्यम्। १.३.५ यज्ञोपवीती प्रदक्षिणं दैवानि कर्माणि करोति। |
| शत १२.२.७.१० | यज्ञोपवीती देवेभ्यो दोहयति। ३.४.९+१,३ (उपवीतं देवानाम् उपव्ययते |
| आप ९.११.१० | तैसं २.५.११) उपरि हि देवेभ्यो धारयति इति लिङ्गात्। |
| तैआ २.१.१ | यज्ञोपवीत्येव अधीयीत याजयेद् यजेद् वा यज्ञस्य प्रसृत्यै। |
| मैसं ३.६.९ | यज्ञो वै देवतानां (देवानां) न समभवत् तं भृत्या समभावयन्, यद् भृतिं वनुते यज्ञस्य भृत्यै द्वादशरात्रीर् दीक्षितो भृतिं वन्वीत। १०.२.२७ |
| सत्या ७.३.३६ | यज्ञो वै देवेभ्योऽश्वो भूत्वाऽपाक्रामत् सोऽपः प्राविशत्, स वालधौ गृहीतः, स बालान् विवेश ह, ते वालाः काशतां प्राप्ता। १.३.९ तं. |
| तैसं २.६.५ | यतस्तण्डुला भवन्ति तत् प्रोक्षितव्यम्। ९.१.३ व्रीहीन् प्रोक्षति। |
| वैशेषिकसूत्र १.२.७ | यतो द्रव्यगुणकर्मसु सत् इति प्रतीतिः सा सत्ता। १.३.३० तं. |
| तैउ ३.१.१ | यतो वा इमानि भूतानि जायन्ते। ३.३.१ तं. |
| तां १०.५.१४ | यत्कामो व्यूढछन्दसा द्वादशाहेन यजते सोऽस्मै कामः समृद्ध्यते। १०.५.७९-८२ न्यामा. |
| मैसं ३.८.२ | यत् किंचित् प्राचीनम् अग्नीषोमीयात् तेन उपांशु चरन्ति। ३.३.९ तं. |
| शत १.४.५.१० | यत् किंचित् प्राजापत्यं यज्ञे क्रियते तद् उपांशु एव क्रियते। २.२.१० |
| मैसं ३.९.४ | यत् किल यज्ञे दुरिष्टं तद् यूपे आमुञ्चते, यत् सुकृतं तद् यजमाने। ९.३.९ |
| तैसं ६.६.१० | यत् तूष्णीं तत् प्राजापत्यं स मनसा जुहोति, मन इव हि प्रजापतिः। २.२.९,१० |
| तैब्रा १.८.६.१ | यत् त्रिषु यूपेषु आलभते बहिर्धाऽस्माद् इन्द्रियं वीर्यं दध्याद् भ्रातृव्यम् अस्मै जनयेद् एकयूपे आलभेत। ८.१.१५ |
| तैब्रा २.६.७.४,५ | यत् त्वष्टारं च वनस्पतिं च आवाहयसि। अथ वेतौ यक्ष्यसि, त्वाष्ट्री नवमी प्रयाजेज्या, वानस्पत्या दशमी। अत्रैव एतौ इष्टौ विद्यात्। ९.४.५९ |
| तैसं ५.६.८ | यत् पक्षसंमितां मिनुयात् कनीयांसं यज्ञक्रतुम् उपेयात् पापीयसी अस्य आत्मनः प्रजा स्याद्, अथ यदि वेदिसंमित्या मिनोति। वेदिसंमितां मिनोति कनीयसीं प्रजां कनीयसः पशून् कनीयसोऽन्नाद्यं पापीयान् स्यात्, ज्यायांसम् एव यज्ञक्रतुम् उपैति, नास्य आत्मनः पापीयसीं प्रजा भवति। २.४.८ |

| | |
|---|---|
| शत १२.३.४.१७ | यत् पयोग्रहाश्च सुराग्रहाश्च गृह्यन्ते । ३.५.१४ |
| शत ४.२.३.६ | यत् पराञ्चम् उक्थ्यात् निगृह्णाति (षोडशिनम्) । १०.५.४३,४५ तं पराञ्चं |
| तैब्रा १.६.८.६ | यत् परुषि दिनं तद् देवानां, यद् अन्तरा तन् मनुष्याणां, यत् समूलं तत् पितॄणाम् । ३.४.११ |
| तैसं ६.६.६ | यत् पर्यग्निकृतं पात्नीवतम् उत्सृजति । २.३.१९ |
| तैब्रा ३.२.१.१,३ | यत् पलाशशाखया वत्सान् अपाकरोति, यत् प्राचीम् आहरेद् देवलोकम् अभिजयेत् । ४.२.७ न्यामा. |
| तैसं ३.१.४ | यत् पशुर् मायुमकृतोरो वा पद्भिर् आहते अग्निर् मा तस्माद् एनसो विश्वान् मुञ्चतु अंहसः । ६.८.२८ |
| कात्या २२.२.२५ टीका | यत् पशून् दद्यात् सोऽनृतं कुर्यात् । १०.३.६८ न्यामा. ऋतं वै सोमोऽनृतं पशवः + |
| तैब्रा १.३.१०.२ | यत् पितृभ्यः पूर्वेद्युः करोति पितृभ्य एव तत् यज्ञं निष्क्रीय यजमानो देवेभ्यः प्रतनुते । ४.४.१९ |
| तैब्रा १.६.८.४ | यत् पूर्णं तन् मनुष्याणाम्, उपर्यर्धो देवानाम्, अर्धः पितॄणाम् । ३.४.११ |
| मैसं ४.३.७ | यत् पूर्वं त्रिसंयुक्तं वीरजननं तद्, यद् उत्तरं त्रिसंयुक्तं पशुजननं तत् । ११.४.३ |
| तैसं ६.६.८ | यत् पृष्ठ्येऽतिगृह्णीयात् प्राञ्चं यज्ञं पृष्ठानि संशृणीयुः, यद् उक्थ्ये गृह्णीयात् प्रत्यञ्चं यज्ञम् अतिग्राह्याः संशृणीयुः । १०.८.२३ |
| आप यज्ञपरिभाषा ६४,६३ | यत् पौर्णमास्याम् उपदिष्टं सा पौर्णमासी यद् अमावास्यायाम् उपदिष्टं सा अमावास्या । ६.३ ५,१ |
| तैसं ७.१.४ | यत् प्रथमं द्विरात्रस्य तद् द्वितीयं द्वादशाहस्य यद् द्वितीयं द्विरात्रस्य तत् तृतीयं द्वादशाहस्य । १०.५.१२ गायत्रं साम पूर्वेऽहन् भवति, उत्तरे त्रैष्टुभम् । |
| मैसं २.३.२ | यत् प्रयाजानां पुरस्ताज् जुहुयाद् बहिर् आत्मनां सजातानां दध्याद्, यद् अनुयाजानाम् उपरिष्टात् स्वर्गं लोकम् अपक्रामेत । ४.४.७ तं. (बहिरात्मा वै प्रयाजानुयाजा आत्मा देवता + ) |
| तैसं २.६.१ | यत् प्रयाजानुयाजा इज्यन्ते वर्म वा एतद् यज्ञस्य क्रियते, वर्म यजमानस्य भ्रातृव्यस्य अभिभूत्यै । ४.३.१;४.४.३०;१०.१.१८ |
| तैआ ५.१ | यत् प्रवर्ग्यं प्रवृणक्ति । ३.३.३२ तं. |
| मैसं ३.८.२ | यत् प्राचीनम् अग्नीषोमीयात् तद् उपांशु चरन्ति । ९.१.२२ |
| तैब्रा ३.२.१.३ | यत् प्राचीमाहरेद् देवलोकं तद् अभिजयेत् । ४.२.७ न्यामा. |
| मैसं ४.७.६ | यत् प्रातःसवने गृह्णीयात् (षोडशिनं) वज्रम् उत्तरे सवने व्यतिरिच्येत यन् माध्यन्दिने वज्रं निहन्यात्, तृतीये सवने गृह्यः, तत् सर्वेषु सवनेषु गृह्णाति न पूर्वे सवने आर्तिं नीते । १०.५.४४ |
| तैब्रा १.५.११.१ | यत्र च ज्योतींषि स्तोमाः स ज्योतिष्टोमः । ४.४.४० |
| आप १२.१४.१ | यत्र जगत्याम् उत्पन्नं साम स जगत्सामा, स विषुवान् । १०.५.५८ |

| | |
|---|---|
| तैसं २.५.७ | यत्र तत्रस्था प्र वो वाजा त्रिर् अभ्यसितव्या। ९.१.३३ त्रिः प्रथमाम् आह (त्रिरुत्तमाम्)। |
| मैसं २.२.३ | यत्र बाणवन्तः परिधयः तत्रापि पालाशाः उत्पादयितव्याः, पूर्वपक्षे सिद्धान्ते बाणवन्तः एव संमार्ष्टव्याः। २.१.१२ (ब्राह्मणस्पत्ये चरौ) |
| तैसं ४.६.४<br>ऋ ६.७५.१७ | यत्र बाणाः संपतन्ति कुमारा विशिखा इव। १.३.२ |
| मैसं ४.५.२ | यत्र होतुः प्रातरनुवाकम् अनुब्रुवतः उपशृणुयात् तदाऽपोऽध्वर्युर् गृह्णीयात्। ३.७.४२,४५ |
| शत ३.६.१.१० | यत्रान्या ओषधयो म्लायन्ते, ते (यवाः) मोदमानाः इव उत्तिष्ठन्ति। १.३.९ तं. |
| तैब्रा ३.५.१०.४ | 'यत्रायुराशास्ते यजमानस्तत्र प्रस्तरं प्रयच्छते एवं कामो यजमानः' इति। १०.२.१९ |
| काठकसं २०.१२ | यत् सप्तदशवती उभयत उपदधाति, अन्नम् एव उभयतो दधाति, तस्माद् द्वाभ्यां हस्ताभ्यां परिगृह्य पुरुषोऽन्नम् अत्ति। १.३.९ तं. |
| शत २.४.३.९ | यत् सर्वहुतं करोति सा तु एका परिचक्षा, हुतोहुतः पर्यावर्तते सा द्वितीया, आज्यस्यैव द्यावापृथिवी यजेत। ७.१.३३; ७.३.२६ |
| महाभारत १.१.३९ | यथर्तावृतुलिङ्गानि नानारूपाणि पर्यये। दृश्यन्ते तानि तान्येव तथा भाति युगादिषु॥ १.३.७ तं. |
| वाराह ३.२.७.२७ | यथा गृहीतान् ग्रहान् ऋत्विज उपाददते – आश्विनम् अध्वर्युः, सारस्वतं ब्रह्मा, ऐन्द्रं प्रतिप्रस्थाता। ३.५.१४ |
| भर १४.१६.११ | यथा चमसम् अन्यान् चमसान् चमसिनो भक्षयन्ति अथैतस्य हारियोजनस्य सर्वे एव लिप्सन्ते। ३.५.२८,२९,३० |
| तैब्रा २.१.२.१२ | यथाऽतिथये प्रद्रुताय अन्नम् आहरेयुः, तादृक् तद् यद् उदिते जुहोति इति अपरे पुनर् उदितहोमं निन्दन्ति। २.४.८ |
| सत्या ६.३.१७,१८ | यथाऽनुपूर्वां स्वरुभिः पशून् समज्य मध्यमे रशनागुणे स्वे स्वे स्वं स्वं यूपशकलम् उपगूहति। ४.२.५ |
| षड् ३.३.२२ | यथा वै दक्षिणपाणिर् एव देवयजनम्। १.३.७ तं. |
| मैसं १.८.७ | यथा वै मत्स्योऽविदितो जनम् अवधुनुते एवं वा एतेऽप्राश्नामाना जनम् अवधुन्वते। ३.६.२० |
| षड् ४.२.३ | यथा वै श्येनो निपत्य आदत्ते, एवम् अयं द्विषन्तं भ्रातृव्यं निपत्य आदत्ते यम् अभिचरन्ति। १.४.५ |
| षड् ४.४.४ | यथा संदंशनं दुरादानम् आदत्ते। १.४.५ |
| तैसं ५.३.४ | यथा सृष्टम् एव अवरुन्धे। १.४.२७ न्यामा. |
| तां ८.३.१ | यद् अकालयत् तत् कालेयस्य कालेयत्वम्। १.३.२४ तं. |
| मैसं १.८.७ | यद् अग्नये च प्रजापतये च सायं जुहोति। १.४.४; ७.३.४ यत् सूर्याय च प्रजापतये च प्रातः। २.२.१६ तं. |
| तैब्रा २.१.२.१० | यद् अग्नये सायं जुहोति। १.२.५९ |
| तैब्रा १.७.४.४ | यद् अग्नये स्विष्टकृते अवद्यति। १०.७.३४ न्यामा. |
| मैसं ३.९.१ | यद् अगृहीत्वा आज्यानि सोमम् आसादयेयुः अपघ्नन्ति यजमानम्, अथ यद् गृहीत्वा आज्यानि सोमम् आसादयेयुः न यजमानम् अपघ्नन्ति। १२.१.१२ |

ऊहः तैसं १.५७ यद अघृतम् अभोजनं तत् । १.४.२६ अयज्ञो वा एष योऽसामा इति मन्त्राद् ऊहितम् ।

निरुक्त १.१८ यद् अधीतम् अविज्ञातं निगदेनैव शब्द्यते। अनग्नाविव शुष्कैधो न तज् ज्वलति कर्हिचित् । १.३.२४ तं.

शत १.१.३.१२,१३ यद् अध्वर्युयजमानौ वाचं यच्छतः तत् प्रजापतिभूयं गतौ यज्ञं तन्वाते, तस्मात् प्रणीताः प्रणेष्यन् वाचं यच्छति । ९.१.२०-२५ न्यामा.

तैसं ६.३.८ यद् अनुपोष्य प्रयायाद् ग्रीवबद्धम् एनम् अमुष्मिन् लोके नेनीयेरन् । ८.१.९

तैब्रा ३.५.१०.५ यद् अनेन हविषा आशास्ते । ३.२.१,३

मैसं ३.९.४ यद् अन्तर्वेदि मिनुयान् निर्दहेद्, यद् बहिर्वेदि अनवरुद्धः स्याद् अर्धम् अन्तर्वेदि मिनुते अर्धं बहिर्वेदि अवरुद्धो भवति न निर्दहति । ३.७.१३

तां २३.८.३ यद् अन्यतरतोऽतिरात्रस्तेन अहीनः । ८.२.२९-३२ न्यामा.

मैसं २.४.२ यद् अन्यदेवत्या पुरोडाशा भवन्ति अन्यदेवाः पशवः तद् अस्याः (सौत्रामण्याः) (सत् समृद्धम्) । १०.१.२५

तैसं ६.२.३ यद् अन्याम् आहुतिं पुरस्तात् जुहुयात्, अन्यन् मुखं कुर्यात्, स्रुवेण आघारम् आघारयति । १०.७.४५,४६

तैआ २.१५ यद् अपि च अध्ययनमात्रं समामनन्ति यं यं क्रतुम् अधीते तेन तेन तस्य अभीष्टं भवति । १.१.१

पाम १.१.१.१२ यद्प्यविद्वांसः – अविद्वांसः प्रत्यभिवादे नाम्नो येन प्लुतिं विदुः । कामं तेषु तु विप्रोष्य स्त्रीष्विव 'अयम् अहं वदेत्' । १.३.२४ तं.

तैब्रा १.६.१०.१ यद् अभिघारयेद् रुद्राय आस्ये पशून् अपिदध्यात् । १०.८.८

मैसं ३.८.९ यद् अवृता वषट्कुर्युर् भ्रातृव्यं यज्ञस्य आशीर् गच्छेद्, यद् वृता वषट् कुर्वन्ति एकधा तद् यजमाने आशीः यज्ञस्य प्रतितिष्ठति । ११.३.१९

तैसं १.५.१ यद् अश्रु अशीर्यत तद् रजतं हिरण्यं अभवत् । १.२.१

तैसं २.२.५ यद् अष्टाकपालो भवति गायत्र्या एव एनं पुनाति । १.४.१७; ४.३.३८ गायत्रिया

तैब्रा ३.३.५.५ यद् अष्टौ उपभृति गृह्णाति प्रयाजानुयाजेभ्यस् तद् गृह्णाति। ३.८.९-११ न्यामा.

शत २.१.३.९ यद् अहरेव एनं श्रद्धा उपनमेत् तदहर् आदधीत । ५.४.१६ यदैवैनं कदा च

तैब्रा १.१.२.८ यज्ञ उपनमेद् अथ अग्नीऽआदधीत (शत)। यदैवैनं यज्ञ उपनमेत् अथ आदधीत (तैब्रा)।

तां १७.१४.१ यदा अग्निहोत्रं जुहोति अथ दशगृहमेधिनः आप्नोति, एकया रात्रिया यदा दशसंवत्सरान् अग्निहोत्रं जुहोति अथ दर्शपूर्णमासयाजिनम् आप्नोति, यदा दशसंवत्सरान् दर्शपूर्णमासाभ्यां यजते अथ अग्निष्टोमयाजिनम् आप्नोति, यदा दशभिर् अग्निष्टोमैर् यजते अथ सहस्रयाजिनम् आप्नोति, एवं दशदशभिर् गुणेन अयुतं प्रयुतं नियुतम् अर्बुदं न्यर्बुदं निखर्वं बद्वम् अक्षितम् – यदा दशभिर् अक्षितैर् यजते गौर् भवति, ततः अग्निं, ततः संवत्सरस्य गृहपतिम् आप्नोति । १.२.१७ तं.

तैसं २.६.३ यदाग्नेयोऽष्टाकपालोऽमावास्यायां पौर्णमास्यां च अच्युतो भवति । १.४.९; २.२.३; ३.४.३७; ४.१.२९; ६.३.५; ६.४.१; १०.४.२३; १०.८.२९,४३; ११.२.१

तैसं २.६.३ यदाग्नेयोऽष्टाकपालोऽमावास्यायां पौर्णमास्यां चाच्युतो भवति, आग्नेयोऽष्टाकपालोऽमावास्यायां भवति। २.३.२७,२८,२९ अन्यार्था वा पुनः श्रुतिः। ऐन्द्राग्नार्थम्।

शत ५.१.२.१,३ यद् आग्रयणाद् गृह्णाति षोडशिनम्। १०.५.४७ आग्रयणानन्तरम्।

तैसं ६.१.१ यद् अङ्क्ते चक्षुरेव भ्रातृव्यस्य वृङ्क्ते। ४.३.१

तां ६.७.१५ यदा च उद्गातुः पूर्वम् अवच्छेदः प्रतिहर्तुस्तदा सर्ववेदसं दद्यात्। ६.५.५५

तां ७.२.१ यद् आजिम् ईयुस्तद् आज्यस्य आज्यत्वम्। १.४.३

कात्या २२.३.३७ यद् आज्यं तद् हुतं नवनीतम् (श्येने)। ३.८.३९-४१

मैसं १.४.१३ यदा तद् हविः संतिष्ठते अथ एतद् हविर् निर्वपेत्। ६.४.१८,१९,२०,२१

आप १.२.११
भर १२.२.८
सत्या २०.४.२ यद् आतिथ्यां बर्हिस्तद् उपसदां तद् अग्नीषोमीयस्य। ४.२.२९; १२.१.४१ आतिथ्येष्ट्या उर्ध्वं त्रिषु दिनेषु उपसदोऽनुष्ठेयाः औपवसथ्येऽहनि अग्नीषोमीयः अतः आतिथ्ये दिने त्र्यार्थं बर्हिर् उपादेयम्॥

ऐब्रा ३५.३३ यदाऽन्यान् चमसान् उन्नयति अथ एनम् उन्नयति। ३.५.५०

ऐब्रा ३५.३३;७.३३ यदाऽन्यान् चमसान् जुह्वति, अथ एतस्य दर्भतरुणकेन उपहत्य जुहोति। ३.५.१९

तां ६.७.१४ यदा प्रतिहर्तुः पूर्वं अपच्छेदस्तद् उद्गातुः तदा अदक्षिणेन यजेत तद् यज्ञम् इष्ट्वा पुनर् एतेनैव यजेत् तत्र तद् दद्यात् यत् पूर्वस्मिन् दास्यन् स्यात्। ६.५.५५

तां १८.१.१८ यदा बृहत्सामा तदा रुक्मललाटो (अश्वो) दक्षिणा। २.४.२९ उपहव्योऽनिरुक्तो उक्थ्यो यज्ञो बृहत्सामा अश्वः श्वेतो रुक्मललाटः।

तैसं १.६.७ यदाऽरण्यान् अश्नाति तेनारण्यान्, इन्द्रियम् एव आत्मन् धत्ते। १२.१.३०

सत्या १७.४.४ यदा रथन्तरसामा तदा अश्वः श्वेतो दक्षिणा। २.४.२९ उपहव्योऽनिरुक्तस्तेन अभिशस्यमानं याजयेत्, अग्निष्टोमो यज्ञः।

आप १०.१४.९ यदा वै दीक्षितः कृशो भवति अथ मेध्यो भवति। ३.८.९-११ न्यामा.

मैसं ३.६.६ यदा वै पुरुषे न किंचिद् अन्तर् भवति, यदाऽस्य कृष्णं चक्षुषो नश्यति अथ मेध्यतमः। ३.८.१०

तां १३.१२.१४ यदा षडहः संतिष्ठते न बहु वदेत् नान्यं पृच्छेत् नान्यस्मै ब्रूयात्। १०.४.१

मैसं ३.६.६ यदाऽस्मिन् अन्तर् न किंचन भवति अथ मेध्यो भवति। ३.८.९-११ न्यामा.

आप १०.१४.९ यदाऽस्य कृष्णं चक्षुषो नश्यति अथ मेध्यो भवति। ३.८.९-११ न्यामा.

आप १०.१४.९ यदाऽस्य त्वचाऽस्थि संधीयते अथ मेध्यो भवति। ३.८.९-११ न्यामा.

तैब्रा १.१.१०.५ यद् आहवनीये जुहोति तेन सोऽस्य अभीष्टः प्रीतो भवति। २.३.४;३.१.२२; ३.४.२६;५.४.२७; ६.३.१८;६.४.२७; ६.९.११;७.३.३१;८.४.८;१०.८.१६;११.२.२८,२९,३०,३१;११.३.२;१२.२.३;१२.४.१९,२४,२५

मैसं ३.८.९ यदि कामयेत वर्षेत् पर्जन्यः इति नीचैः सदो मिनुयात्। ३.८.१३;४.२.२५;१०.२.५०

तैब्रा ३.७.२.२ यदि कीटोऽवपद्येत अन्तः परिधि निनयेत्। ८.४.२०,२८ यत् कीटावपन्नं जुहुयात् अप्रजा अपशुर् यजमानः स्यात्, मध्यमेन पर्णेन द्यावापृथिव्यर्चा अन्तः परिधि निनयेत्।

तां २१.१४.१६ यदि कूटः काणो वा भवेद् बार्हस्पत्यं चरुं निर्वपेत् । ११.२.५४ यदि श्लक्ष्णो वा कूटो वा भवेद् बार्हस्पत्यं चरुं निरुप्य अन्यम् आलभेत् ।

आप १२.१४.१ यदि जगत्सामा सोमः स्याद् आग्रयणाग्रान् ग्रहान् गृह्णीयात् । १०.५.५८

मैसं ३.९.४ यदि द्वौ ( यूपौ ) उपस्पृशेद् 'एतौ ते वायू' इति, यदि बहून् 'एते ते वायवः' इति ब्रूयात् । ९.३.९

मैसं ३.४.८ यदि ( यत् ) पक्षसंमिता स्यात् । २.४.२६

आप ९.१४.३ यदि पत्नीः संयाजयन् कपालम् अभिजुहुयात् वैश्वानरं द्वादशकपालं निर्वपेद्, एकहायनो गौर् दक्षिणा स्यात् ।१०.२.४६

कात्या २५.९.१ यदि पशुर् उपाकृतः पलायेत अन्यं तद्वर्णं तद्वयसम् आलभेत । १.३.३२ पशुश्चेद् उपाकृतः पलायेत वायवे तम् अनुदिश्य ...

तां ६.७.१५ यदि प्रतिहर्ताऽपच्छिद्येत सर्ववेदसं दद्यात् । ६.५.४९-५६ यदि प्रतिहर्ताऽपच्छिद्यते पशुभिर् यजमानो व्यृध्यते, पशवो वै प्रतिहर्ता, सर्ववेदसं दद्यात् ।

तैब्रा १.१.६.९ यदि पूर्वं न क्रियेरन् आभिर् उद्वासयेत् तस्मात् तूष्णीं होतव्यम् । ५.३.२१ यदि न जुहुयाद् अग्निः परापतेत्, तूष्णीम् एव होतव्यम् ।

आप ९.११.१४ यदि प्रदीयेरन् तत्र न भवेयुः । ४.१.९ ब्राह्मणेभ्यो यज्ञपात्राणि दत्तानि न दहने स्युः ।

तां. २१.१४.१७ यदि प्रापतेत् (पशुः) वायव्यं चरुं निरूप्य अथ अन्यम् आलभेत । ११.२.५४

मैसं १.१०.७ यदि प्रावृषि यजेत सकृद् उपस्तृणीयाद् द्विर् अभिघारयेद् वृष्ट्यैव पशून् अभिजिघ्रति । १०.४.५६

तां. ८.८.११ यदि बृहत्सामाऽतिरात्रः स्यात्सौभरम् उक्थ्यानां ब्रह्मसाम कार्यम् । १.२.२८ तं.

तैब्रा १.८.६.२ यदि ब्राह्मणं न विन्देत वल्मीकवपायाम् अवनयेत् । ३.५.१४-१५ न्यामा.

मैसं ४.४.९ यदि ब्राह्मणो यजेत (अवेष्टिं) बार्हस्पत्यं मध्ये निधाय आहुतिम् आहुतिं हुत्वाऽभिघारयेद् यदि राजन्य ऐन्द्रं, यदि वैश्यो वैश्वदेवम् । २.३.३;११.४.८,९

काठकसं १९.७ यदि भिद्येत तैः कपालैः संसृज्य अन्याम् (उखां) कुर्यात् सा एव ततो यज्ञस्य निष्कृतिः । २.२.२८ तं.

आप १२.२४.५ यदि राजन्यं वैश्यं वा याजयेत् ( सोमेन ) स यदि सोमं बिभक्षयिषेत, न्यग्रोधस्य स्तिभिनीर् आहृत्य ताः संपिष्य दधनि उन्मृज्य तम् अस्यै भक्षं प्रयच्छेत् न सोमम् । ३.५.४७

तां. ८.८.१२ यदि रथन्तरसामाऽतिरात्रः स्याद् रथन्तरसाम्ना सौभरं कुर्याद् अजामितायै । २.२.२८ तं.

आप १२.१४.१ यदि रथन्तरसामा सोमः स्याद् ऐन्द्रवायवाग्रान् गृह्णीयाद्, यदि बृहत्सामा शुक्राग्रान्, यदि जगत्सामा आग्रयणाग्रान् । २.३.१;१०.५.५७,६३,७०

मैसं ४.४.६ यदि राजन्यो ( अवेष्टिं ) यजेत ऐन्द्रं मध्ये निधाय आहुतिम् आहुतिं हुत्वाऽभिघारयेत् । २.३.३ न्यामा.

तैसं २.४.१० यदि वर्षेत् तावत्येव जुहुयाद्, यदि न श्वोभूते जुहुयाद् होतव्यं हविर् निर्वपेत् । ४.३.२१,२४

मैसं ३.१०.७ — यदि वसन्ते यजेद् द्विर् उपस्तृणीयात् सकृद् अभिधारयेत्। ओषधयो वै प्रियङ्गवः, ओषधीषु एव पशून् प्रतिष्ठापयति। १०.५.५९

तां ९.३.१ — यदि सत्राय दीक्षिता अथ साम्युत्तिष्ठेरन् सोमम् अपभज्य विश्वजिता अतिरात्रेण सर्वस्तोमेन सर्वपृष्ठेन सर्ववेदसदक्षिणेन यजेरन्। ६.५.२५

तां ९.८.१
कात्या २५.७.३ — यदि सत्राय संदीक्षितानां प्रमीयेत् तं दग्ध्वा कृष्णाजिने अस्थीनि उपनह्य योऽस्य नेदिष्ठं स्यात् तस्य स्थाने दीक्षयित्वा तेन सह यजेरन्, ततः संवत्सरेऽस्थीनि याजयेत्। १०.२.४७

तां ९.५.३ — यदि सोमं न विन्देत पूतिकान् अभिषुणुयात्, यदि न पूतिकान् (विन्देत) अर्जुनानि (अभिषुणुयात्)। ३.६.४०;६.३.१४,३१,३२

आप १४.२४.१८;२५.३
शत ४.५.१०.१,६ — यदि सोमम् अपहरेयुर् एकां गां दक्षिणां दद्यात् अग्निदग्धे पञ्च गाः। ४.१.१२

शत ४.५.१०.१ — यदि सोमम् अपहरेयुर् विधावत गच्छत इति ब्रूयात्। ४.५.१०;१०.२.५७

आप १०.२.८ — यदीष्ट्या यदि पशुना यदि सोमेन यजेत अमावास्यायां वा पौर्णमास्यां वा यजेत। ४.३.१

तैसं ६.६.८ — यद् उक्थ्ये गृह्णीयात् प्रत्यञ्चं यज्ञम् अतिग्राह्याः संशृणीयुः। १०.८.२३

तैब्रा १.५.९ — 'यद् उग्रं वचोऽशावधीत्, त्वेषं वचोऽपावधीत् स्वाहा' इति अशनायापिपासे ह वा उग्रं वचः एनश्च वैरहत्यं च त्वेषं वचः। २.१.४८ न्यामा.

लाट्यायन १.१२.१८ — यद् उत्तरयोः पवमानयोस्तृचाय हिंकरोति, अथ कस्माद् बहिष्पवमाने सकृद् एव हिंकरोति, एकं हि तत्र साम इति ब्रूयाद्। १०.५.५६ स्वारम् एव गायत्रम् इति वचनात्। (एकच्छन्दः प्रातःसवनम्–षड् १.३.१)

तैब्रा २.१.२.१२ — यद् उदिते सूर्ये प्रातर् जुहुयाद् यथाऽतिथये प्रद्रुताय शून्याय आवसथायाः। २.४.८

तैब्रा ३.३.५.५ — यद् उपभृति गृह्णाति (आज्यं) प्रयाजानुयाजेभ्यस्तद् गृह्णाति, छन्दांसि हि अनुयाजाः, यद् अष्टौ कृत्वा उपभृति गृह्णाति छंदोभ्यस्तद् गृह्णाति, अनुयाजेभ्यस्तद् गृह्णाति छंदांसि हि अनुयाजाः। ४.१.४४

ऐब्रा ७.१४ — यद् उपस्तृणाति अभिधारयति अमृताहुतिम् एव एनां करोति। १०.२.३; १०.८.३० अमृतं वै आज्यं मर्त्यं हविः ...

तैसं ६.५.८ — यद् उपांशुपात्रेण आग्रयणात् पात्नीवतं गृह्णाति। ३.२.३२

तां ४.३.४.५ — यद् ऋचा स्तुवते तद् असुरा अन्वायन्, यत् साम्ना स्तुवते तद् असुरा नान्वायन् य एवं विद्वान् साम्ना स्तुवीत। ६ २.३१

तैआ २.१० — यद् ऋचोऽधीते यद् यजूंषि यद् ब्राह्मणानि। यद् इतिहासपुराणानि यत् कल्पान्। १.३.११ तं.

तैसं ३.४.१० — यद् एकया जुहुयाद् दर्विहोमं कुर्यात्, पुरोनुवाक्याम् अनूच्य याज्यया जुहोति सदेवतत्वाय। ८.४.१

तैसं २.२.५ — यद् एकादशकपालो भवति त्रिष्टुभा एव अस्मिन् इन्द्रियं दधाति। ४.३.३८

तैसं ६.३.७ — यद् एकादशप्रयाजान् यजति पशुम् एव तत् प्रयजति। १२.१.१ यावान् एष पशुः तं प्रयजति।

तैसं ६.३.११ यद् एकादशानुयाजान् यजति पशुम् एव तत् अनुयजति। १२.१.१ यावान् एष पशुः तम् अनुयजति।

तैब्रा २.१.४.९ यद् एतद् असंस्थिते तर्हि यज्ञः। ९.१.३१ (यदि प्रागुत्तमाद् पत्नी संयाजान्तता न चेत्)

तैसं ७.१.४ यद् एतद् द्विरात्रस्य उत्तरे गृह्यते। षोडशी। १०.५.५४ षोडश्युत्तरे।

तैसं ५.६.२ यद् एनं चरुं उपदधाति...बार्हस्पत्यो भवति। २.३.१८

तैब्रा १.६.५.१,२ यदेवाध्वर्युः करोति तत् प्रतिप्रस्थाता करोति ११.२.४३

मैसं ३.८.२ यदेवास्याघ्नन्तं क्षुरम् अकुर्वंस्तद् आप्याययन्ति। ८.१.८ यदेवास्य घ्नन्तः क्रूरम् अक्रन् तद् आप्याययन्ति, सर्वे ऋत्विज आप्याययन्ति।

काठकसं २१.३ यदेवास्य ऊनं यच्च छिद्रं तद् अनया पूरयति 'लोकं पृण छिद्रं पृण' इति। ५.३.२०

आप १०.१५.१ यदेका दीक्षा तिस्र उपसदः। १२.२.२७

तां ८.६.९,१० यद् गिरा गिरेति ब्रूयाद् आत्मानं तद् उद्गाता गिरति ऐरं कृत्वा उद्गायेत्। १०.४.१,१०

मैसं ३.९.१ यद् गृहीत्वा आज्यानि आसादयन्ति न यजमानम् उपह्नन्ति। १२.१.१२

शत ९.३.२.३ यद् ग्रहान् जुहोति। ३.७.३९ तं.

तैसं ६.६.४ यद् दक्षिणतः उपशयः। ७.३.३५-३६ न्यामा.

तैसं ६.१.४ यद् दीक्षिताय दण्डं प्रयच्छति। ४.२.१६-१८ न्यामा.

शत ३.८.३.१ यद्देवत्यः पशुः तद्देवत्यः पशुपुरोडाशः। १०.१.२०

मैसं ३.२.१० यद् दोष्णः पूर्वार्धाद् अग्नये समवद्यति, गुदस्य मध्यतः, श्रोण्याः जघनतः, तथा अस्य सवनस्य पशोः अग्नयेऽवत्तं भवति। १०.७.११

तैसं २.२.५ यद् द्वादशकपालो भवति जगत्या एव अस्मिन् पशून् दधाति यस्मिन् जाते एताम् इष्टिं निर्वपति पूत एव स तेजस्वी अन्नाद इन्द्रियावी पशुमान् भवति। १.४.२२;१०.७.११

तैसं ७.४.९ यद् द्वादशोपसदो भवन्ति आत्मानम् एव एतत् निरवदयते। ७.४.१४

तां ४.९.२१ (द्वाभ्यां लोम अवद्यति...)

मैसं ४.५.२ यद्यग्निष्टोमो जुहोति, यदि उक्थ्यः, परिधिम् अनक्ति, यदि अतिरात्रः एतद् एव यजुर् जपन् हविर्धानं प्रतिपद्येत। ३.६.४२

शत ११.४.१ यद्यगृहीतं हविर् अभ्युदियात्, यत् पूर्वेद्युर् दुग्धं दधि हविर् आतञ्चनम् तत् कुर्वन्ति, प्रतिमुञ्चन्ति वत्सान् तान् एव तत्र पुनर् अपाकुर्वन्ति, तान् अपराह्णे पर्णशाखया अपाकुर्वन्ति, तदु यथैवादः प्रज्ञातम् आमावास्यं हविर् एवम् एव तत्। ६.५.१५

आप ९.४.११,१३

तैब्रा १.१.६.९ यद् यजुषा जुहुयात् अयथापूर्वम् आहुतीः कुर्यात्। ५.३.२१

गीता ३.२१ यद् यद् आचरति श्रेष्ठस्तत् तदेवेतरो जनः। स यत् प्रमाणं कुरुते, लोकस्तदनुवर्तते। १.३.७ तं.

मैसं ३.९.४ यद्यन्यस्य वृक्षस्य स्वरुं कुर्यात् अन्येऽस्य लोकम् अन्वारोहेयुः, यूपस्य स्वरुं करोति। ४.२.२,३

ऐब्रा १.१४ यद्यपि चतुरवत्ती यजमानः पञ्चावत्ता एव वपा कार्या। १०.७.६४,७१,७२,७३

| | |
|---|---|
| ऐब्रा २.१० | यद्यप्यन्यदैवतः पशुः आग्नेय्या मनोता कार्या। १०.४.४२ यदन्यदैवतः पशुः आग्नेयीरेव मनोता। |
| तां २१.१४.१५ | यद्यवसीदेत् नैर्ऋतं चरुं निरूप्य अथ अन्यं (पशुम्) आलभेत। ११.२.५४ |
| ऐब्रा ५.३३ | यद्यविज्ञातो (दोषः) 'भूर् भुवः स्वः' इति आहवनीये एव जुहुयात्। १.३.७; १२.३.१६ तं. |
| तां ६.७.१४ | यद्युद्गाताऽवच्छिद्यते यज्ञेन यजमानो व्यृध्यते, अदक्षिणः स यज्ञक्रतुः संस्थाप्य अथ अन्यम् आहृत्य तस्मिन् तद् देयं यत् पूर्वस्मिन् दास्यन् स्यात्। ६.५.४९-५५ (प्रातःसवने बहिष्पवमानेन स्तोष्यमाणाः ऋत्विजः शालायाः बहिः प्रसर्पन्ति एकस्य पुरतोऽन्यः पृष्ठतो गन्तुः कच्छं गृहीत्वा एव यन्ति, एवं सति यदि उद्गाता प्रमादात् कच्छं मुञ्चेत् तदा तं यज्ञं विना दानेन संस्थाप्य अन्यं यजेत। ६.५.४९-५५ न्यामा. |
| वसिष्ठस्मृ १८.११.१२ | यद्यु (पद्यु) वा एतत् श्मशानं यत् शूद्रः तस्मात् शूद्रसमीपे नाध्येयम्। ६.१.३८ |
| शत ३.८.३.२५ | यद् यूष् परिशिष्यते तत् समक्तधाम्याम् आनयति, तद् हृदयं प्रास्यति जिह्वां वक्षः तनिमतः तस्याः वनिष्ठुम् ( + अथ उपरिष्टाद् द्विर् आज्यस्य अभिघारयति)। १०.७.२४ |
| ऐब्रा ५.३३ | यद्यृक्तो (यदि ऋक्तो) यज्ञ आर्तिम् इयात् 'भूः स्वाहा' इति गार्हपत्ये जुहुयाद्, अथ यदि यजुष्टो दक्षिणाग्नौ 'भुवः स्वाहा' इति, यदि सामतः 'स्वः स्वाहा' इति आहवनीये जुहुयात्, यदि अविज्ञाता सर्वव्यापद् वा 'भूर् भुवः स्वः' इति आहवनीये एव जुहुयात्। १२.३.१६ |
| तैसं २.६.३ | यद्येकं कपालं नश्येद् एको मासः संवत्सरस्य अपेतः स्यात् अथ यजमानः प्रमीयेत द्यावापृथिव्यम् एककपालं निर्वपेत्, यदि द्वे नश्येयातां द्वौ मासौ संवत्सरस्य अपेतौ स्याताम्, अथ यजमानः प्रमीयेत आश्विनं द्विकपालं निर्वपेत् संख्याय उद्वासयति यजमानस्य गोपीथाय। ४.३.३८ |
| मैसं ३.९.४ | यद्येकं यूपं उपस्पृशेद् 'एष ते वायो' इति ब्रूयाद्, यदि द्वे 'एतौ ते वायू' इति, यदि बहून् 'एते ते वायवः' इति। ९.३.५,९ |
| कात्या २२.१.१८ | यद्येतावता (द्वादशशतेन) न इच्छेयुः सर्वस्वेनापि आनमयितव्या ऋत्विजः। ९.७.१९ (प्रतिप्रसवो हि...) |
| तैब्रा १.४.१०.५ | यद् विश्वे देवाः समयजन्त तद् वैश्वदेवस्य वैश्वदेवत्वम्। १.४.१३-१६ न्यामा. |
| षड् ४.४.३ | यद् वै दुरादानं संदंशेन तद् आदत्ते। १.४.५ |
| मैसं ४.६.८ | यद् वैश्वदेवः प्रातःसवने गृह्यते प्रातःसवने वा एतद् यज्ञं संस्थापयन्ति। १०.२.८ वैश्वदेवस्तुतिः नान्यसवननिवृत्तिः। |
| तैब्रा १.८.६.२ मैसं २.४.२ काठकसं १२.१२ | यद् वै सौत्रामण्यां व्यृद्धं तद् अस्याः (सौत्रामण्याः) समृद्धं यद् अन्यदेवत्याः पुरोडाशा भवन्ति अन्यदेवत्याः पशवः। १०.१.२४ |
| षड् ३.१.१ | यद् होता जहाति वाग् हि तद् यजमानं जहाति। १.३.२४ तं. |
| मैसं ३.९.८ | यद् होतारं वृणीते जगन्ति तद् वृणीते। ११.३.१९ |
| तैसं ७.५.९ | यन्ति वा एते मिथुनाद् ये संवत्सरम् उपयन्ति अन्तर्वेदि मिथुनौ संभवतः तेनैव मिथुनान् नयन्ति। १०.६.४३ |

तैसं २.२.५ यत् नवकपालो भवति त्रिवृता एव अस्मिन् तेजो दधाति । ४.३.३८

ऊहः तैसं १.५.७ यत् मलिनम् आवासस्तत् । १.४.२६ 'असत्रं वा एतद् यद् अछन्दोमम्' इति मन्त्राद् ऊहितम् ।

मैसं ४.७.६ यत् माध्यन्दिने (षोडशिनं) गृह्णीयात्, मध्यतो वज्रो निहन्यात्, तृतीये सवने गृह्यः, तत् सर्वेषु सवनेषु गृह्णीयात्, न पूर्वे सवने आर्तिं नीते । १०.५.४४

काठकसं १२.१२ यत् मात्यम् आसीत् तत् पश्चात् पर्यौहत्, सुरा वै मात्यं, ततो राजन्यम् असृजत, तस्मात् ज्यायांश्च कनीयांश्च स्नुषा च श्वशुरश्च सुरां पीत्वा सह लालपत आसते, पाप्मा वै मात्यं, तस्माद् ब्राह्मणः सुरां न पिबति, पाप्मना तेन संसृज्या इति तदेतत् क्षत्रियो ब्राह्मणं ब्रूयात् नैनं सुरां पीता हिनस्ति, य एवं विद्वान् सुरां पिबति । १.३.७ तं. (मधुसीधुविवक्षया एतत्)

तैसं ६.४.३;१.३.१३ 'यमग्ने पृत्सु मर्त्यम्' इति जपन् हविर्धाने प्रतिपद्येत । ३.६.४२ तं. यजुर्वेहन्

विष्णुधर्मोत्तर २.१४४,१४५ यमं दण्डहस्तं आलिखन्ति कथयन्ति च । ९.१.६ सदण्डं महिषारूढं यमं लिखेत् पत्रे तु दक्षिणम् ।

तैआ ६.५ यमगाथा–योऽस्य कौष्ठ्यजगतः पार्थिवस्यैक इद् वशी । यमं भङ्ग्यश्रवो गाय यो राजाऽनपरोध्यः ॥ यमं गाय भङ्ग्यश्रवो यो राजाऽनपरोध्यः । येनाऽऽपो नद्यो धन्वानि, येन द्यौः पृथिवी दृढा ॥ हिरण्यकक्ष्यान् त्सुधुरान् हिरण्याक्षानयः शफान् । अश्वान् अनश्यतो दानं यमो राजाऽभितिष्ठति ॥

तैसं २.४.१४ यम् आदित्या अंशुम् आप्याययन्ति । १०.८.२२ न्यामा.

निरुक्त २.४ यमेव विद्या शुचिमप्रमत्तं, मेधाविनं ब्रह्मचर्योपपन्नम् । यस्ते न द्रुह्येत् कतमच्च नाह, तस्मै मां ब्रूयाः निधिपाय ब्रह्मन् ॥ १०.८.३९

तैआ २.१५ यं यं क्रतुम् अधीते तेन तेन तस्य अभीष्टं भवति । १.१.१

तैसं ३.१.३ यर्हि हविर्धाने प्राचीं प्रवर्तयेयुः तेन अक्षम् अञ्ज्यात् । ४.१.३५

मैसं ३.९.४ यद्येकं यूपम् उपस्पृशेद् 'एष ते वायो' इति ब्रूयाद्, यदि द्वौ 'एतौ ते वायू' इति, यदि बहून् 'एते ते वायवः' इति । ९.३.५

मैसं ३.८.९ यवमतीभिर् अद्भिर् औदुम्बर्याः प्रोक्षणम् । १ ३.९ तं.

तैसं ६.३.३ यवमतीभिर् अद्भिः प्रोक्षणम्, अञ्जनं, परिव्याणं यूपस्य धर्माः ।

शत २.५.२.१४ यवमयेषु करम्भपात्रेषु विहितेषु । १.३.९ अतुषान् इव यवान् कृत्वा तान् अन्वाहार्यपचने ईषदिव उपतप्य तेषां करम्भपात्राणि कुर्वन्ति ।

शत ५.२.४.१० यवमयश्चरुः । १.३.८

तैसं २.४.११ यवमयो मध्यमः । १०.७.५१ मध्यः

काठकसं ६.३ यवाग्वा अग्निहोत्रं जुहोति । ५.३.१

शत ११.३.१.३ यवैर् यजेत । ३.१.१२; ६.१.१०; १२.३.११ यत् पयो न स्यात् केन जुहुयात् इति । 'व्रीहियवाभ्याम्' इति ।

तां २३.८.३ यश्चान्यतरतोऽतिरात्रः सोऽहीनः । ८.२.२९

पाम ६.१.९ यश्चोभयोर् दोषो न तम् एकश्च चोद्यो भवति । ६.६.२१; ८.३.७,१४,२७; १०.१.२५

| | |
|---|---|
| पाउणादि १.१२४,१२५ | यश्छिन्नगमनोऽश्वः स छागः छिदेर् गमेश्च छागः । ६.८.३६ छा पू खदिभ्यो गन् कित् – छो छेदने छायते छिद्यते वा यज्ञार्थं छागः पूगः खङ्गः । |
| मैसं ४.४.६ | यष्टौहीं दीव्यति । ४.४.१ यष्टौही विदीव्यते । |
| काठकसं ८.१२ | यस्तं श्वोऽग्निम् आधास्यन् स्यात् स एतां रात्रिं व्रतं चरेत्–न मांसम् अश्नीयात्, न स्त्रियम् उपेयात् । १०.६.५ (अध्वर्युः) |
| मनु १२.१०६ | यस्तर्केणानुसंधत्ते स धर्मं वेद नेतरः । १.३.२ तं. |
| पाम १.१.१.२७ | यस्तु प्रयुङ्क्ते कुशलो विशेषो, शब्दान् यथावद् व्यवहारकाले । सोऽनन्तमाप्नोति जयं परत्र, वाग्योगविद् दुष्यति चापशब्दैः ।। १.३.२४ तं. |
| तैसं २.२.५ | यस्माज्जगत्या एव अस्मिन् पशून् दधाति तस्मात् पशुमान् । १.४.२२ (यज्) |
| तैसं २.२.५ | यस्मात् त्रिवृता एव अस्मिन् तेजो दधाति तस्मात् तेजस्वी। १.४.२२ (यत्) |
| तैसं २.२.५ | यस्मात् त्रिष्टुभा एव अस्मिन् इन्द्रियं दधाति तस्माद् इन्द्रियावी । १.४.२२ (यत्) |
| तां ७.८.१ | यस्माद् अपां पृष्ठे वायुना स्पृष्टे रथन्तरादीनि जातानि तस्मात् तानि पृष्ठानि स्तोत्रक्रमसु विधीयन्ते । १.४.३ तं. |
| तैसं २.२.५ | यस्माद् गायत्र्या एव एनं ब्रह्मवर्चसेन पुनाति तेन पूत एव सः । १.४.२२ (यद्) |
| तैसं २.२.५ | यस्माद् विराजा एव अस्मिन् अन्नादं दधाति तेन अन्नादः । १.४.२२ (यद्) |
| तैसं ६.४.८ | यस्मान् मैत्रावरुणोऽपूर्वस्तस्मात् पयसा श्रयितव्यः । ९.१.१२ तस्मान् मैत्रावरुणं पयसा श्रीणन्ति । |
| तैसं २.२.५ | यस्मिन् जाते एताम् इष्टिं निर्वपति पूत एव सः तेजस्वी अन्नादः इन्द्रियावी पशुमान् भवति । ४.३.३८ |
| मनु २.१८ | यस्मिन् देशे य आचारः स सदाचार उच्यते । १.३.७ तं. |
| तैसं ३.५.७ | यस्य खादिरः स्रुवो भवति सः छन्दसाम् एव रसेन अवद्यति सरसा अस्य आहुतयो भवन्ति । ३.६.१,५;४.३.१,१८,१९ |
| तां १६.१.८ | यस्य नवतिशतं (१९०) स्तोत्रीयाः अग्निष्टोमस्य–त्रिवृद् बहिष्पवमानं ९, पञ्चदशानि आज्यानि तानि चत्वारि ६०, पंचदशो माध्यन्दिनपवमानः १५, सप्तदशानि पृष्ठानि तानि चत्वारि ६८, सप्तदश आर्भपवमानः १७, एकविंशं यज्ञायज्ञीयम् २१=१९० । ५.३.३८ |
| तैसं ३.५.७ | यस्य पर्णमयी जुहूर् भवति न स पापं श्लोकं शृणोति । ३.६.१;४.३.१,२,१८,१९ |
| तैसं ३.१.४ | यस्य पशुर् मायुं कुर्यात्, उरो वा पादौ वा हन्यात्, स एतेन मन्त्रेण जुहुयात् 'अग्निर् मा तस्माद् एनसो विश्वान् मुञ्चतु अंहसः' ।। ६.८.२८ |
| तैसं ३.५.७ | यस्य पालाशो जुहूर् भवति न स पापं श्लोकं शृणोति । ४.३.२ पर्णमयी । |
| मैसं २.५.५ | यस्य पिता पितामहः सोमं न पिबेत् । ३.१.१२ |
| मैसं १.४.१३ | यस्य पुरोडाशौ क्षायतः । ३.१.१३ तं. |
| तैब्रा ३.२.३.६ | यस्य यावतीर् गावः स तावतीर् दोहयति । ११.१.११ उत्तराः दोहयति । |
| तैसं ३.५.७ | यस्य वैकङ्कती ध्रुवा भवति-प्रति एव अस्य आहुतयः संतिष्ठन्ते, अथ प्र एव जायते । ४.३.१ |
| तैब्रा ३.७.१.९ | यस्य व्रत्येऽहनि पत्नी अनालम्भुका स्यात्, ताम् अपरुध्य यजेत् । ३.४.१८ |

आप ९.४.४३;९.१५.१४ यस्य सर्वाणि हवींषि नश्येयुर् वा अपहरेयुर् वा, आज्येन ता देवताः परिसंख्याय यजेत । ६.४.२

आप ४.२४.३,४ यस्य सोमम् अपहरेयुर् एकां गां दक्षिणां दद्यात् आभिदग्धे पञ्चगाः । १०.३.५९

तैसं २.५.५ यस्य हविर् निरुप्तं पुरस्तात् चन्द्रमा अभ्युदियात् त्रेधा तण्डुलान् विभजेत्...। ६.५.१२,१३,१४,१६

तैसं २.३.२ यस्य हिरण्यं नश्येद् एतम् एव आग्नेयम् अष्टाकपालं निर्वपेत्, सावित्रं द्वादशकपालं, भूम्यै चरुम् । ४.१.२

तैसं २.२.४ यस्याग्निर् उद्धृतोऽहुतेऽग्निहोत्रे उद्वायाद् अग्नये ज्योतिष्मते पुरोडाशम् अष्टाकपालं निर्वपेत् । ९.४.२८

तैब्रा १.२.५.३ यस्यातिरिक्तम् एकादशिन्याम् आलभेरन् अप्रियं भ्रातृव्यम् अतिरिच्येत अथ यद् द्वौ द्वौ पशू समस्येयुः कनीय आयुः कुर्वीरन् । यदि एते ब्राह्मणवन्तः पशव आलभन्ते न कनीय आयुः कुर्वीत । ७.४.१४

तैसं २.५.५ यस्याभ्युदियात् । ६.५.११ यस्य हविर् निरुप्तं पश्चात् चन्द्रमा अभ्युदियात् ।

तैसं ३.५.७ यस्याश्वत्थी उपभृत् भवति ब्रह्मणा एव अस्य अन्नम् अवरुन्धे । ४.३.१

आप १४.२४.१,२ यस्याश्विने शस्यमाने सूर्यो न उदियाद् अपि सर्वा दाशतयीर् अनुब्रूयात् । २.१.२३

मैसं १.८.९ यस्याहुतम् अग्निहोत्रं सूर्योऽभ्युदियात् ... अग्निं समाधाय वाचं यत्वा दम्पती सर्वाहम् उपासीयाताम् । १२.३.१७

तैब्रा २.१.१०.३ यस्याहुतम् अग्निहोत्रं सूर्योऽभ्युदियात् मैत्रं चरुं निर्वपेत् सौर्यम् एककपालम् । १२.३.१७

शत १.६.३.१९ यस्यै कस्यैचिद् देवतायै हविर् निर्वपन् आज्यस्यैव नौ पुरस्ताद् यजन् । २.२.३तं.

तैसं ३.५.७ यस्यैवंरूपाः स्रुचो भवन्ति सर्वाणि एनं रूपाणि पशूनां संतिष्ठन्ते नास्य अपरूपम् आत्मन् जायते । ३.६.६

तैब्रा ३.७.१.७ यस्योभयं हविर् आर्तिम् आर्च्छेद् ऐन्द्रं पञ्चशरावम् ओदनं निर्वपेत् । ६.४.२२,२८,३१

मैसं १.८.७ यस्योभौ अनुगतौ अग्नी अभिनिम्लोचेद् यस्य वाऽभ्युदियात् पुनराधेयम् अस्य

आप ५.२९.१३ प्रायश्चित्तिः । ६.४.२६

तैसं २.१.२ यः कामयेत प्रथेय पशुभिः प्र प्रजया जायेय स एताम् अविं वशाम् आदित्येभ्यः कामाय आलभेत । ९.३.४१

तां २२.१५.१,२ 'यः कामयेत बहुस्यां प्रजायेय' इति एतेन कुसुरुविन्ददशरात्रेण यजेत । १०.५.८१

तां २१.१४.१,२,७,८,१० 'यः कामयेत बहु स्याम्' इति स एतेन पञ्चशारदीयेन अहीनेन मारुतीयेन यजेत, वैशाख्यायाम् अमावास्यायां सप्तदश मारुतीस्त्रिवत्सा (त्रिसंवत्सराः) अप्रवीताः (अप्रसूताः) उपाकरोति, सप्तदश पृश्नीन् उक्षणस्तान् पर्यग्निकृतान् प्रोक्षितान् इतरा आलभन्ते प्रेतरान् उत्सृजन्ति । ततः संवत्सरे राजीवा आनयन्ति तांश्चैव उक्षणस्तान् पर्यग्निकृतान् इतरा आलभन्ते प्रेतरान् उत्सृजन्ति । ११.२.५४

आप १.१६.२ यः पशुकामः स्यात् स गोदोहनेन (अपां) प्रणयनम् अभिनिर्वर्तयेत् । ८.१.२३

मैसं २.२.१३ य: पशुकामः स्यात् सोऽमावास्यायाम् इष्ट्वा वत्सान् उपाकुर्यात्, ये पुरोडाश्याः स्युः तान् त्रेधा कुर्याद्, ये क्षोदिष्ठास्तं (स्थविष्ठाः) अग्नये सनिमतेऽष्टाकपालं निर्वपेद्, ये मध्यमास्तं विष्णवे शिपिविष्टाय शृते चरुं, ये स्थविष्ठास्तम् इन्द्राय प्रदात्रे दधन् चरुम् । ६.५.१,५;९.४.४३ अपिष्ठाः (श)

य: पशुर् अतिरिच्येत स ऐन्द्राग्नः कार्यः । १०.६.४२

षड् ४.१.१४ 'य: पशून् दद्यात् स ब्रह्मणे' इति गम्यते । १०.३.७०

तां १८.२.१२ य: पूर्वेद्युर् अग्निं गृह्णाति स श्वोभूते देवताः यजते । १२.४.२२

मैसं १.४.५

तैसं २.१.१ य: प्रजाकामः पशुकामो वा स्यात् स एतं प्राजापत्यं तूपरम् आलभेत । १.२.१०

तैसं ६.३.३ य: प्रथमः शकलः परापतेत् स स्वरुः कार्यः । ४.२.४; ११.२.९ य: प्रथमः शकलः परा पतेत् तम् अपि आहरेत् स तेजसम् एव एनम् आहरेत् (यूपस्य स्वरुं करोति । मैसं ३.९.२)

तैसं ६.६.११ य: षोडशी गृह्यते इन्द्रियम् एव तद् वीर्यम् आत्मन् धत्ते । १०.५.१४ (यत्)

आप १४.२३.१ य: सत्राय आगुरते स विश्वजिताऽतिरात्रेण यजेत । ९.४.३२

पा २.३.१३ य: सम्प्रदानात् प्राग्भावी तदुद्देशः स चतुर्थ्या लक्षयितव्यः । २.२.२३ सं. चतुर्थी संप्रदाने ।

भर ५.२.६ य: सोमयागक्रतुम् आदधीत स न प्रतीक्षेत नक्षत्रं नापि ऋतुं तावत्येव आदधीत । ५.४.६ अथ यदि सोमेन यक्ष्यमाणः स्यात् न ऋतून् न नक्षत्रं यस्मिन्नेकस्मिन् ऋतौ आदधीत ।

आप ५.३.२१ य: सोमेन यक्ष्यमाणो अग्नीन् आदधीत स न ऋतुं प्रतीक्षेत न नक्षत्रम् । ५.४.६,१५

काठकसं ८.१ य: सोमेन यजेत स अग्निम् आदधीत । ५.४.७ 'सोमेन यज' इति अग्निम् आदधीत ।

मैसं १.६.११ य: सोमेन अयक्ष्यमाणो अग्निम् आदधीत स पुरा संवत्सराद् हवींषि निर्वपेत् । ५.४.८

शत १.३.६.१९ या आज्यभागादिषु देवता यष्टव्यास्ता एव इह देवताः (उत्तमप्रयाजे स्वाहाकारे) । १०.१.१४ आज्यभागौ अग्नीषोमाभ्यां यजन्ति ।

ऋ. १०.९७.१ या ओषधीः पूर्वा जाता देवेभ्यस्त्रियुगं पुरा । मनैनु बभ्रूणामहं शतं धामानि सप्त च ॥ १०.५.१४

आपध १.४.५.१ याजनाध्यापनपरिग्रहाः ब्राह्मणस्य एव वृत्त्युपायाः । १२.४.४३

तैसं ४.२.६ या जाता ओषधयो देवेभ्यस्त्रियुगं पुरा । मन्दामि बभ्रूणामहं शतं धामानि सप्त च ॥ १०.५.१४

तैसं ६.३.११ याज्यर्धर्चा वसां जुहोति । ११.२.२४ अर्धर्चे वसाहोमं जुहोति ।

मैसं ३.१०.४

तैसं ३.४.१० याज्यानुवाक्ये तु विपर्ययेण आम्नाते, विपर्ययेण कर्तव्ये । ५.१.३ पुरोनुवाक्याम् अनूच्य याज्यया जुहोति सदेवत्वाय ।

आप ४.१३.१० याज्याम् अन्वाह पुरोनुवाक्याम् अन्वाह । २.१.१३;१०.४.३९

आप २४.१४.३ [illegible] वषट् करोति । २.१.४४,४५;१२.३.२७

| | |
|---|---|
| आश्व ५.५.२२ | याज्यायाम् अपनीयमानायां नापनीयेत भक्षणम् । प्रवरवत् । ३.५.४४,४५ सूत्रम्-याज्यापनये नापनीतो भक्षः प्रवरवत् । यष्टुर् वा कारणागमात् याज्याया अधिवषट् करोति । वषट्कारनिमित्ता च शेषभक्षाः । तस्माद् भक्षानापनीयत । |
| | याज्याम् अपनीयमानायां प्रवरे नापनीयते । ३.५.४४-४६ सूत्रम्-प्रवृत्तत्वात् प्रवरस्य अनपायः । |
| आप ७.२५.१० | याज्यार्धर्चान्ते वसां जुहोति । ११.२.२४,२५;११.४.३३,३४,३५,३६ |
| अथर्व ३.१०.२ कया | यां जनाः प्रतिनन्दन्ति रात्रिं धेनुमिवायतीम् । संवत्सरस्य या पत्नी, सा नोऽस्तु सुमङ्गली ॥ अष्टकायै सुराधसे स्वाहा ॥ १.३.१- माघ्याम् अष्टम्याम् (एकाष्टकायाम्) अनीज्यमानायाम् अयं मन्त्रः । |
| तैसं १.२.११ | या ते अग्ने अयाशया रजाशया हराशया तनूर् वर्षिष्ठा गह्वरेष्ठा उग्रं वचोऽपावधीं त्वेषं वचोऽपावधीं स्वाहा । २.१.४८ |
| तैसं १.२.१ | याते अग्नेऽयाशया तनूर् वर्षिष्ठा गह्वरेष्ठोग्रं वचो अपावधीं त्वेषं वचो अपावधीं स्वाहा । |
| तैसं १.२.११ | या ते अग्ने रजाशया तनूर् वर्षिष्ठा गह्वरेष्ठोग्रं वचो अपावधीं त्वेषं वचो अपावधीं स्वाहा । |
| तैसं १.२.११ | या ते अग्ने हराशया तनूर् वर्षिष्ठा गह्वरेष्ठा उग्रं वचो अपावधीं त्वेषं वचो अपावधीं स्वाहा । २.१.४८ |
| पा ३.२.४५,३८ | या न आशितं भवं करोति नासौ बलकरणी तस्माद् या न आशितं भवा नासौ दक्षिणा । ९.३.४५ |
| अथर्व ३.१०.२ | या पत्नी संवत्सरस्य, सा नोऽस्तु सुमङ्गली । ६.५.३५ |
| मैसं १.१०.११ | या पत्या क्रीता सती अथ अन्यैश्चरति । ६.१.११ (अनृतं वा एषा करोति+) |
| मैसं ३.६.३ | यां प्रथमां रात्रिं दीक्षितो जागर्ति तथा स्वप्नेन व्यावर्तते । १२.१.१८ |
| पंब्रा ३.३७ | याम्याः शंसति । २.१.२२;७.२.१७ यामीं पूर्वां शंसेत् पित्र्याम् । (यामेन स्तुवन्ति-साम ६३०-३२-तां. ९.८.३) |
| शत १.३.१.२६ | यां वै काञ्चन यज्ञे ऋत्विज आशिषम् आशासते यजमानस्य एव सा । |
| शत १.९.१.२१ | ३.८.२७ |
| तैसं ३.५.९ | यां वै काञ्चिद् अध्वर्युश्च यजमानश्च देवताम् अन्तरितस्तस्या आवृश्चेत् यत् प्राजापत्यं दधि (ग्रहं) गृह्णाति । ४.४.८;१०.८.५० |
| वाराह १.१.१.८६ | यावज्जीवं जुहुयात्, यावज्जीवम् अभ्यसेत् इति । २.४.२ |
| आप ३.१४.८,१३ | यावज्जीवं दर्शपूर्णमासाभ्यां यजेत । २.४.१;६.२.२३,३१;६.३.१;६.५.३८; ८.१.२०;१०.८.३६ |
| वाराह १.१.१.८६ | यावज्जीवमग्निहोत्रं जुहोति । २.४.१;६.२.२३.३१;६.३.१;६.५.३८ |
| तैसं २.३.१२ | यावतोऽश्वान् प्रतिगृह्णीयाद् तावतो वारुणान् चतुष्कपालान् निर्वपेत् । २.१.३३;३.४.३०;११.४.३९ |
| तैसं २.६.३ | यावत् कपालं पुरोडाशं प्रथयति । ११.४.४१ सर्वाणि कपालानि अभिप्रथयति तावतः पुरोडाशान् । |

आप १०.४.९,१० यावत्या वाचा कामयेत तावत्या दीक्षणीयायां ब्रूयात्, मन्द्रं प्रायणीयायां, मन्द्रतरम् आतिथ्यायाम्, उपांशु उपसत्सु । ९.१.३,२५ यावद् अस्य वाग्भवति तावती दीक्षणीयायां...

तां १६.८.६ यावद् अस्य साहस्रस्य उत्तरा गौः समाहिता भवति तावद् असमात् लोकाद् असौ लोकः । ८.१.१९

तां २५.४.१ यावद् दशरात्रो महाव्रतम् उदयनीयोऽतिरात्रः । ८.२.२९

वाराह २.२.५.२६ यावन्ति आग्नेयानि सूक्तानि दाशतय्यानि सर्वैर् इष्टका उपाधीयन्ते। १०.६.७२ दाशतय्यैर् वा आग्नेयैः सूक्तैः प्रतिसूक्तम् इष्टका उपदधाति।

सत्या १.१.७३ यावेतौ आग्नेयश्च ऐन्द्राग्नश्च । १०.८.३९ एकेषाम् आग्नेयोऽष्टाकपालः ऐन्द्राग्नश्च एकादशकपालो वा द्वादशकपालः ।

मनु १२.९५ या वेदबाह्याः स्मृतयो याश्च काश्च कुदृष्टयः । सर्वास्ता निष्फलाः प्रोक्ताः तमोनिष्ठा हि ताः स्मृताः । १.३.५ तं.

आप ३.१०.१ या सरस्वती वेशमतीति पशुपुरोडाशो न स्यात् । १२.२.७

तैब्रा २.५.८.६ या सरस्वती वै शम्भल्या तस्यां मे रास्व ।

मैसं ४.३.६ यासु स्थालीषु सोमाः स्युः ते चरवः स्युः । तस्मात् स्थाल्यां चरुं श्रपयेत् । १०.१.४८

मैसं ३.६.१० याः पशूनाम् ऋषभो वाचः । ३.२.१०

पाम २.२.२९ वा १३८५ युगपदधिकरणवचनायां द्वन्द्वस्मृतेर् द्विवचनबहुवचनोपपत्तेः । ६.१.२२ सिद्धं तु युगपदधिकरणवचने द्वन्द्ववचनात् । युगवरत्रोपदर्शिते ईषाचक्रादिसंनिधाने च 'अक्षम् आनय' इत्युक्ते यानाक्षम् अधिकृत्य ब्रूते इति गम्यते न तु विदेवनाक्षम् । ६.८.३५ एवम् अग्नीषोमीयं पशुम् आलभतेऽत्र पशुशब्देन छागो गृह्यः- अजोऽग्नीषोमीयः-(काठकसं २४.७)।

पा ७.१.७१,७०,५८ युङ् । युजेर् असमासे नुम् - युजेर् असमासे सर्वनामस्थाने परतः नुम् । युङ् युञ्जौ युञ्जः, युञ्जं युञ्जौ युगः ।

तैसं ४.१.१ युञ्जानः प्रथमं मनः । ३.१.१४ न्यामा.

तैसं ३.१.६ 'युनज्मि ते पृथिवीं ज्योतिषा सह' इति ध्रुवाम् अभिमृशति, 'युनज्मि वायुम् अन्तरिक्षेण ते सह' इति उपभृतं, 'युनज्मि वाचं सह दिवा सूर्येण' इति जुहूम् । १२ १.११

साम १००१ ऋ ९.१९.२ युवं हि स्थः स्वर्पती इन्द्रश्च सोम गोपती । ईशाना पिप्यतं धियः ॥ इति

तां ६.१०.१४ द्वयोर् यजमानयोः प्रतिपदं करोति । ३.३.१७,१९; ६.२.३,११; ९.३.१५

तैब्रा ३.६.१.३ ऋ ३.८.४ युवा सुवासाः परिवीत आगात्, स उ श्रेयान् भवति जायमानः । तं धीरासः कवय उन्नयन्ति स्वाध्यो मनसा देवयन्तः ॥ यूपे परिव्यायमाणे मन्त्रः । ३.८.२१; ४.४.२४; १२.३.३०

पा १.४.१०५,७,८,१ युष्मदस्मदुपपदादिषु मध्यमाद् यस्तिङस्त्रीणि त्रीणि। प्रथममध्यमोत्तमाः । ३.४.१३ तं.

पराशरस्मृ १२.२५ यूपचित्याद्युपस्पर्शने स्नायात् । ९.३.९ तं. चैत्यवृक्षश्चितियूपश्चण्डालः सोमविक्रयी । एतांस्तु ब्राह्मणः स्पृष्ट्वा सवासा जलमाविशेत् ॥

वाराह १.६.१.१५ यूपं तक्षति । २.१.९,१२

तैसं ६.३.३ काठकसं २६.३ यूपमच्छेष्यता स्थाणौ स्थाणवाहुतिं जुहोति । आव्रश्चने जुहोति ।

मैसं ३.९.२ यूपमच्छेष्यता (वैष्णवीम् अनूच्य) होतव्यं, न हि दीक्षितस्य अग्नौ जुहोति, आज्यं च अरणिं च आदाय यूपस्यान्तिके मथित्वा यूपाहुतिं जुहोति । १०.१.१०,११,१२; ११.२.२७

तैसं ६.३.४ यूपं मिनोति । ३.७.१३-१४ न्यामा.

मैसं ३.९.२ यूपस्य स्वरुं करोति । ४.२.१,३,५,६; ४.४.२५; ११.३.८,९

मैसं ३.९.२ यूपस्यान्तिके अग्निं मथित्वा यूपाहुतिं जुहोति । ११.२.२६,२७ यूपस्यैवान्तेऽग्निं मथित्वाऽथ होतव्यम् ।

यूपस्यान्तिके अग्निं मथित्वा । ११.२.२७,२८ सूत्रम् – अनुवादमात्रकम् अन्तिकस्य । ११.२.२९ सूत्रम्–अशास्त्रत्वाच्च देशानाम् । (अन्तिकदेशः)

कात्या १४.५.३५ यूपहस्तिनो दानम् आचरति । १.३.४ यूपपरिव्याणकं शाटकं यूपहस्तिशब्देन निर्दिश्यते, तम् अध्वर्युर् हरति । उदवसानीयान्ते यूपवेष्टनानि अध्वर्यवे ददाति ।

तैसं ६.३.४ यूपः किल अग्नौ प्रक्षेप्तव्यः यत् स्वरुः प्रक्षिप्यते तेन यूपः प्रक्षिप्यते । ४.४.२८

शत ४.२.१.२१ स्वरुं यूपस्य संस्थिते सोमे प्र प्रस्तरं हरति, जुहोति स्वरुम् अयज्ञवेशसाय ।

शत ३.७.१.१० यूपाय आज्यमानाय अनुब्रूहि । ९.२.४१,४३

तैब्रा ३.८.१९.२ यूपे पशुं नियुञ्जन्ति । १०.३.१९

तां १७.१३.१०

वाराह १.६.३.२० यूपाय परिवीयमाणाय अनुब्रूहि । ३.८.२१ तं.

मैसं ३.९.३ यूपो वै यज्ञस्य दुरिष्टम् आमुञ्चते यद् यूपम् उपस्पृशेद्, अथ यज्ञस्य दुरिष्टम् आमुञ्चेत् तस्माद् यूपो न उपस्पृश्यः । ९.३.९

सत्या १६.१.३५ ये ऋत्विजस्ते यजमानाः – अध्वर्युर् गृहपतिं दीक्षयति । ३.७.३७

मैसं २.२.१३; तैसं २.५.५ ये क्षोदिष्ठास्तेषां शृतसहितानां विष्णुः शिपिविष्टो देवता विधीयते । ६.५.३

तैब्रा ३.५.७.५ ये दैव्या ऋत्विजस्तेभिरग्ने । १०.४.३२-३३ न्यामा.

मैसं ३.२.३ ये द्वे गायत्र्यौ सा एका जगती । ८.३.३५

तैसं ३.४.६ येन कर्मणा ईर्त्सेत् तत्र जयान् जुहुयात्, राष्ट्रभृतो जुहोति, अभ्यातानान् जुहोति । ३.४.२५

मनुस्मृ ५.१७८ येनास्य पितरो याता येन याताः पितामहाः । तेन यायात् सतां मार्गं तेन गच्छन् न रिष्यते । १.३.७ तं.

तां. २५.१०.३ ये पुरोडाशिनस्ते उपविशन्ति ये सांनाय्यिनस्ते वत्सान् वारयन्ति । २.४.८,२८

आप ९.११.९ ये पुरोदञ्चो दर्भास्तान् दक्षिणाग्रान् स्तृणीयात् । ३.४.९+४ तं.

तैसं ६.२.१ येभिऽषुण्वन्ति जुह्वति च ते भक्षयन्ति । ३.५.३२ हविर्धाने ग्रावभिर् अभिषुत्य आहवनीये हुत्वा भक्षयन्ति ।

तैसं २.५.५; मैसं २.२.१३ ये मध्यमा ये स्थविष्ठा ये क्षोदिष्ठाः । ६.५.२२ अणिष्ठाः

तैसं २.५.५ ये मध्यमास्तेषाम् अग्निर् देवता । ६.५.३ ये मध्यमास्युस्तान् अग्नये दात्रे पुरोडाशम् अष्टाकपालं कुर्यात् ।

मैसं ४.२.१३ ये माम् अधुक्षन्त ते मां प्रत्यमुञ्चत । २.१.२२ ये माऽधुक्षत ते मा प्रत्यनुदन्त । (ये मां कृशमकन्त ते एव मां निराकृतवन्तः । तं ) ( परिदेवनम् )

आप २१.१२.१६ — ये यजमानास्ते ऋत्विजः। ६.६.१९,२० सूत्रम्–अपि वा यजमानाः स्युर् ऋत्विजाम् अभिधानसंयोगात् तेषां स्याद् यजमानत्वम्। १०.६.५२

वाराह ३.२.२.२८ — 'ये यजामहे स्वाहा अग्निम्' इति निगदेन मान्त्रवर्णिको देवता विधिस्ततः प्रकृता देवता। १०.१.१४

ये शुक्रामन्थिप्रचारे सवनमुखीयाः ऐन्द्रास्ते भवन्ति ध्रुवचमसाः। ३.२.२८

भर १३.२५.५
मैसं १.१.६ — येषां (शाखिनां) 'कुक्कुटोऽसीति' अश्मादानमन्त्रो न समाम्नातः तेषाम् अपि हि दृश्यते 'कुक्कुटोऽसीति' अश्मानम् आदत्ते 'कुटरुरसीति' वा। २.४.३०

वाराह १.३.७.४,७ — येषां यागानाम् अपरयोर् अग्न्योर् होमः, तेषां प्रवृत्तिः स्यात् पत्नीसंयाजानाम् अविरोधात्। ८.४.२४

तैसं २.५.५ — ये स्थविष्ठास्तान् इन्द्राय प्रदात्रे दधनि चरुं, येऽणिष्ठास्तान् विष्णवे शिपिविष्टाय शृते चरुम्। ९.४.४१

तैसं २.५.५ — ये स्थविष्ठास्तेषां दधिसहितानाम् इन्द्रो देवता। ६.५.३

तैसं ५.४.१ — ये हि जनाः पुण्यकृतः स्वर्गं लोकं यन्ति तेषाम् एतानि ज्योतींषि नक्षत्राणि तथा च एष ज्योतिष्मन्तं पुण्यलोकं जयति। १.३.३० तं. सुकृतां वा एतानि ज्योतींषि यत् नक्षत्राणि तान्येव आप्नोति।

मैसं ३.२.२ — ये हि द्वे गायत्र्यौ सा एका जगती। ८.३.१३,२२,३२,३५;८.३.१४ (एका जगती द्वे गायत्र्यौ) ये हि द्वे गायत्र्यौ सा जगती।

तैब्रा ३.६.८.१ — यैव वशा सैव छागा। २.१.२० छागस्य वपाया वशायाम् अर्थसमवायित्वात्।

तैसं ६.१.३ — योक्त्रेण पत्नीं संनह्यति मेखलया यजमानं मिथुनत्वाय। ६.१.१८;१२.१.२८ मेखलया यजमानं दीक्षयति, योक्त्रेण पत्नीं मिथुनत्वाय।

वायुपुराण १.१३.२.२१ — योगजन्याणिमाद्यष्टगुणैश्वर्यफलानि – अणिमा महिमा चैव लघिमा प्राप्तिरीशिता। प्राकाम्यं च वशित्वं च यत्र कामावसायिता॥ १.३.२७ तं.

आप ५.२६.३ — योऽग्नीन् आधाय भाग्यज्यानिं पुत्रज्यानिं जीयेत स पुनरादधीत। १०.३.३० (ज्यानिम् = हानिम्।)

तैसं ३.३.४ — योऽदाभ्यं (ग्रहं) गृहीत्वा सोमाय यजते। ५.३.१६ जुहोति।

तैसं ६.१.११ — यो दीक्षितो यद् अग्नीषोमीयं पशुम् आलभते। २.२ १७;३.६.१८,३१; ३.७.१३,४३;३.८.३१;४.१.११,२७;४.२.१;४.४.२;६.३.२८;६.८.३०; ८.२.१०;९.३.१,११,१५,२२,२९;९.४.१;१०.१.९;१०.३.१;१०.४.३२; १०.७.१,१०,१२,१८;१०.८.७२,७३

तैसं ६.१.११ — यो दीक्षितो यद् अग्नीषोमीयं पशुम् आलभते वरुणपाशाभ्याम् एव मुच्यते। १०.१.१९

निरुक्त १.८ — योऽध्वरं युनक्ति सोऽध्वर्युः। १०.३.६३

तैसं ५.४.२ — यो न प्रतितिष्ठति तस्य एषा (षष्ठी) चितिर् उच्यते। ४.४.१७,१८ योऽग्निं चित्वा न प्रतितिष्ठति अथ षष्ठीं चितिं चिनुते … प्रतितिष्ठत्येव।

पाम १.१.१ — योऽप्ययम् अनियमोऽभिहितो यथैव नित्यः शब्दोऽथापि कार्यः उभयथाऽपि लक्षणं प्रवर्त्यम्। १.३.२४ तं.

तैसं १.५.१ — यो बर्हिषि रजतं दद्यात् पुराऽस्य संवत्सराद् गृहे रोदनं भवति। १.३.१०

आप १.९.२६,८ — यो ब्रह्मचारी अवकिरेत् स गर्दभं पशुम् आलभेत। ६.८.२२ न्यामा.

मैसं १.६.८ यो ब्रह्मवर्चसकामः स्यात् तस्य सर्वाणि हवींषि निरूप्याणि। समानबर्हींषि भवन्ति। ११.४.१४

तैसं २.६.१० यो ब्राह्मणाय अवगुरेत् तं शतेन यातयेत्। ३.४.२३ न्यामा.

तैआ २.८ यो मासः स संवत्सरः। ६.७.३१,३९ यो वै...

मैसं ४.२.६ यो वा अध्वर्योः स्वं वेद स्ववान् भवति एतद् वा अध्वर्योः स्वं यद् आश्रावयति। ३.७.४३,४८

तैसं ३.१.२ यो वा अध्वर्यो स्वं वेद स्ववान् एव भवति, स्रुग्वा अस्य स्वं, वायव्यम् अस्य स्वं, चमसोऽस्य स्वं यद् वायव्यं, वा चमसं वा अनन्वारभ्य आश्रावयेत् स्वाद् इयात् तस्माद् अन्वारभ्य आश्राव्यं स्वादेव नेति। ३.७.४३,४८

पाम १.१.१.३४ यो वा इमां पदशः स्वरशोऽक्षरशो वाचं विदधाति स आर्त्विजीनो भवति। १.३.२४ तं.

तैसं २.६.३ यो विदग्धः स नैर्ऋतो, योऽशृतः स रौद्रः, यः शृतः स दैवतः तस्माद् अविदहता श्रपयितव्यं सदेवतत्वाय। १.२.२४; ३.४.११

तां ८.८.१८-२० यो वृष्टिकामः स्याद्, योऽन्नाद्यकामो, यः स्वर्गकामः स सौभरेण स्तुवीत, सर्वे वै कामाः सौभरे, हीष् इति वृष्टिकामाय निधनं कुर्यात्, 'ऊर्ग्' इति अन्नाद्यकामाय 'ऊ' इति स्वर्गकामाय सर्वेषु एव कामेषु प्रतितिष्ठति। २.२.२८

तां १६.१.४ यो वै त्रिवृदन्य यज्ञक्रतुम् आपद्यते स तं दीपयति, यः पञ्चदशः स तं, यः सप्तदशः स तं, य एकविंशः स तम्। ५.४.४३,४४

तैआ २.८ यो वै मासः स संवत्सरः। ६.७.३९

ऋ. ७.१०४.१६ 'यो वै रक्षाः शुचिरस्मि' इत्याह। २.१.३३ न्यामा.

तैसं ५.५.१ यो वै संवत्सरं उख्यम् अभृत्वा अग्निं चिनुते, यथा सामि गर्भो विपद्यते तादृग् एव तद् आर्तिम् आर्च्छेत्, वैश्वानरं द्वादशकपालं पुरस्तात् निर्वपेत्, संवत्सरो वै अग्निर् वैश्वानरो यथा संवत्सरम् आप्त्वा काले आगते विजायते, एवम् एव संवत्सरम् आप्त्वा अग्निं चिनुते न आर्तिम् ऋच्छति, एषा वा अग्नेः प्रिया तनूः, प्रियाम् एव अस्य तनुम् अवरुन्धे, त्रीणि एतानि हवींषि, त्रय इमे लोकाः, एषां लोकानाम् आरोहाय। ४.४.१२

वैशेषिकसूत्र ३.२.४ योऽसौ प्राणिति अपानिति उच्छ्वसिति निमिषति सशरीरी यज्ञायुधि। ११.१.५

शांब्रा २.७ प्राणापाननिमेषोन्मेषजीवनमनोगतीन्द्रियान्तरविकाराः सुखदुःखेच्छा द्वेष-प्रयत्नाश्च आत्मनो नवगुणाः। सोऽयं पुरुषो यः प्राणिति अपानिति।

तैसं १.१.९ योऽस्मान् द्वेष्टि यं च वयं द्विष्मः। ६.८.२८

आर्षेयब्रा १.१.१ यो ह वा अविदितार्षेयछन्दोदैवतब्राह्मणेन मन्त्रेण यजते याजयति वा अध्यापयति वा (स्थाणुं वर्च्छति गर्ते वा पात्यते प्रमीयते वा, पापीयान् भवति, तस्माद् एतानि मन्त्रे मन्त्रे विद्यात्)। १.३.२ तं.

तां २५.४.५ यो होता सोऽध्वर्युः। ३.८.२१

आश्व १.१.४७ यो ह्यग्नौ सति सर्वं प्रायश्चित्तं जुहोति। १२.१.४ (क्रमविपर्यासनिमित्तं प्रायश्चित्तं क्रियते +)

| | |
|---|---|
| मैसं ४.६.३ | शुक्रान्वारम्भणम् । १०.२.४७ |
| भरद्वाज १३.२३.१०,११ | शुक्रामन्थिप्रचारे एव सवनमुखीयाः । ३.२.२९ ये शुक्रामन्थिप्रचारे सवनमुखीया ऐन्द्रास्ते भवन्ति । |
| शांब्रा २५.१० | शुक्लो होता । १.३.१८ शुक्लः एतस्य अङ्गः पिङ्गाक्षो होता स्यात् । |
| तां १९.४.६ | शुद्धाशुद्धीये भवतः । १०.४.१६,१७,१८,२० नौधसस्य ऋक्षु 'पद' इति अनेन निधनेन उपेतम् । |
| सामशुद्धाशुद्धीयस् ६८५ ऋ ८.८८.१ | तं वो दस्ममृतीषहं वसोर् मन्दानमन्धसः । अभि वत्सं न स्वसरेषु धेनव इन्द्रं गीर्भिर् नवामहे ॥ |
| साम ६८६ ऋ ८.८८.२ | द्युक्षं सुदानुं तविषीभिरावृतं गिरिं न पुरुभोजसम् । क्षुमन्तं वाजं शतिनं सहस्रिणं मक्षू गोमन्तमीमहे ॥ |
| तां १९.४.६ | शुद्धाशुद्धीयं साम स्वासु ऋक्षु गीयते । १०.४.१६,१७,१८,२० |
| साम १४०२ ऋ ८.९५.७ | एतो न्विन्द्रं स्तवाम शुद्धं शुद्धेन साम्ना । शुद्धैरुक्थैर् वा वृध्वाँसँ शुद्धैराशीर् वान्ममत्तु ॥ |
| साम १४०३ ऋ ८.९५.८ | इन्द्र शुद्धो न आ गहि शुद्धः शुद्धाभिरूतिभिः । शुद्धो रयिं निधारय शुद्धो ममद्धि सोम्यः ॥ |
| साम १४०४ ऋ ८.९५.९ | इन्द्र शुद्धो हि नो रयिं शुद्धो रत्नानि दाशुषे । शुद्धो वृत्राणि जिघ्नसे शुद्धो वाजं सिषाससि ॥ |
| तैसं १.३.१ कात्या २.३.३९ | शुन्धध्वं दैव्याय कर्मणे । ३.३.१४ पात्राणि दैव्याय कर्मणे शुन्धध्वम् । सर्वाणि पात्राणि एकत्रराशीकृत्य प्रोक्षणम् । |
| काठकसं १५.९ | शुष्कदतिर् दण्डउपानहौ दक्षिणा । १०.३.२२ |
| कात्या २२.१.१० | शूद्रश्च न देय इति अन्वादेशः । ६.७.६ ( विश्वजिति सर्वस्वदाने दासी दासाश्च न देयाः । ) |
| याज्ञस्मृ १.९२ | शूद्रायां वैश्याद् उत्पन्नः करणः । ६.१.४४ न्यामा. वैश्यात्तु करणः शूद्रायाम् । |
| शत २.५.२.२३ | शूर्पेण अन्नं क्रियते । १.२.२९,३० शूर्पेण जुहोति तेन हि अन्नं क्रियते । |
| शत २.५.२.२३ | शूर्पेण जुहोति, तेन हि अन्नं क्रियते । १.२.२७,३०; २.१.३,३३; ८.१.११ |
| शत १.१.४.११,२२ | शूर्पेण विविनक्ति । ३.१.११; ४.१.१८ शूर्पम् आदत्ते वायुर् वो विविनक्तु इति एष विविनक्ति । |
| वाराह ३.२.७.८५ | शूलेश्च मासरेण च अवभृथम् अभ्यवयन्ति । १०.१.३७; ४.१.३८ |
| तैसं १.३.१३ | शृणोत ग्रावाणः । १.२.३५,४५,४६ |
| तैसं २.५.२ | शृते चरुं दधनि चरुम् । ६.५.१,२;९.४.४१,४२,४३;१०.१.३०;१२.४.१५ |
| आप ८.३.१२ | शेषं समं विभज्य समुपहूय भक्षयन्ति । ८.२.३ शेषं सर्वे समुपहूय भक्षयन्ति । समुपहूय |
| पा १.३.७८ | शेषात् कर्तरि परस्मैपदम् । ३.४.१३ तं. |
| तां २०.१६.६ | शोभतेऽस्य मुखम् य एवं वेद । १.२.३,१५ |
| तैब्रा १.७.१०.६ | शौनःशेपम् आख्यापयति । ३.१.१४; ४.४.१; ५.२.२१ |
| तैसं ४.२.११ ऋ ६.६०.१ | श्नथद् वृत्रमुत सनोति वाजमिन्द्रा यो अग्नी सहुरी सपर्यात् । इरज्यन्ता वसव्यस्य भूरेः सहस्तमा सहसा वाजयन्ता ॥ ३.३.१२ ऐन्द्राग्नेः याज्या |

| | |
|---|---|
| छांउ ३.१४.३ | श्यामाकतण्डुलमात्रादि । २.१.५ तं. एष मे आत्मा अन्तर्हृदयेऽणीयान् व्रीहेर् वा यवाद् वा सर्षपाद् वा श्यामाकाद् वा श्यामाकतण्डुलाद् वा। एष मे आत्मा अन्तर्हृदये ज्यायान् पृथिव्याः ज्यायान् अन्तरिक्षाद् ज्यायान् दिवो ज्यायान् एभ्यो लोकेभ्यः । |
| तैब्रा १.३.४.४ | श्यामास्तूपरा एकरूपाः । २.२.२१ |
| तां ८.५.७,८,१२ | श्यावाश्वम् आन्धीगवं च द्वे सामनी, तयोः पूर्वाऽनुष्टुप् उत्तरे गायत्र्यौ, तासाम् आनुष्टुभः प्रगाथः । ९.२.२५/३ |
| सामश्यावाश्वं ६९७<br>ऋ ९.१०१.१ | पुरोजिती वो अन्धसः सुताय मादयित्नवे । अपश्वानं श्नथिष्टन सखायो दीर्घजीह्व्यम् ॥ अनुष्टुप् |
| साम ६९८ ऋ ९.१०१.२ | ( सखायो दीर्घजिह्व्यम् + ) यो धारया पावकया परि प्रस्यन्दते सुतः । इन्दुरश्वो न कृत्व्यः ॥ |
| साम ६९९ ऋ ९.१०१.३ | ( इन्दुरश्वो न कृत्व्यः + ) तं दुरोषमभी नरः । सोमं विश्वाच्या धिया यज्ञाय सन्त्वद्रयः ॥ इदमेव आन्धीगवं साम । |
| तैसं ५.४.११ मैसं ३.४.७ | श्येनचितं चिन्वीत स्वर्गकामः । १.३.३३ श्येनाकारम् इव चितम् अग्निस्थलम् इष्टकाचयनेन निर्वर्तितम् ॥ |
| तैब्रा ३.६.६.१,२ | श्येनम् अस्य वक्षः कृणुतात्, प्रशसा बाहू, शला दोषणी, कश्यपे वाऽसौ, अच्छिद्रे श्रोणी, कवषोरू स्रेकपर्णाऽष्ठीवन्ता । ९.४.२५ |
| षड् ४.२.१,२ | श्येनेन अभिचरन् यजेत । १.१.१,२; ७.१.१३; ८.१.१६; २.१.१.२ |
| षड् ४.२ | श्येनो नाम एकाह आभिचारिकः ज्योतिष्टोमपूर्वकः ज्योतिष्टोमिकविध्यन्तः । ७.१.१३ |
| तैसं ३.२.१ | श्येनोऽसि गायत्रीछन्दा अनु त्वा आरभे स्वस्ति मा संपारय सुपर्णोऽसि त्रिष्टुप्छन्दा अनु त्वा आरभे स्वस्ति मा संपारय सघाऽसि जगतीछन्दा अनु त्वा आरभे स्वस्ति मा संपारय । १०.५.८८ पवमानानाम् अन्वारोहाः । |
| सामश्रवसं २५८<br>ऋ ८.८९.१ | श्रवसंसाम- बृहदिन्द्राय गायत मरुतो वृत्रहन्तमम् । येन ज्योतिर् जनयन्नृतावृधो देवं देवाय जागृवि ॥ १०.१.२० |
| आपध २.७.१६ | श्राद्धादीनि अपरपक्षे अपराह्णे । ६.८.२५ |
| आपध २.४.२.६ | श्रावण्यां पौर्णमास्यां व्रतानि उपाकृत्य अर्धपञ्चमान् मासान् ( ४॥ ) स्वाध्यायम् अधीयीत । ९.२.३ |
| मनुस्मृ ४.९५ | श्रावण्यां प्रौष्ठपद्यां वा उपाकृत्य यथाविधि। युक्तछन्दांसि अधीयीत मासान् विप्रोऽर्धपञ्चमान् ॥ |
| महाभारत १२.३२७.४९ | श्रावयेत् चतुरो वर्णान्, कृत्वा ब्राह्मणमग्रतः । वेदस्याध्ययनं हीदं, तच्च कार्यं महत् स्मृतम् । १.२.७ तं. १.३.३८ |
| याज्ञस्मृ १.७ | श्रुतिः स्मृतिः सदाचारः, स्वस्य च प्रियमात्मनः । सम्यक् सङ्कल्पजः कामो, धर्ममूलमिदं स्मृतम् ॥ १.३.५-७ न्यामा. |
| तां ५.४.१० | श्लोकानुश्लोकाभ्यां हविर्धाने उपतिष्ठते । १०.४.१६ |
| तैसं ७.५.८ | श्लोकेन पुरस्तात् सदसः स्तुवते, अनुश्लोकेन पश्चात् सदसः, क्रौञ्चेन चात्वालम् अवेक्षमाणः स्तुवते । १.४.१६ |

सामश्लोक ४३९<br>ऋ ५.३१.४/२ — ब्रह्माण इन्द्रं महयन्तो अर्कैरवर्धयन्नहये हन्तवा उ ॥

साम अनुश्लोक ४४०<br>ऋ ५.३१.४/१ — अनवस्ते रथमश्वाय तक्षुस्त्वष्टा वज्रं पुरुहूत द्युमन्तम् ॥

पाम १.१.२४.८ वा — श्वेतो धावति अलम्बुसानां याता। ४.३.४ द्विष्ठं वाक्यं श्वेतो (गौ) श्वा इतो श्वोभूते हि यजते। १२.२.१९

तैसं १.६.७<br>तैसं ५.६.१० — षट् चितयो भवन्ति षट् पुरीषाणि द्वादश संपद्यते, द्वादशमासाः संवत्सरः, संवत्सरे एव प्रतितिष्ठति। ४.४.१६

तैसं २.५.१० — षट्त्रिंशतम् अनुब्रूयात् पशुकामस्य (सामिधेनीः)। १०.५.२७ (भाष्ये तु 'षड्विंशति,' श्रुतौ नास्ति)

मैसं ३.८.४ — षट्त्रिंशत्प्रक्रमा प्राची चतुर्विंशतिर् अग्रेण त्रिंशत् जघनेन इयति शक्ष्यामहे। ३.७.७,९

तां. २५.७.२ — षट्त्रिंशत्संवत्सरे (शाक्त्यानाम् अयने) तरसमयाः पुरोडाशा सवनीयाः। २.१.२;३.८.४२

तां १०.३.९ — षट्त्रिंशदहो वा एष द्वादशाहः। ११.४.२१ द्वादशदीक्षा, द्वादशोपसदो, द्वादशप्रसुतः, षट्त्रिंशदेता रात्रयः।

तैसं ६.१.८; ३.१.३<br>आप १०.२३.२ — षट् पदानि अनुनिष्क्रामति सप्तमं पदं गृह्णाति, यर्हि हविर्धाने प्राची प्रवर्तेयुः। तर्हि तेन अक्षम् उपाज्यात्। ४.१.२५ सप्तमे पदे जुहोति।

तैसं ४.१.९; १.२.२ — षट् पूर्वान् जुहोति षड् उत्तरान्। १०.३.२७ पूर्वान् प्राकृतान् आकूतिम् अग्निं प्रयुजम् उत्तरान् वैकृतान् आकूत्यै प्रयुजे अग्नये।

तैसं ७.४.६ — षडहा भवन्ति। ८.४.३

तैसं ६.२.३ — षडुपसद उपसाद्यन्ते। १०.७.४३ अप्रयाजास्ताः अननुयाजास्ताः इति प्रतिषेधात् प्रयाजानुयाजानुयाजान् वर्जयित्वा अवशिष्टाः धर्माः कर्तव्याः। १०.७.४२ तिस्रः उपसदः उपैति, त्रय इमे लोका इमान् एव लोकान् प्रीणाति, षट् संपद्यन्ते।

आप १६.३५.६ — षडुपसदो अग्नेश्चित्यस्य भवन्ति। २.३.२१;५.३.१ तिसृणाम् उपसदाम् आवृत्त्या षट् संपद्यन्ते।

शत २.२.२.३-५ — षड् देया द्वादशदेयाश्चतुर्विंशतिर् (गावः) देयाः। १.३.२१,३४

तैसं ५.४.६ — षड्भिर् आहरति। १२.३.३० षड्भिर् हरति।

मैसं ३.६.६ — षड्भिर् दीक्षयति। १०.३.२३,२६ षट् प्राकृतीनां षड् वैकृतीनां द्वादश-आहुतीर् जुहोति।

तैसं ७.२.१ — षड्रात्रेण यजेत। १०.५.१ यजेरन्।

तैसं २.५.१० — (षड्विंशति) षट्त्रिंशतं (सामिधेनीर् अनुब्रूयात् पशुकामस्य।) १०.५.२७

तैब्रा ३.६.३.३ — षड्विंशतिर् अस्य वङ्क्रयः ता अनूष्य उच्यावयतात्। ९.४.१,७,१०

तैसं २.५.१० — षड्विंशतिरित्येव ब्रूयात्। न चतुस्त्रिंशद् इति ब्रूयात्। ९.४.१८ सूत्र– तत् प्रतिषिध्य (न चतुर्स्त्रिंशद्) प्रकृतिर् नियुज्यते षड्विंशति इति सा चतुस्त्रिंशद् वाच्यत्वात् – सा नियुज्यमाना चतुस्त्रिंशद् वाच्यत्वाद् वारयति। ९.४.१८

मी... २४

| | |
|---|---|
| तैआ ३.४ | षड् होतृमन्त्रः- ( हे पशो )– सूर्यं ते चक्षुः वातं प्राणः द्यां पृष्ठम् अन्तरिक्षम् आत्मा, अङ्गैर् यज्ञं, पृथिवी शरीरैः । ३.७.१२ |
| मनुस्मृ १०.७६ | षण्णां तु कर्मणाम् अस्य त्रीणि कर्माणि जीविका । यजनाध्यापने चैव विशुद्धाच्च प्रतिग्रहः । ४.१.२/३ |
| मनुस्मृ १०.७९ | शस्त्रास्त्रभृत्त्वं क्षत्रस्य वणिक् पशुकृषिर्विशः । आजीवनार्थं धर्मस्तु दानमध्ययनं यजिः ॥ ब्राह्मणस्य प्रतिग्रहादिना राजन्यस्य जयादिना वैश्यस्य कृष्यादिना । ४.१.२/३ |
| पा. ८.३.८२,५५ | षत्वम् । २.१.१७ तं. अग्नेः स्तुत् स्तोमसोमाः । मूर्धन्यः अग्निष्टुत् अग्निष्टोम अग्नीषोम । |
| पा ८.३.८३,५५ | ज्योतिरायुषः स्तोमः मूर्धन्यः ज्योतिष्टोम आयुष्टोम । |
| तां ७.४.८; जैब्रा १.२४३ | षष्टिस्त्रिष्टुभो माध्यन्दिनस्य सवनस्य । ९.२.२८/३ |
| महाभारत ५.१४०.१५ | षष्ठे च त्वाम् अहनि द्रौपदी पर्युपस्थापयति । १.३.७ तं. |
| तां १६.५.२४ | षाडह्निकानां पृष्ठानां भावात् एकाहो विश्वजित् षडहः तम् एकाहं षडहः इति आचक्षते । ७.४.१३ |
| चरक ६.१.५२ | षाष्टिकं पयसा भुञ्जीत । ( यदि शालिं भुञ्जीत तत्र दध्युपसिञ्चेत् ) । २.३.१ |
| पा ४.११.४१,४० | षिद् गौरादिभ्यश्च । ३.४.४६ तं. याथाकाम्यं + षिद् याथाकामी यलोपः ( हलस्तद्धितस्य । पा ६.४.१५० ) |
| आश्व ४.१.७ | षोडशकर्तारो वरीतव्याः । ३.७.२४ एते अहीनैर् एकाहैर् याजयन्ति । |
| तां १२.१३.१ | षोडशिना यजते, षोडशी यज्ञः । ३.६.४३ षोडशी तेऽयं यज्ञक्रतुरस्तु । |
| तैसं ६.६.११ | षोडशिना वीर्यकामः स्तुवीत । ३.६.४२ यत् षोडशी गृह्यते इन्द्रियम् एव तद् वीर्यं यजमान आत्मन् धत्ते । |
| वाराह ३.२.१.४८ | षोडशी वैराजसामा । १०.६.१५ एकविंशः षोडशी वैराजसामा । |
| तैसं ७.१.४ | षोडश्युत्तरे । १०.५.५४ द्विरात्रे उत्तरे ( द्वितीये ) अहनि षोडशी गृह्यते । |
| तैसं २.१.१ | स ( प्रजापतिः ) आत्मनो वपाम् उदक्खिदत् – प्रजापतिः स्याद् वायुर् आकाश आदित्यो वा स आत्मनो वपाम् उदक्खिदत् वृष्टिं वायुं रश्मिं वा ताम् अग्नौ प्रागृह्णात् वैद्युते आर्बिसे ( आर्चिषे ? ) लौकिके वा ततो अज इति अन्नं बीजं विरुद् वा तम् आलभ्य उपयज्य प्रजाः पशून् प्राप्नोति । १.२.१० |
| शत ४.२.५.१२ | स आश्विनं ग्रहं गृह्णाति, आश्विनग्रहं गृहीत्वा उपनिष्क्रम्य-यूपं परिव्ययति परिवीय यूपं पशुं उपाकरोति, रसम् एव अस्मिन् एतद् दधाति । ३.६.२१ |
| ऋ २.२६.३ | स इज् जनेन स विशा स जन्मना स पुत्रैर् वाजं भरते धना नृभिः । देवानां यः पितरम् आविवासति श्रद्धामना हविषा ब्रह्मणस्पतिम् ॥ ९.१.८ |
| तैसं २.१.२ | स एतान् पशून् आदित्येभ्यः कामाय आलभते, यः कामयेत प्रथेय पशुभिः प्र प्रजया जायेय इति स एताम् अविं वशाम् आदित्याय कामेभ्य आलभेत । ९.३.४१ |
| काठकसं ८.१२ | स एतां रात्रिं व्रतं चरेत्–न मांसम् अश्नीयात्, न स्त्रियम् उपेयात् । १०.६.५६ |
| तैसं २.३.१२ | स ( एव ) एतं वारुणं चतुष्कपालम् अपश्यत् । ३.४.३१ |

तैब्रा १.५.९.७ स एष द्विदेवत्यः पशुः औपवसथ्ये अहनि आलब्धव्यः । ३.६.२० स एष उपवसथीयेऽहन् द्विदेवत्यः पशुरालभ्यते ।

शत १४.६.९.२८ स एष नेति नेति आत्मा होवाच । १.१.५

शत १२.५.२.८ स एष यज्ञायुधी यजमानोऽञ्जसा स्वर्गं लोकं याति । १.१.५ स्वर्गो लोको जितो भवति ।

तैसं २.६.९ सकृत् परिधीन् संमार्ष्टि । ११.१.३६ परिधीन् संमार्ष्टि, सकृत् सकृत् संमार्ष्टि ।

तैसं २.६.६ सकृत् सकृद् इति स्विष्टकृदवदानवीप्सा सर्वेभ्योऽवदाने कल्प्यते । ३.४.४५

तैब्रा १.३.१०.५ सकृदाच्छिन्नं बर्हिर् भवति । ( पितृयज्ञे ) ११.१.३६

तैसं ६.४.४ सक्तुभिर् मन्थिनं श्रीणाति । ९.१.१२;९.४.४५

तैसं २.४.१० ( सक्तु- ) सप्तमारुतैककपालेषु । ४.२.१२ मारुतं सप्तकपालं सौर्यम् एककपालम् अग्नये धामच्छदे पुरोडाशम् ... ।

ऋ १०.७१.२ सक्तुमिव तितउना पुनन्तो यत्र धीरा मनसा वाचमक्रत । अत्रा सखायः सख्यानि जानते भद्रैषां लक्ष्मीर्निहिताधि वाचि ॥ १.३.२४ तं.

तैसं ३.३.८ सक्तून् जुहोति । २.१.११

तैब्रा १.८.५.२ सक्त्वादीनां प्रदर्शनं समाधिश्च । ४.२.१३ त्रयः सक्तवो भवन्ति इन्द्रियस्य अवरुद्ध्यै ।

छांउ ३.१४.१,२ सक्रतुं कुर्वीत । मनोमयः प्राणशरीरो भारूपः सत्यसङ्कल्प आकाशात्मा सर्वकर्मा सर्वकामः सर्वगन्धः सर्वरसः सर्वम् इदम् अभ्यात्तः, अवाकी अनादरः ॥ ४.२.२३-२४ न्यामा.

छांउ ८.१५.१ स खल्वेवं वर्तयन् यावद् आयुषं ब्रह्मलोकं संपद्यते न च पुनरावर्तते । १.२.२७ तं.

याज्ञस्मृ १.९६ सङ्करजातानाम् अपि च पुनरुत्कर्षापकर्षाभ्यां सप्तमे पञ्चमे वा अन्यतरवर्णापत्तिः स्मर्यते । १.२.२ तं. जात्युत्कर्षो युगे ज्ञेयः सप्तमे पंचमेऽपिवा । व्यत्यये कर्मणां साम्यं पूर्ववच्चाधरोत्तरम् ॥

मैसं १.९.६ संग्रामिणं चतुर्होत्रा याजयेत, चतुर्गृहीतम् आज्यं कृत्वा चतुर्होतारं व्याचक्षीत, पूर्वेण ग्रहेण अर्धं जुहुयात् उत्तरेण अर्धम् । ४.२.२८

वाजसं ८.१० सजूर् देवेन त्वष्ट्रा पिब । अग्ना३इ पत्नीवन् सजूर् देवेन त्वष्ट्रा सोमं पिब स्वाहा । ३ २.३५ शेषभक्षे त्वष्टुर् अनुपलक्षणीयता ।

तां १६.१.४ स तं दीपयति । ५.४.४३-४४ न्यामा.

काठकसं ८.१२ स तां रात्रिं व्रतं चरेत् । १०.६.५४ आधातुश्च व्रतविधानं यस्तं श्वोऽग्निम् आधास्यन् स्यात् स तं रात्रिव्रतं चरेत् – न मांसम् अश्नीयात् न स्त्रियम् उपेयात् ।

अभिज्ञानशाकुन्तल १.२२ सतां हि सन्देहपदेषु वस्तुषु प्रमाणमन्तःकरणप्रवृत्तयः । १.३.७ तं.

मनुस्मृ ४.१३८ सत्यं ब्रूयात् प्रियं ब्रूयात् न ब्रूयात् सत्यमप्रियम् । प्रियं च नानृतं ब्रूयाद् एष धर्मः सनातनः ॥ ३.४.४२ तं.

वाराह ३.२.२.४७ सत्राद् उदवसाय पृष्ठशमनीयेन सहस्रदक्षिणेन यजेत । १०.२.३९

आप १.५.७ सत्वकः परिधिः, अनुच्छ्रयश्च । ९.२.४१ आर्द्राः शुष्का वा सत्वकाः परिधयः ।

सत्या ७.४.३ परिधिः अनुच्छ्रयः । ९.२.२१ शयाः परिधयः ।

| | |
|---|---|
| कात्या २२.१.२१ | सत्वग् अवभृथाद् उदेति। १२.३.१ अवभृथाद् उदेत्य रोहिण्यौ वत्सछव्यौ ( वत्सत्वच्चौ ) सकर्णां पुछावछाते परिदधाते ॥ |
| सामबृहत्पृष्ठम् ८०९-८१० | स त्वं नश्चित्र इति बृहत्पृष्ठे उत्तरा पङ्क्तिः, पूर्वा-त्वा मिद्धि हवामहे इति बृहती। ९.२.२५/१ |
| ऋ ६.४६.२;६.४६.१<br>सामपृष्ठं ८१० | स त्वं नश्चित्र वज्रहस्त धृष्णुया महःस्तवानो अद्रिवः। गामश्वँ रथ्यमिन्द्र संकिर सत्रा वाजं न जिग्युषे ॥ |
| ऋ ६.४६.२<br>साम बृहत्पृष्ठं ८०९ | त्वामिद्धि हवामहे सातौ वाजस्य कारवः। त्वां वृत्रेष्विन्द्र सत्पतिं नरस्त्वां काष्ठा स्वर्वतः ॥ |
| ऋ ६.४६.१<br>साम रथन्तरपृष्ठं ६८० | रथपृष्ठं रथन्तरस्य योनिर् बृहती 'अभि त्वा शूर नोनुमो' उत्तरा पङ्क्तिः न त्वावाँ अन्यो ...। ९.२.२५/१ |
| ऋ ७.३२.२२ | अभि त्वा शूर नोनुमोऽदुग्ध इव धेनवः। ईशानमस्य जगतः स्वर्दृशमीशानमिन्द्र तस्थुषः ॥ |
| साम रथन्तरपृष्ठं ६८१<br>ऋ ७.३२.२३ | न त्वावाँ अन्यो दिव्यो न पार्थिवो न जातो न जनिष्यते। अश्वायन्त मघवन्न् इन्द्र वाजिनो गव्यन्तस्त्वा हवामहे ॥ ९.२.२५/१ |
| तैसं ६.२.११ | सदसि भक्षयन्ति। ३.५.१९-२१ न्यामा. |
| आश्व १.२३ | सदस्यं वृणीते। ३.७.३८ तं. |
| षड् २.५.६ | सदस्य उपह्वयस्व। ३.७.३८ तं. आकाशो मे सदस्यः, स माम् उपह्वयतां, सदस्य उपमाह्वयस्व। |
| काठकसं २५ १० | सदस्यौदुम्बरी मध्यमा स्थूणा भवति। तां स्पृष्ट्वा अनपाश्रित उद्गाता |
| लाट्या २.६.२ | उद्गायेत। ९.२.११ |
| तैसं १.८.१८ | सद्यो दीक्षयति, सद्यः सोमं क्रीणाति। ११.२.६० |
| तैसं २.५.११ | सन्ततम् आघारयति। २.२.१३;१२.३.८,२३ |
| भर २.१२.४ | सन्ततम् ऋजुम् आघारम् आघारयति, प्रजापतिं मनसा ध्यायन्। १०.३.१३-१७ न्यामा. |
| मैसं २.४.१ | सन्ततं वसोर् धारां जुहोति। १२.३.२१,२७ |
| तैब्रा १.२.२.३,४ | सन्ततया अतिग्राह्या गृह्यन्ते। ७.३.२६ सन्ततय एते ग्रहा गृह्यन्ते अतिग्राह्याः परःसामसु। |
| तैसं ५.१.९ काठकसं ६.६ | सन्तापेन अग्निं जनयन्ति। १२.४.१७ यदा वा अग्निः सन्तप्यते अथ जायते। |
| वाराह १.३.१.२२ | सं ते तन्वा तनूः सृज्यताम् इति परिमार्ष्टि पुरोडाशम्। १०.१.५५ |
| तैसं १.३.८ | सं ते वायुर् वातेन गच्छतां, सं यजत्रैर् अङ्गानि गच्छन्ताम्, सं यज्ञपतिर् आशिषा गच्छताम्। २.१.४९ प्राणो वायुना। |
| षड् ४.४.४ | सन्दंशेन यथा दुरादानम् आदत्ते। १.४.५ |
| षड् ४.४.१,२ | सन्दंशेनाभिचरन् यजेत। १.४.५ |
| शांब्रा २.९ आप ६.४.७ | सन्धौ जुहोति ( अग्निहोत्रं )। ५.१.३३ सन्धौ होतव्यम् इति शैलालि ब्राह्मणो भवति। |
| बौधाध २.३.६.२३ | सन्ध्यायां मृगाः अपि न चरन्ति किमु पुनर्ब्राह्मणाः। १.१.३२ न प्रति सायं व्रजेत्। |
| तैसं, २.३.१२ | स पर्यदीर्यत। ३.४.३१ |

काठकसं १५.१० — सप्तदश आर्भवपवमानः । ५.३.३८ नवतिशतं स्तोत्रीयाः- अत्र ।

आश्व ४.१.६,७,८ — सप्तदश ऋत्विजः । ३.७.३८;८.२.३२ होता मैत्रावरुणोऽच्छावाको ग्रावस्तुत् । अध्वर्युः प्रतिप्रस्थाता नेष्टा उन्नेता । ब्रह्मा ब्राह्मणाच्छंसी आग्नीध्रः पोता । उद्गाता प्रस्तोता प्रतिहर्ता सुब्रह्मण्यः । एते अहीनैर् एकाहैर् याजयन्ति ।

तां २१.१४.८ — सप्तदश च पृश्नीन् उक्ष्णः इति चार्थो न वक्तव्यः प्रचयाद् एव गम्येत चतुस्त्रिंशत् एतानि कर्माणि चोद्यन्ते । तेषां सप्तदशानां पर्यग्निकरणान्ते उत्सर्गः क्रियते । सप्तदशसु यथाप्रकृति आलम्भनं न च उत्सृष्टानां कर्मान्तरं योगो युज्यते । ११.२.५६

कात्या ४.१.१० — सप्तदशदीक्षो वाजपेयः । १.४.७ ( यदा ज्यौतिष्टोमिको विध्यन्तः )

तां, २१.६.१ — सप्तदशानि पृष्ठानि । १.४.३

तैब्रा १.३.४.३ — सप्तदशप्राजापत्यान् पशून् आलभते । सप्तदशो वै प्रजापतिः प्रजापतेराप्त्यै शामास्तूपरा एकरूपा भवन्ति । २.२.२१; ४.१.३३; ५.१.८; ५.२.१; १०.४.६

आप १८.६.७ — सप्तदशप्राजापत्यान् पशून् संचिनुते, तान् पर्यग्निकृतान् उत्सृजते, ब्रह्मसाम्नि आलभते । ११.२.४९-५१ न्यामा.

तां २१.१४.७ — सप्तदशपृश्नीर् मारुतीर् उपाकरोति । ११.२.५५

कात्या १४.४.१३,१४ — सप्तदशरथान् ददाति । १०.३.७४-७५ न्यामा.

तैसं २.५.१० — सप्तदशवैश्यस्य अनुब्रूयात् । ( सामिधेनीः ) ६.६.३८

तैब्रा १.३.६.३ — सप्तदशशरावश्चरुः । १०.२.६४-६७ न्यामा.

कात्या १४.४.१३.१४ — सप्तदशसप्तदशकानि ददाति । १०.३.७५ अध्वर्यवे यजुर्युक्तं रथं ददाति । सर्वेभ्यः षोडशरथान् ।

तैसं २.५ १० — सप्तदश सामिधेनीर् अनुब्रूयात् । ३.६.९;१०.८.१७,१९

तैसं ६.३.७ — सप्तदशसामिधेनीर् अन्वाह । ८.४.१४

मैसं. १.७.४ — सप्तदशसामिधेन्यः कार्याः पुनराधाने ।

शांब्रा १.१ — सप्तदशसामिधेन्यो भवन्ति अध्वरकल्पायाम् । ६.१.३९;१०.७.३२ सप्तदशसामिधेनीका इष्टयः ।

तां २१.६.१ — सप्तदशानि पृष्ठानि । १.४.३;७.३.६

तैसं २.५.१० — सप्तदशानुब्रूयाद् वैश्यस्य । ६.६.३६ + सप्तदशो वै वैश्यः ।

तां ४.५ ५ — सप्तदशा भवन्ति । ७.३.२६ सर्वेषु स्तोत्रेषु सप्तदशस्तोत्रो भवति ।

तैब्रा १.२.२.१ — सप्तदशा भवन्ति । ७.३.२६ सप्त भवन्ति सन्तत्या अतिग्राह्या गृह्यन्ते ।

शत ३.६.४.२६ — सप्तदशारत्निर् वाजपेयस्य यूपो भवति । ३.१.८

आश्व ४.१.८ — सप्तदशावरसत्रम् आसीरन् । ६.२.१;६.३.२२;६.६.१ एते एव आहिताग्नयः, इष्टप्रथमयज्ञाः, गृहपतिसप्तदशा दीक्षित्वा समिध्य अग्नीन् तन्मुखाः सत्रम् आसते ।

तैब्रा १.३.३.२ — सप्तदशैते ग्रहा गृह्यन्ते द्वये प्राजापत्याः सोमग्रहाः सुराग्रहाश्च । १०.४.४ सप्तदशप्राजापत्या ग्रहा गृह्यन्ते सोमग्रहान् सुराग्रहांश्च गृह्णाति ।

तैसं ५.१.७ मैसं ३.१.७ — सप्तभिर् आ धुनोति । १०.५.१४ सप्तभिर् धूपयति ।

तैसं २.५.१० — सप्तदशो वै वैश्यः । ६.६.३७ हि

| | |
|---|---|
| तां २.१४.१ | सप्तभ्यो हिं करोति स एकया ( बृहत्या ) स तिसृभिः ( ककुब्भिः ) स तिसृभिः ( ककुब्भिः ) । ९.२.२८ |
| आप १०.२३.२ | सप्तमे पदे अध्वर्युर् अञ्जलिना गृह्णाति । ४.१.२५ |
| तैसं ७.२.२ | सप्तरात्रेण यजेत । १०.५.१ |
| गोपथ १.५.२३ | सप्त सोमसंस्थाः- अग्निष्टोमः, अत्यग्निष्टोमः, उक्थ्यः, षोडशी, अतिरात्रः वाजपेयः, अप्तोर्यामः । ३.६.४३ |
| तां. १५.११.५ | सफं साम- सफेन वै देवा इमान् लोकान् आप्नुवन् संपूर्वाद् आप्नोतेर् वर्णव्यावृत्त्या सफशब्दः प्रापणे । ९.२.२५/३ |
| सामसफं ६९२ ऋ ९.१०८.१<br>साम ६९३ ऋ ९.१०८.२ | पवस्व मधुमत्तम इन्द्राय सोम क्रतुवित्तमो मदः । महि द्युक्षतमो मदः ॥ यस्य ते पीत्वा वृषभो वृषायतेऽस्य पीत्वा स्वर्विदः । सुप्रकेतो अभ्यक्रमी-दिषोऽच्छा वाजं नैतशः ॥ प्रगाथं कृत्वा तृचे गीयते । ९.२.२५/३ |
| तैसं ६.६.११ | समयोऽध्युषिते सूर्ये षोडशिनं स्तोत्रम् उपाकरोति । ५.१.३५ विष्ठिते |
| तैसं २.३.७ | समन्तं पर्यवद्यति । ३.५.१.१६-१७ न्यामा. |
| पा २.१.१ | समर्थः पदविधिः । २.१.१६ तं. विग्रहवाक्यार्थाभिधाने समर्थः । |
| पा ४.१.८२ | समर्थानां प्रथमाद् वा ( तद्धितप्रत्ययः ) । २.१.१६ तं. |
| पा २.१.१ | समर्थानां हि पदानां समासो भवति । २.३.१ समर्थः पदविधिः । |
| शत ११.९.२.११ | समस्तं दाक्षिण्यं धेनुः । १०.३.५७ धेनुविधिर् श्रुति कृत्स्नस्य क्रतुदक्षिणस्य कार्ये भवति । |
| पा ३.४.२१,१८ | समानकर्तृकयोः पूर्वकाले । १.१.१ क्त्वा |
| मैसं १.६.८ | समानबर्हींषि भवन्ति । ११.४.१२,१४ |
| मशककल्पसूत्र | समानम् इतरं गवाम् ऐकाहिकेन । १.३.२४ तं. |
| मशककल्पसूत्र | समानम् इतरं ज्योतिष्टोमेन । १.३.२४ तं. |
| पा ७.१.२६ | न इतरात् छन्दसि अदड् स्वमोः (सु+अमोः) छन्दसि इतरत् न भवति । |
| षड् ४.३.७;४.४.१० | समानम् इतरत् श्येनेन । ७.१.१२,१३,१४,१५,१६ |
| तां १८.११.५ | समानम् वा एतद् यज्ञं विच्छिन्दन्ति यद् अभिषेचनीयस्य अवभृथम् अभ्यव-यन्ति । ११.२.६० |
| पा १.२.४२ | समानाधिकरण ( कर्मधारय ) समासस्तु बलीयान् । ६.१.५१ ( षष्ठीसमासात् कर्मधारयो बलीयान् । ) ३.३.२४-३१ न्यामा. |
| आप २.९.११ | समावप्रच्छिन्नाग्रौ दर्भौ अरत्निमात्रे विधृती कुरुतः । ३.८.३२ |
| आप १.११.७ | समावप्रच्छिन्नाग्रौ दर्भौ प्रादेशमात्रे पवित्रे कुरुतः । ३.८.३२ |
| तैसं ६.४.८ | स मित्रोऽब्रवीत् पयसा एव मे सोमं श्रीणन् । ९.४.४९ तस्मात् मैत्रावरुणं पयसा श्रीणन्ति । |
| तैब्रा ३.६.१.१,२ | समिद्धस्य श्रयमाणः पुरस्तात् ब्रह्म वन्वानो अजरं सुवीरम् । आरे अस्मदमतिं बाधमानः उच्छ्रयस्व महते सौभगाय ॥ १२.३.३६-३८ न्यामा. यूपोच्छ्रयणे मन्त्रः |
| तैब्रा ३.५.५.१ | समिधो अग्न आज्यस्य वियन्तु । तनूनपादग्न आज्यस्य वेतु । इडो अग्न आज्यस्य वियन्तु । बर्हिरग्न आज्यस्य वेतु । स्वाहा अग्निम् । स्वाहा सोमम् । स्वाहा अग्निम् । स्वाहा प्रजापतिम् । स्वाहा अग्निम् । स्वाहेन्द्राग्नी । |

स्वाहा इन्द्रम् । स्वाहा महेन्द्रम् । स्वाहा देवान् आज्यपान् । स्वाहा अग्निं होत्रा । ९.२.५९-६० न्यामा.

तैसं २.६.१ समिधो यजति, तनूनपातं यजति, इडो यजति, बर्हिर् यजति, स्वाहाकारं यजति । २.२.२; ३.३.२१; ४.१.४; ५.१.४; ९.२.५९; ११.१.५,८

तैब्रा ३.५.२.९ समिध्यमानवती– समिध्यमानो अध्वरे अग्निः पावक ईड्यः । शोचिष्केशस्तमीमहे ॥ ५.३.४

तैब्रा ३.५.२.३ समिद्धवती–समिद्धो अग्न आहुत देवान् यक्षि स्वध्वर । त्वं हि हव्यवाड् असि ॥

तैब्रा ३.६.१.३ धाय्या– पृथु पाजा अमर्त्यः घृतं निर्णीकस्वाहुतः । अग्निर् यज्ञस्य हव्यवाट् ॥

तैब्रा ३.६.१.३ तं सम्बाधो यतस्रुचः इत्था धिया यज्ञवन्तः । आ चक्रुर् अग्निमूतये ॥ ५.३.४

तैसं ६.६.२ समिष्टयजुर् जुहोति । २.२.३ यजूंषि

पा परिभाषा १०९ समुदायप्रसिद्धिर् अवयवप्रसिद्धेर् बाधिका एव समधिगता । ६.७.२२; ६.८.४२,४३

पा परिभाषा ११९ समुदाये वाक्यपरिसमाप्तिः । ३.१.१२

तैसं ७.५.६ समुपहूय भक्षणं सोमधर्मः । ८.२.३ समुपहूय भक्षयन्ति ( सोमं )।

शांब्रा २७.७ समूढं द्वादशाहम् उपयन्ति सर्वेषां कामानाम् आप्त्यै ।

आप ७.१.१७
काठक २६.३ समे जातम् अशाखाजं, बहुपर्णशाखम्, अप्रतिशुष्काग्रम्, असुषिरम्, अध्यावृत्तम् अघूर्णम्, ऋजुं वृक्षं यूपार्थं गृह्णाति । १०.२.७१,७२

तैसं ६.२.६ समे दर्शपूर्णमासाभ्यां यजेत । ४.२.२३;११.२.१,२,४,१५ एतद् वै प्रतिष्ठितं देवयजनं यत् सर्वतः समम् ।

तैसं ६.२.६ समे यजेत् । ११.२.२

तैब्रा ३.७.५.११ सं पत्नी पत्या सुकृतेन गच्छताम् । यज्ञस्य युक्तौ धुर्यावभूताम् । सञ्जानानो विजहतामरातीः दिवि ज्योतिर् अजरम् आरभताम् । ६.१.२१

पा १.४.३२ संप्रदानं च कर्मणा अभिप्रेयते । ४.२.१७ कर्मणा यम् अभिप्रैति स संप्रदानम् ।

पा १.४.३२ संप्रदानं च नाम कर्मणोऽपि ईप्सिततमाद् अभिप्रेततरम् । ९.१.६

पा २.३.१३ संप्रदानं हि चतुर्थी । ४.२.१७ चतुर्थी संप्रदाने ।

पा १.३.३६,१२ संमाननम्, उत्सर्जनम्, आचार्यकरणं, ज्ञानं, भृति– वेतनं, विगणनं– ऋणात् निर्यातनं, धर्मार्थं च व्ययः एतेषु नियः आत्मनेपदं स्यात् । ९.१.६

तैसं १.३.८ सं यजत्रैर् अङ्गानि गच्छन्ताम् । २.१.४९

ऋ ७.१०३.१ संवत्सरं शशयाना ब्राह्मणा व्रतचारिणः । वाचं पर्जन्यजिन्वितां प्रमण्डूका अवादिषुः ॥ १.३.२४ तं.

तां २५.१,२,३,४ संवत्सरसत्राणि आदित्यानाम् अयनम्, अङ्गिरसाम् अयनं, दृतिवातवतोऽयनम् । १.३.२ तं. कुण्डपायिनाम् अयनम् ।

तैब्रा १.१.६.७;९.१० संवत्सरस्य प्रतिमा द्वादशरात्रयः । ६.७.३९

तां ९.८.१३ संवत्सरे अरथीनि याजयेयुः । २.१.१७

तैसं ५.४.२ संवत्सरं वा एनं प्रतिष्ठायै नुदति योऽग्निं चित्वा न प्रतितिष्ठति पञ्च पूर्वश्चितयो भवन्ति अथ षष्ठीं चितिं चिनुते । ४.४.१४

गोभिलगृ २.२.२० — संवेष्टितं कटम् ( एवं जातीयकं वा अन्यत् ) यदा प्रवर्तयन्तीं वाचयेत् ' प्र मे पति यानः पन्थाः कल्पताम् ।

संस्तवे उभे बृहद्रथन्तरे कुर्यात् । ९.२.४९;१०.६.२४

तैब्रा १.४.६.२
तैसं १.८.१७ — संसृपां हवींषि—आग्नेयम् अष्टाकपालं निर्वपति हिरण्यं दक्षिणा (२) सारस्वतं चरुं वत्सतरी दक्षिणा (३) सावित्रं द्वादशकपालम् अपध्वस्तो दक्षिणा (४) पौष्णं चरुं श्यामो दक्षिणा (५) बार्हस्पत्यं चरुं शितिपृष्ठो दक्षिणा (६) ऐन्द्रम् एकादशकपालम् ऋषभो दक्षिणा (७) वारुणं दशकपालं महानिरष्टो दक्षिणा। सौम्यं चरुं बभ्रुर् दक्षिणा (८) त्वाष्ट्रम् अष्टाकपालं शुण्डो दक्षिणा (१०) वैष्णवं त्रिकपालं वामनो दक्षिणा । ४.५.६ न्यामा.

सत्या १७.३.२७ — संस्थापयत मे यज्ञम् । १०.२.५७

तैसं २.५.४ — संस्थाप्य पौर्णमासी वैमृधम् अनुनिर्वपति । ४.३.३२

गोपथ १.५.२३ — संस्था समाम्नाताः – अग्निष्टोमः उक्थ्यः षोडशी अतिरात्रः अत्यग्निष्टोमः वाजपेयः अप्तोर्यामः । सप्त सोमसंस्थाः । ३.६.४१;८.३.८

आश्व ६.११.१ — संस्थिते अग्न्याधेये अग्निहोत्रं जुहोति । १.४.९;२.२.१३,२३

शांब्रा १८.१४
तां १३.१२.१४,१५ — संस्थिते षडहे पृष्ठ्ये मधु आशयेद् घृतं वा । १०.६.२७,२९,३१,३२,३३; १०.६.२८,३०

तैसं ६.३.४ — संस्थिते सोमे प्रस्तरं प्रहरति स्वरुं च अवैशसाय । ११.३.८

षड् १.१.७
षड् १.१.७
लाट्या १.३.१६ — संस्थिते संस्थिते अहनि आग्नीध्रागारं प्रविश्य सुब्रह्मण्य सुब्रह्मण्याह्वानम् । ११.३.२८ प्रत्यहं सुब्रह्मण्याह्वानम् । उत्करे तिष्ठन् सुब्रह्मण्याम् आह । ( वेद्याः उद्धृतामृत्कटः उत्करः )

आप २१.११.१२,१३ — संस्थिते संस्थिते अहनि गृहपतिर् मृगयां याति, स तत्र यान् हन्ति तेषां तरसाः पुरोडाशाः सवनीया भवन्ति । ३.८.४२

तां ८.४.६,८ — संहितं साम स्वादिष्ठा वा देवेषु पशव आसन् मदिष्ठा असुरेषु ते देवा स्वादिष्ठया इति पशून् असुराणाम् अवृञ्जत । ९.२.२५

सामसंहितं ६८९ ऋ ९.१.१ — स्वादिष्ठया मदिष्ठया, पवस्व सोम धारया । इन्द्राय पातवे सुतः ॥

सामसंहितं ६९० ९.१.२ — रक्षोहा विश्वचर्षणि रभि योनिमयोहते । द्रोणे सधस्थ मासदत् ॥

साम ६९१ ९.१.३ — वरिवोधातमो भुवो मंहिष्ठो वृत्रहन्तमः । पर्षि राधो मघोनाम् ॥ गायत्रस्य तृच एव संहितस्यापि । ९.२.२५

ऐब्रा २.३ — स यदग्निषोमीयं पशुम् आलभते । ८.१.१२

छांउ ८.१२.६ — स यदि पितृलोककामो भवति सङ्कल्पाद् एव अस्य पितरः समुपतिष्ठन्ति, तेन पितृलोकेन संपन्नो महीयते । १.३.२० तं.

आप १२.२४.५ — स यदि राजन्यवैश्यं वा याजयेत् स यदि सोमं विभक्षयिषेत् न्यग्रोधस्तिभीर् आहृत्य ताः सम्पिष्य दधनि उन्मृज्य तम् अस्मै भक्षं प्रयच्छेत् न सोमम् । ३.५.२२,४७,४८;३.६.३६;१२.४.४४

शत १.८.१.११,२४ — स यो हैव विद्वान् इडया चरति इत्यभिधाय अथ प्रतिपद्यते इडोपहूतोपहूते इडोपास्माँ इडाह्वयताम् इडोपहूत सरस्वति देवनिदो नि बर्हय प्रजां विश्वस्य बृसयस्य मायिनः । उत क्षितिभ्योऽवनीरविन्दो विषमेभ्यो अस्रवो वाजिनीवति । ( बृसयस्य=बृहतः )

शत ११.१.४.१,२ स यदि अगृहीत हविर् अभ्युदियात् प्रज्ञातम् एव तद्, एषा एव व्रतचर्या यत् पूर्वेद्युर् दुग्धं दधि हविरातञ्चनं तत् कुर्वन्ति प्रति प्रमुञ्चन्ति वत्सान् तान् पुनरपाकुर्वन्ति । तान् अपराह्णे पर्णशाखया अपाकरोति । तद् यथैवादः प्रज्ञातम् आमावास्यं हविर् एवम् एव तद् ॥ ४.३.२

शत १३.४.९.३ सर्पाः सत्रम् आसत । १.१.३२ काद्रवेयो राजा तस्य सर्पा विश ते इमे आसत ।

मुण्डकउ १.१.६ सर्वगतत्वाद् आत्मनः । २.१.५ नित्यं विभुं सर्वगतं सुसूक्ष्मं तदव्ययं यद् भूतयोनिं परिपश्यन्ति धीराः ॥

तैसं ६.४.९ सर्वतः परिहारम् आश्विनं भक्षयन्ति, तस्मात् सर्वा दिशः शृणोति पुरस्ताद् ऐन्द्रवायवं भक्षयति । ३.५.२०,२१

तैसं ७.५.१४ सर्वपृष्ठेष्टिः– अग्नये गायत्राय त्रिवृते राथन्तराय वासन्ताय अष्टाकपालम् (१) इन्द्राय त्रैष्टुभाय पञ्चदशाय, बार्हताय ग्रैष्माय एकादशकपालः (२) विश्वेभ्यो देवेभ्यो जागतेभ्यः सप्तदशेभ्य वैरूपेभ्यो वार्षिकेभ्यो द्वादश-कपालः (३) मैत्रावरुणाभ्याम् आनुष्टुभाभ्याम् एकविंशाभ्यां वैराजाभ्यां शारदाभ्यां पयस्या (४) बृहस्पतये पाङ्क्ताय त्रिणवाय शाक्वराय हैमन्तिकाय चरुः (५) सवित्रे आतिच्छन्दसाय त्रयस्त्रिंशाय रैवताय शैशिराय द्वादशकपालः (६) अदित्यै विष्णुपत्न्यै चरुर् (७) अग्नये वैश्वानराय द्वादशकपालः (८) अनुमत्यै चरुः (९) काय एककपालः (१०) ।

तैसं ७.५.१५ सर्वपृष्ठेष्टिप्रयोगः– यो वा अग्नौ अग्निः प्रहियते यश्च सोमो राजा, तयोर् एष आतिथ्यं यद् अग्नीषोमीयः, अथ एष रुद्रो यश्चीयते यत् सञ्चिते अग्नौ एतानि हवींषि निर्वपेद् एष एव रुद्रो अशान्त उपोत्थाय प्रजां पशून् यजमानस्य अभिमन्येत यत् संचिते अग्नौ एतानि हवींषि निर्वपति भागधेयेन एवैनं शमयति, नास्य रुद्रो अशान्तः उपोत्थाय प्रजां पशून् अभिमन्यते दशहवींषि भवन्ति । ११.२.२३

तैसं ७.५.१४ सर्वपृष्ठेष्टिः ( प्रायश्चित्तम् ) । ११.२.२३

जैब्रा १.३५८ स यदि यज्ञः ऋक्तो भ्रेषं नीयात् 'भूः स्वाहा' इति गार्हपत्ये जुहवाथ, सैव तत्र प्रायश्चित्तिः । अथ यदि यजुष्टः 'भुवः स्वाहा' इति आग्नीध्रे जुहवाथ । अथ यदि सामतः 'स्वः स्वाहा' इति आहवनीये जुहवाथ । अथ यदि अनुपस्मृतात् 'भूर् भुवः स्वः स्वाहा' इति आहवनीये जुहवाथ ।

शांब्रा ६.१२ अथ यद्धि ऋचि उल्बणं स्खलितं वा स्यात् चतुर् गृहीत्वा आज्यं गृहीत्वा गार्हपत्ये आहुतिं जुहुयात् 'भूः स्वाहा' इति । यदि यजुषि उल्बणम् अन्वाहार्यपचने 'भुवः स्वाहा' इति । यदि साम्नि उल्बणं स्यात् आहवनीये 'स्वः स्वाहा' इति जुहुयात् । यदि अविज्ञातम् उल्बणं स्यात् आहवनीये 'भूर् भुवः स्वः स्वाहा' इति जुहुयात् ।

| | |
|---|---|
| छांउ ४.१७.४-६ | तद् यदि ऋक्तो रिष्येत् 'भूः स्वाहा' इति गार्हपत्ये जुहुयात् । अथ यदि यजुष्टो रिष्येद् 'भुवः स्वाहा' इति दक्षिणाग्नौ जुहुयात् । अथ यदि सामतो रिष्येत् 'स्वः स्वाहा' इति आहवनीये । |
| शत ११.५.८.७ | यदि ऋक्तो 'भूर्' इति चतुर्गृहीतम् आज्यं गृहीत्वा गार्हपत्ये जुहुथ । यदि यजुष्टो 'भुवः' इति आग्नीध्रीये, यदि सामतः 'स्वर्' इति... आहवनीये जुहुथ । ११.२.२३ |
| मैसं १.४.८,३७ | सर्वप्रायश्चित्तम्– अयाश्च अग्नेऽसि अनभिशस्तिश्च इति । अया वै नाम एषा अग्नेः प्रिया तनूः । अया मर्या धैर्येण इति खलु वा आहुः । यच्चैव अत्र यज्ञे क्रियते, यच्च न, यां चैवात्र यज्ञस्य प्रायश्चित्तिं विद्मः यां च न तस्य एषा उभयस्य प्रायश्चित्तिः । १२.१.४ |
| जैब्रा १.२७८ | सर्वप्रैषाणाम् आध्वर्यवत्वम् । ३.७.४३ तं. |
| मैसं २.२.२ | सर्वं ब्रह्मणे परिहरति । १०.२.९,१८ परिहर्तवै |
| कात्या १३.२.२ | सर्वर्त्विज उपवसन्ति । १०.६.५३ |
| सत्या १७.२.३ | सर्वस्तोमे सर्वा ऋचः सर्वाणि यजूंषि प्रयुज्येरन् । २.१.२३ |
| तैसं ५.४.१२ | सर्वस्तोमोऽतिरात्र उत्तमम् अहर् भवति सर्वस्य आप्त्यै सर्वस्य जित्यै, सर्वम् एव तेन आप्नोति सर्वं जयति । |
| तैब्रा ३.३.५ | सर्वस्मै वा एतद् यज्ञाय गृह्यते यद् ध्रुवायाम् आज्यम् । ३.५.६; ४.२.१४; १०.८.४८ |
| शत १२.९.२.११ | सर्वस्य क्रतुदक्षिणस्य निर्वर्तिका धेनुः । १०.३.५७ |
| तां ६.७.१५ | सर्वस्वदानम्– प्रतिहर्तुर् अपच्छेदे । ६.५.५३ |
| तां ६.७.१४ | अदाक्षिण्यम् - उद्गातुर् अपच्छेदे । ६.५.५३ दक्षिणाविरहितम् |
| तां १७.१२.१,६ | सर्वस्वारः क्रतुः शुनःकर्णो अग्निष्टोमः, मरणकामो ह्येतेन यजेत, यः कामयेत 'अनामयः स्वर्गं लोकम् इयाम्' । १०.२.५७ |
| तां १७.१२.१ | सर्वस्वारात् । ५.३.३६ सूत्रम्–यथा परेषु सर्वस्वारात् । |
| मैसं १.१०.७ | सर्वहुतं जुहोति । ७.३.२६ |
| सत्या १७.२.३ | सर्वा ऋचः, सर्वाणि यजूंषि, सर्वाणि सामानि वाचस्तोमे पारिप्लवं शंसति । २.१.२३ |
| सत्या १.१.३२ | सर्वानुवचनानां हौत्रसमाख्यानम् । ३.७.४३ तं. |
| आप १४.२३.१ | सर्वाभ्यो वा एष देवताभ्यः सर्वेभ्यः पृष्ठेभ्यः आत्मानम् आगुरते यः सत्राय आगुरते । स विश्वजिता अतिरात्रेण सर्वपृष्ठेन सर्ववेदसदक्षिणेन यजेत । सर्वाभ्य एष देवताभ्यः सर्वेभ्यः पृष्ठेभ्य आत्मानं निष्क्रीणाति । ६.४.३२ |
| तैब्रा १.४.७.७<br>आप १४.२३.१ | सर्वाभ्यो वा एष देवताभ्यः सर्वेभ्यः पृष्ठेभ्य आत्मानं निष्क्रीणीते । ६.४.३३ |
| छांउ ८.१२.६ | स सर्वांश्च लोकानाप्नोति सर्वांश्च कामान् आप्नोति । १.३.२७ तं. |
| आप २.९.१४ | सर्वा वा स्रुचः । १.४.२३ प्रस्तरे जुहूम् आसादयति सर्वा वा स्रुचः । |
| गोभिलगृ १.९.१५<br>द्राह्यायण २.२.८ | सर्वासु तिथिषु अमावास्या कार्या पूर्वपक्षे । आ पौर्णमास्या अमावास्या नात्येति । १.३.१४ पूर्वपक्षो दर्शाख्यः । |
| कात्या १३.२.२ | सर्वे ऋत्विज उपवसन्ति । ३.८.११ |

| | |
|---|---|
| तां १६.३.१ | सर्वेभ्यः ( कामेभ्यः ) ज्योतिष्टोमः । ४.३.२६ |
| वाराह १.२.१.१ | सर्वेभ्यः कामेभ्यो दर्शपूर्णमासौ । ४.३.२४ |
| आप ३.१४.९ | |
| आप १४.२३.१<br>तैसं २.६.६ | सर्वेभ्यो वा एष देवेभ्यः सर्वेभ्यश्छन्दोभ्यः सर्वेभ्यः पृष्ठेभ्यः आत्मानम् आगुरते यः सत्राय आगुरते, स विश्वजिता अतिरात्रेण सर्वपृष्ठेन सर्वस्तोमेन सर्ववेदसदक्षिणेन यजेत । ४.३.११ |
| शत २.५.२.३९ | सर्वेभ्यो हविर्भ्यः समवद्यति । ३.५.१,१०; ४.१.३२ अग्नये स्विष्टकृते अनुब्रूहि इति स अध्वर्युः सर्वेषाम् एव सर्वेषां हविषाम् उत्तरार्धात् सकृत् सकृत् अवद्यति । |
| तैसं ६.६.४ | सर्वे वा अन्ये यूपाः पशुमन्तः उपशय एव अपशुः । ७.३.३३-३४ न्यामा. |
| तैसं ३.५.९ | सर्वेषां वा एतद् देवानां रूपं यद् एष ग्रहो ( दधिग्रहो ) यस्य एष गृह्यते सर्वाणि एव एनं रूपाणि पशूनाम् उपतिष्ठन्ते । ४.४.१० |
| सत्या १७.३.२० | सर्वेषां सूक्तानां वाचस्तोमे अर्थवत्ता । २.१.२३ त्रयो वाचःस्तोमास्तेषु सर्वस्तोमोऽतिरात्रः तस्मिन् सर्वा ऋचः सर्वाणि यजूंषि सर्वाणि सामानि शंसति । |
| पा १.२.६३ वा | सर्वो द्वन्द्वो विभाषया एकवद् भवति । १०.४.१ तं. |
| लाट्या २.६.१,२ | सर्वौदुम्बरी वेष्टयितव्या । १.३.३ औदुम्बर्याः सर्ववेष्टनम् । विष्ठुतेन वसनेन परिवेष्ट्य । |
| मैसं ३.९.५ | सवनीयपशोर् वपया प्रातःसवने प्रचरन्ति, पुरोडाशेन माध्यन्दिने, अङ्गैस्तृतीये सवने । ११.२.६३ |
| मैसं ३.९.५ | सवनीयः पशुः । ३.६.१८ सवनीयपशोर् वपया । |
| शत ४.२.५.१५ | सवनीयाः पुरोडाशाः । १२.२.१७ अथ सवनीयैः पुरोडाशैः प्रचरन्ति । |
| आप १२.१८.१२ | सवनीये पशौ त्रिवृता यूपं परिवीय । ११.३.४ |
| तैसं ६.६.११ | सवने सवने गृहीतव्यः ( षोडशी ) । १०.५.४४ सवने सवने अभिगृह्णाति ( षोडशिनम् ) । |
| शत १४.६.९.२८ | स वा अयम् आत्मा अशीर्यो न हि शीर्यते । १.१.५ |
| कात्या १८.६.१९ | स वा अहरहर् युनक्ति, अहरहर् विमुञ्चति । ११.३.२० सूत्रम्– अहर्गणे च प्रत्यहं स्यात् तदर्थत्वात् । एके अहरहर् युञ्जन्ति अहरहर् विमुञ्चन्ति । |
| तैसं १.१.४ | सवितुः प्रसवे अश्विनोर् बाहुभ्यां पूष्णो हस्ताभ्याम् अग्नये जुष्टं निर्वपामि । २.१.४७ |
| काठकसं ३१.७ | सवितृप्रसूत इति एवैनं देवताभिः संवपति । १०.१.५२ देवताभ्यः |
| काठकसं १५.५ मैसं २.६.६ | सवित्रे प्रसवित्रे सतीनाम् अष्टाकपालं निर्वपति । ११.३.१५ |
| आप १४.२३.१ | स विश्वजिता अतिरात्रेण सर्वपृष्ठेन सर्वस्तोमेन सर्ववेदसदक्षिणेन यजेत् । ४.३.१० |
| शत ३.८.२.२५ | स वै ध्रुवाम् एव अग्रे अभिघारयति, ततो ( तस्यै ) हि प्रथमौ आज्यभागौ यक्ष्यन् ( होष्यन् ) भवति । ३.५.५; ५.४.४ |
| तां १२.१३.१ | स वै षोडशी नाम यज्ञोऽस्ति । ३.४.४ तं. इन्द्रो बृहत्साम अब्रवीत् । षोडशी ते अयं यज्ञक्रतुरस्तु । |

| | |
|---|---|
| | स सर्वांश्च लोकान् आप्नोति, सर्वांश्च कामान् । १.३.२७ तं. |
| छांउ ८.१२.६ | स सोमेन इष्ट्वा अग्नीषोमीयो भवति । १०.८.६२-७० न्यामा. आग्नेयो वै |
| तैसं ६.५.४; २.५.६ | ब्राह्मणो देवतया स सोमेन । |
| | स स्तोत्रशस्त्रः षोडशी । १०.५.५१,५२ |
| मैसं ४.७.६ | स स्तोभस्वरकालाभ्यासविकारायां, हिङ्कारप्रणवप्रस्तावोद्गीथप्रतिहारोपद्रव- |
| छांउ २.१०.१-४ | निधनवत्याम् ऋचि साम शब्दोऽभियुक्तैर् उपचर्यते । ७.२.१;९.२.३५ |
| तैसं २.३.१२ | स स्वां देवताम् आर्च्छत् । ३.४.३१ |
| आप ३.१६.१७ | सहकुम्भीभिर् आक्रमन् आह ( इन्द्राय अनुब्रूहि, आश्रावय इन्द्रं यज इति प्रैषौ ) । ३.५.१३ न्यामा. |
| आश्वगृ १.६.१ | सह धर्मश्चरितव्यः । ६.१.१७ |
| काठकसं ३६.६ | सह पत्न्या जुहोति । ८.४.२४ स्त्रीपुंसौ जुहुतः । अयज्ञो वा एष योऽ- |
| तैब्रा २.२.२.६ | पत्नीकः । |
| तैब्रा १.३.४.५ | सह पशून् आलभते ( वाजपेये ) एकधा वपा जुहोति । सह पशून् आलभते |
| कात्या २२.३.२८ | ( साद्यस्के ) श्येने च । ३.८.३९ |
| शत १.२.२.४ | सह पिशन्ति । ११.१.६५ |
| पा २.३.६ | सहयुक्ते अप्रधाने तृतीया । ६.४.४३ सहशाखया प्रस्तरं प्रहरति । |
| पा २.२.२८ | सहयोगे यत्र तृतीया तस्य गुणभावः ( शाखया ) यत्र द्वितीया ( प्रस्तरं ) तस्य प्राधान्यम् । |
| वाराह १.३.६.८ | सह शाखया प्रस्तरं प्रहरति । ४.२.१०; ६.४.४३ सहशाखया आहवनीये प्रस्तरं प्रहरति । |
| मैसं २.६.६ | सह श्रपयति । ६.५.३ तं. अभ्युदयेष्टौ |
| आप १८.१२.२ | सह सोमौ क्रीणाति ( अभिषेचनीयदशपेययोः ) । ११.२.५८ |
| तां १६.८.३,६ | सहस्रं दक्षिणा सहस्रं स्तोत्रीयाः । यावद् अस्य सहस्रस्य उत्तरोधरा गौर् गवि प्रतिष्ठिता तावद् अस्मात लोकात् असौ लोकः । ३.३.४९ |
| तैसं ७.१.७ | सहस्रतमीं च दक्षिणाम् एवम् आह एतानि ते नामानि । १०.३.४९ इडे रन्ते अदिते सरस्वति प्रिये प्रेयसि महि विश्रुति इति एतानि ते अघ्निये नामानि सुकृतं मा देवेषु ब्रूतात् । |
| ऋ ८.२१.१८ | सहस्रमयुता ददत् । २.१.३३ चित्र इद् राजा राजका इदन्यके यके सरस्वती- मनु । पर्जन्यइव ततनद्धि वृष्ट्या सहस्रमयुता ददत् ॥ |
| तैसं २.३.१४ | सहस्राक्षो गोत्रभिद् वज्रबाहुर् अस्मासु देवो द्रविणं दधातु । ९.१.६-१० न्यामा. |
| मनुस्मृ ९.२७ | सहापत्यम् उत्पादयितव्यम् । ६.१.१७ उत्पादनम् अपत्यस्य प्रजां प्रजन- |
| आश्वगृ १.७ | यावहै । |
| कात्या १४.२.१५ | सहालभते ( वाजपेये ) । ११.१.३५ वाच उत्तमम् एके । सप्तदश पशुप्राजा- पत्यम् एके आलभन्ते उपांशु । |
| शत १.२.२.४ | सहावघ्नन्ति । ११.१.६६ |
| पा २.२.२८ काशिका | सहैव दशभिः पुत्रैर् भारं वहति गर्दभी । ३.२.३४ न्यामा. |
| तैसं ६.२.५ | सहैव अह्ना संस्थापयति । ३.३.१५ तिस्र एव साह्नस्य उपसदो द्वादशा- |
| तां ३.३.१५ | हीनस्य । साह्नशब्देन तावत् अह्ना समाप्यमानत्वात् सहैव अह्ना संस्थापयन्ति । |

| | |
|---|---|
| तां १८.१.२१,२२ | स हि अनिरुक्तः स ब्रह्मणे देयः । १०.३.६५ |
| तैसं २.५.४ | साकंप्रस्थायीयेन यजेत पशुकामः । २.३.५,११ |
| आप ३.१६.१७ | साकंप्रस्थायीयेन यजेत आज्यभागाभ्यां प्रचर्य आग्नेयेन च पुरोडाशेन अग्नीधे स्रुचौ प्रदाय सह कुम्भीभिर् अभिक्रामन् आह इन्द्राय अनुब्रूहि, आश्रावय इन्द्रं यज । १०.८.४३,५५,६१ |
| तां १६.१३.९ | साण्डस्त्रिसंवत्सरः सोमक्रयणः स्पर्धमानानाम् इति पूर्वस्मिन् साद्यस्के आम्नाय उत्तरस्मिन् ( त्रिवत्सः ) । ८.१.१९;९.१.४२;१०.३.६० |
| आप २२.४.१३ | स्त्री गौः सोमक्रयणी निवृत्ता ह्येषा स्पर्धिता । |
| तां १६.१२.६ | साद्यस्को यागः– सद्यःक्रियाः वा, अनुक्रियाः वा, परक्रिया वा स्वर्गकामाः । |
| तां १६.१२-१६ | साद्यस्काः सहस्राः = सहस्रदक्षिणाः । ८.१.१९ |
| पा १.४.४२ | साधकतमं करणम् । १.३.२७ तं. |
| मैसं ३.९.५ (१५) | साध्या वै देवाः । ७.३.१८ ( इति आरभ्य अग्नौ श्रूयते निर्मन्थ्येन इष्टकाः पचन्ति ) ते देवा अग्निं मथित्वा अग्नौ अजुहवुः । |
| तैसं १.८.४ | सांतपनस्य माध्यन्दिने निरुप्यते । ११.४.१६ सांतपनेभ्यो मध्यन्दिने चरुम् । |
| तैसं १.१.१ | सांनाय्यधर्माः-शाखाहरणं, गवां प्रस्थापनम्, गवां प्रस्नावनं इत्यादयः। ३.१.७ |
| ऐब्रा ३.२३ | साम तृचे गीयते । १.१.१ न्यामा. |
| आप १८.३.१ | सामभिर् युक्तं रथम् उद्गात्रे ददाति । १०.३.७५ |
| द्र.चरणव्यूह खण्ड ३ | सामवेदे सहस्रं गीत्युपायाः । ९.२.२९ |
| साम १८२८ | नमः सखिभ्यः पूर्वसद्भ्यो नमः साकंनिषेभ्यः । युञ्जे वाचं शतपदीम् ॥ |
| साम १८२९ | युञ्जे वाचं शतपदीं गाये सहस्रवर्तनि । गायत्रं त्रैष्टुभं जगत् ॥ |
| साम १८३० | गायत्रं त्रैष्टुभं जगद् विश्वा रूपाणि संभृता । देवा ओकांसि चक्रिरे ॥ ९.२.२९ |
| तैसं ७.५.८ | सामसु श्लोकेन पुरस्तात् स्तुवते । १०.४.१६ श्लोकेन पुरस्तात् सदसः स्तुवन्ति । |
| तैसं २.५.१० | सामिधेनीर् अनुब्रूयात् । २.१.२१ |
| तैसं ६.३.७ | सामिधेनीर् अन्वाह । ५.३.४;१२.१.४० |
| तैसं २.५.१० | सामिधेन्यः सप्तदश भवन्ति । १०.८.१९ सप्तदशानुब्रूयाद् वैश्यस्य, सप्तदशो वै वैश्यः । |
| तैसं ३.२.७ | सा मे सत्याशीर् यज्ञस्य भूयाद् । २.१.२९ |
| लाट्या २.१.१४ | साम्ने साम्ने हिंकुर्युः । १.४.३ न्यामा. |
| तां ९.३.१ | साम्युत्थाने विश्वजिता यजेरन् । ६.५.२७ यदि सत्राय दीक्षेरन् अथ साम्युत्तिष्ठेत् सोमम् अपभज्य विश्वजिता अतिरात्रेण (एकाहेन) यजेत सर्ववेदसेन सर्वस्माद् एव दीक्षते सर्वम् आप्नोति । |
| तैसं २.५.६ | सायं जुहोति । ५.१.३३ |
| शांब्रा २.७ शत २.३.१.२ | सायम् अस्तमिते जुहोति । ५.१.३३ सायं अस्तमिते पुरा तमसो जुहुयात् । |
| सत्या १७.४.३८ | सायुज्यकामौ यजेयाताम् । १०.२.४१ तं. |
| आप ४.१०.१ | सारस्वतानुमन्त्रणानि । ९.३.१५ सरस्वत्या अहं देवयज्या वाचम् अन्नाद्यं पुषेम । |
| मैसं ३.६.८ | सारस्वतीम् अनूच्य वाग्यन्तव्या । १२.४.१ |
| मैसं ३.९.५ | सारस्वती मेषी अतिरात्रे आलभ्या, वाग्वै सरस्वती । ३.६.१८ |
| तैसं २.४.६ | सारस्वतौ भवतः एतद् वै दैव्यं मिथुनम् । ५.१.१४ |

| | |
|---|---|
| | सावनः पशुः । १२.१.१० |
| आप १२.१८.१३ | सावनाः पुरोडाशाः । १२.१.११ |
| शत ४.२.५.१५<br>तैसं ३.४.३ | सा वा एषा सर्वदेवत्या यद् अजा वशा, वायव्यम् आलभेत भूतिकामः। २.१.१५; १०.४.१७, २९ |
| | सावित्राणि जुहोति प्रसूत्यै । ५.२.२२ न्यामा. |
| तैसं ५.१.१ | सावित्राणि होष्यन्तः संनिवपेरन् । ६.६.३२; १०.६.४९ |
| वाराह १.२.१.५ | सावित्रानुमन्त्रणानि। ९.३.१५ सरस्वत्या अहं देवयज्या वाचम् अन्नाद्यं पुषेम। |
| आप ४.१०.१<br>तैसं ३.२.५ | सावित्रियर्चा । २.१.३७ न्यामा. देवो वः सविता पुनातु अच्छिद्रेण पवित्रेण वसोः सूर्यस्य रश्मिभिः । |
| वैशेषिकसूत्र २.१.८ | सास्नादिमान् गौः विषाणी ककुद्वान् बालधिः इति गोत्वे दृष्टं लिङ्गम्। १.१.२,५ न्यामा. प्रान्ते वालधिः । |
| पा ४.२.२४-३२ | सा अस्य देवता । ५.४.१९ |
| पा ४.२.३३ | आग्नेयः– अग्नेर् ढक् । ५.४.१९ आग्नेयो वै ब्राह्मणो देवतया । |
| पा ४.२.३२ | अग्नीषोमीयः –अग्नीषोमाभ्यां यद् । ५.४.१९ स सोमम् इष्ट्वा अग्नीषोमीयो भवति अग्नीषोम्यम् । |
| तैसं ५.६.८ | साहस्रं प्रथमं चिन्वानश्चिन्वीत द्विसाहस्रं द्वितीयं त्रिसाहस्रं तृतीयम्। ४.३.४ |
| तां १६.८-११;१६.१२-१६ | साहस्राः साद्यस्क्राः ( निकायिनः – निकाय इति सङ्घातः – औत्तराधर्येण अवस्थितः । ) ४.१.१९ |
| तैसं ६.२.५ | साह्नशब्देन तावत् अह्ना समाप्यमानत्वात् सहैव अह्ना समापयन्ति। ३.३.१५ तं. तिस्र एव साह्नस्य । |
| पाम १.१.१.१-३ | सिद्धे शब्दार्थसम्बन्धे, लोकतो अर्थप्रयुक्ते शब्दप्रयोगे शास्त्रेण धर्मनियमः क्रियते । १.३.२४ तं. |
| तैब्रा १.८.५.३ | सीसेन क्लीबात् क्रय्या सुरा । ८.२.४ |
| ऋ १०.७५.९ | सुखं रथं युयुजे सिन्धुरश्विनं तेन वाजं स निषदस्मिन्नाजौ । महान् ह्यस्य महिमा पनस्यतेऽदब्धस्य स्वयशसो विरप्शिनः । ९.१.६ |
| तां १०.१३.४ | सुत्याकालम् अञ्जनम् अभ्यञ्जनं च सत्रे । १०.४.१० गोग्गुल्वेन प्रातःसवने समञ्जते अमि वा अञ्जते पैलुदारवेण माध्यन्दिने सवने सौगन्धिकेन तृतीये सवने । ( तां–सौगन्धिकेन माध्यन्दिने पैलुदारवेण तृतीयसवने ।) |
| ऋ ८.६९.१२ | सुदेवो असि वरुण यस्य ते सप्त सिन्धवः । अनुक्षरन्ति काकुदं सूर्म्यं सुषिरामिव । १.३.२४ तं. |
| पा ७.१.३९ वा | सुपां सुलुक् इत्यादिना प्रथमाद् द्विवचनस्य 'डा' आदेशः । उभा यन्तारौ 'उभौ' इति प्राप्ते । |
| पा १.४.१०३ | सुपः– सुपश्च त्रीणि त्रीणि पदानि एकश एकवचनद्विवचनबहुवचनसंज्ञानि भवन्ति । १.३.२४ |
| आप १.१०.२ | सुपिप्पलाभ्यस्त्वा ओषधीभ्यः इति कण्डूयने मन्त्रः। ११.४.४९-५० न्यामा. |
| पा २.४.७१,५८ | सुपो धातुप्रातिपदिकयोः (७१)। लुक् (५८) सुपो विभक्तेः धातुसंज्ञायाः प्रातिपदिकसंज्ञायाश्च लुग्भवति। पुत्रीयति, कष्टश्रितः राजपुरुषः।१.३.२४ तं. |
| पा १.४.१४ | सुप् तिङन्तं पदम् । ३.१.१४ तं. |

षड् १.१.७ सुब्रह्मण्यः सुब्रह्मण्याम् आह । ३.७.२२

तैब्रा १.१२.३,४ सुब्रह्मण्यनिगदः । सुब्रह्मण्यों सुब्रह्मण्यों सुब्रह्मण्योम् । इन्द्राऽऽगच्छ, हरिव आगच्छ । मेधातिथेः मेष । वृषणश्वस्य मेने । गौरावस्कन्दिन् अहल्यायै जार । कौशिक ब्राह्मण । गौतम ब्रुवाण ॥ ९.१.४२,४३

शत १३.७.१.३ सुब्रह्मण्या अग्निष्टुत्याग्नेयी भवति, इतरेषु ऐन्द्री । १२.२.२२ तस्य आग्नेयाग्रहाः आग्नेय्यः पुरोरुचः सर्वम् आग्नेयम् भवति । सुब्रह्मण्यायाः पञ्चदशरात्रे ऐन्द्र्याः भूयस्त्वाद् अग्निष्टुति ऐन्द्री सुब्रह्मण्या एव कार्या-तत्र सूत्रम्-विप्रतिषिद्धधर्माणां समवाये भूयसां स्यात् सधर्मत्वम् । १२.२.२२

लाट्या १.३.२-४ सुब्रह्मण्याह्वाने 'देवा ब्रह्माणः' इति औपवसथ्येऽहनि । ११.४.५३

तैसं २.५.५ सुमना नामेष्टिः– द्वे एव यजते, यज्ञमुखम् एव पूर्वया आलभते यजते उत्तरया देवता एव पूर्वया अवरुन्धे इन्द्रियम् उत्तरया देवलोकम् एव पूर्वया अभिजयति मनुष्यलोकम् उत्तरया भूयसी यज्ञक्रतून् उपैति, एषा वै सुमना नामेष्टिर् यमद्येजानं पश्चात् चन्द्रमा अभ्युदेति अस्मिन्नेव अस्मै लोकेऽर्धुकं भवति । ११.२.२३

तैब्रा १.८.५.४ सुराग्रहाः ऐष्टिकधर्माः, हविःसामान्यात् । ८.२.१ औषधविकृतिः सुरा ।

मनुस्मृ ११.९४ सुरा न पातव्या । १.३.३३ तं. गौडी पैष्टी च माध्वी च विज्ञेया त्रिविधा सुरा । यथैवैका तथा सुरा न पातव्या द्विजोत्तमैः ॥

मनुस्मृ ११.९३ सुरा न पेया । ६.२.२२ तं. सुरा वै सलमन्नानां पाप्मा च मलमुच्यते । तस्माद् ब्राह्मणराजन्यौ वैश्यश्च न सुरां पिबेत् ॥

आप १.१२.३ सुराया यीहि इति अनुवषट्करोति । ८.२.२

तैब्रा २.२.४.५ सुवर्णम् एव भवति, दुर्वर्णो अस्य भ्रातृव्यो भवति (सुवर्णं भार्यम्) । ३.४.२४

तैब्रा २.२.४.५ सुवर्णं भार्यम् । ३.४.२३

शत ३.२.१.१६ सुवाससा भवितव्यम् रूपम् एव बिभर्ति । ३.४.२० सुवासा एवं बुभूषेत् ।

तैब्रा ३.७.५.२ सुशेवं कल्पयामि...तस्मिन् सीद । ३.३.१४

मैसं ३.१०.२ सुषिरो वै तर्हि पशुर् यर्हि वपाम् उत्खिदति, यद् व्रीहिमयः पुरोडाशो भवति अपिधानाय असुषिराय । ६.८.४१;१२.२.८

आप ३.६.६ सूक्तवाक एव याज्या प्रस्तरं आहुतिः । ६.४.४ तं. अध्वर्युः प्रस्तरं प्रहरति अनूच्यमाने अनुवाके 'मरुतां पृषतयः' ॥

आप ३.६.६ सूक्तवाकेन प्रस्तरं प्रहरति । ३.२.११,१५,१६,१८;३.३.१४;६.२.९;९.१.१४

अमर १.३.२८ सूर्य आदित्यो भास्करः सविता दिवाकरः इति सूर्यस्य अभिधानानि । ७.३.५४ सूरसूर्यार्यमादित्यद्वादशात्मदिवाकराः । भास्कराहस्करब्रध्नप्रभाकर-विभाकराः ॥ भानुर् हंसः सहस्रांशुस्तपनः सविता रविः ॥

तैसं ३.६.६.२ सूर्यं चक्षुर् गमयतात्, वातं प्राण अन्ववसृजतात् । ९.३.२७

तैआ ३.४ सूर्यं ते चक्षुः, वातं प्राणः, द्यां पृष्ठं, अन्तरिक्षम् आत्मा, अङ्गैर् यज्ञं, पृथिवीं शरीरैः इति षड् होतृ मन्त्राः । ३.७.१२ तं.

उहः तैसं १.१.४ सूर्याय जुष्टं निर्वपामि । ९.३.१-२ न्यामा. अग्नये जुष्टं निर्वपामि इति मंत्राद् ऊहितो मन्त्रः ।

तैब्रा २.१.९.२ सूर्यो ज्योतिर् ज्योतिः सूर्यः स्वाहा इति प्रातर् अग्निहोत्रं जुहोति । १.२.१२

| | |
|---|---|
| ऋ १०.१०६.६<br>निरु १३.५ | सृण्येव जर्भरी तुर्फरीतू। १.२.३८ केषांचित् मन्त्राणां अशक्यम् एव अर्थो वेदितुम्। निगमनिरुक्ते व्याकरणवशेन धातुतो अर्थः कल्पयितव्यः– सृण्येव जर्भरी तुर्फरीतू– आदीनि अश्विनोर् अभिधानानि। सृणिः भर्ता च हर्ता च, जर्भरी भर्तारौ, तुर्फरीतू = हन्तारौ। |
| तैसं ५.३.४ | सृष्टीर् उपदधाति। १.४.२३ |
| मैसं १.१.७ | सैषा अध्वरकल्पा नामेष्टिः– आग्नावैष्णवं प्रातर् अष्टाकपालं निर्वपेद् सारस्वतं चरुं बार्हस्पत्यं चरुं, आग्नावैष्णवम् एकादशकपालं माध्यन्दिने सारस्वतं चरुं बार्हस्पत्यं चरुं, आग्नावैष्णवं द्वादशकपालं अपराह्णे सारस्वतं चरुं बार्हस्पत्यं चरुं यस्य भ्रातृव्यः सोमेन यजेत। ११.२.१९,२० |
| तैसं ३.१.१ | सोऽकामयत प्रजाः सृजेय। २.१.३२ |
| तैसं २.६.३ | सोऽग्नयेऽध्रियत। ८.१.२७-३१ न्यामा. |
| तैब्रा ३.१.३.१ | सोऽनु जुहोति अग्नये स्वाहा कृत्तिकाभ्यः स्वाहा। ५.२.२९;१०.४.१ सोऽत्र |
| तैसं २.६.१० | सोऽब्रवीत् किं मे प्रजायाः। ३.४.१७ (स = शंयुः) |
| तैसं ६.४.८ | सोऽब्रवीद् वरं वृणै, पयसा एव मे सोमं श्रीणात्। ९.४.४९ |
| तैसं ६.१.१० | सोमं क्रीणाति। ६.८.२६ अजया क्रीणाति सोमं, हिरण्येन धेन्वा वाससा क्रीणाति। |
| तैब्रा ३.५.६.१ | सोम गीर्भिष्ट्वा वयं वर्धयामो वचोविदः। ३.१.२३ न्यामा. |
| तैब्रा १.३.३.२ | सोमग्रहाः सुराग्रहाश्च। १०.४.३-५ न्यामा. |
| तां १८.३.१० | सोमचमसो दक्षिणा। १०.४.७१,७३ |
| तैसं ६.१.५;६.४.४<br>शत २.४.४.२३<br>आप ८.३.१२ | सोमधर्माः– क्रयः, मानम्, उपावहरणम्, अभिषवः, अनुवषट्कारं, समुपहूय-भक्षणम्। ३.६.१५;८.२.२७ |
| ऐब्रा ३.१३ | सोमप्रवहणीयं नाम सूक्तम्। ९.१.२० |
| मैसं २.१.१३ | सोमपीथेन वा एष व्यृध्यते यः सोमं वमति। ३.४.३६ |
| तां ९.३.१ | सोमं अपभज्य विश्वजिता यजेरन्। ६.५.२५ |
| तैब्रा १.४.७.४ | सोमं अभिषुणोति। ३.६.३६ |
| मैसं ४.५.५ | सोमं पावयति। २.२.१७ तं. अंशुभिः पावयति प्राणा वा अंशवः प्राणैर् एव एनं सोमं पावयति। |
| तां १६.१-६ | सोमविकारा गवादयः– एकाहाः सौमिकाः पदार्थाः। ५.४.२६ ज्योतिः गौः आयुः अभिजित् विश्वजित् सर्वजित्। |
| ऐब्रा ३.५ | सोमस्याग्ने वीहि इति अनुवषट् करोति तेन धिष्ण्यान् प्रीणाति। ३.२.३८ |
| तैसं १.६.४ | सोमस्याहं उज्जितिम् अनूज्जेषम्। ९.१.४;१०.४.२४ सोमस्योज्जितिम् अनूज्जेषम्। |
| तैब्रा ३.२.३.११ | सोमः खलु वै सांनाय्यं, य एवं विद्वान् सांनाय्यं पिबति अपुनर्भक्ष्योऽस्य सोमपीथो भवति। |
| तैसं ६.३.४ | सोमान्ते प्रस्तरं प्रहरन्ति स्वरुं वा अयज्ञवैशसाय। ११.३.११ संस्थिते सोमे अग्नौ। |
| तैसं १.८.८ | सोमापौष्णं चरुं निर्वपति, ऐन्द्रापौष्णं चरुं, पौष्णं चरुं, श्यामो दक्षिणा। ३.३.३९-४६ न्यामा. |

मैसं २.१.४ सोमापौष्णं चरुं निर्वपेत् नेमिपिष्टं पशुकामः । ३.३.४२

मैसं २.६.४ सोमापौष्णः एकादशकपालः ऐन्द्रापौष्णश्चरुः श्यावो दक्षिणा ।३.३.३९;११.४.२

तैसं ६.२.११ सोमाभिषवाधारकत्वेन फलकद्वयम् आम्नातम् । ३.३.२४ तं. हनू वा एते यज्ञस्य यद् अधिषवणे फलके ।

तैसं १.८.५ सोमाय पितृमते षट्कपालं, पितृभ्यो बर्हिषद्भ्यो धानाः, पितृभ्यो अग्नि-ष्वात्तेभ्यो अभिवान्यायै दुग्धे मन्थम् । १०.२.७४ धानानां पाकः कार्यः ।

तैसं. १.८.१० सोमाय वनस्पतये श्यामाकं चरुम् । ५.२.१३; ११.३.१५; ११.४.४३

तैसं ३.३.४ सोमाय अदाभ्यं गृहीत्वा । २.३.२० न्यामा. यो अदाभ्यं गृहीत्वा सोमाय जुहोति ।

मैसं २.१.५ सोमारौद्रं घृते चरुं निर्वपेत् शुक्लानां व्रीहीणां ब्रह्मवर्चसकामः । ४.२.२५;
तैसं २.२.१० १०.७.६४

मैसं २.१.६ सोमारौद्रं चरुं निर्वपेत् कृष्णानां व्रीहीणाम् अभिचरन् । १०.४.१; १०.७.६४

तैसं २.२.१० ‘सोमारौद्रं चरुं निर्वपति’ इति परिश्रिते याजयेत् । २.३.१५

आप ५.३.२१ सोमेन यक्ष्यमाणो अग्नीन् आदधीत, न ऋतुं प्रतीक्षेत न नक्षत्रम् । ५.४.६
काठकसं ८.१ भर ५.२.६ यः सोमयागं क्रतुम् आदधीत, स न प्रतीक्षेत नक्षत्रं नापि ऋतुं तावत्येव आदधीत । ( कर्तुं ? )

तैसं ३.२.२ सोमेन यजेत । १.४.१; २.२.१,१५,१८; ६.२.३१; ७.४.१०; ८.१.१६

शांब्रा १६.१० सोमेनेष्ट्वा सौत्रामण्या यजेत । १.४.१; २.२.१,१७,१८; ६.२.३१; ७.४.१०; ८.१.१६

तैसं २.३.२ सोमेन्द्रं श्यामाकं चरुं निर्वपेत् सोमवामी । ३.४.३२

मैसं ४.६.८ सोमे वैश्वदेवो ग्रहयज्ञः । तत्र सर्वदेवता इज्यन्ते । तन्मध्ये चाङ्गदेवता अपि तस्मात् ताः परिगृहीताः । १२.१.२६ यद् वैश्वदेवः प्रातःसवने वा एतद् वैश्वदेवे देवतास्तर्पयन्ति ।

तैसं १.५.१ सोऽरोदीत् यद् अरोदीत् तद् रुद्रस्य रुद्रत्वम् । १.२.१,९,१०

तैसं ६.४.५ सौत्यम् अहः । १२.२.२५

तैसं ६.४.५ सौत्ये च अहनि सोमयागः । ४.४.३९ अष्टौ कृत्वोऽग्रेऽभिषुणोति अष्टाक्षरा गायत्री, गायत्रं प्रातःसवनं, प्रातःसवनम् एव तेन आप्नोति, एकादशकृत्वो द्वितीयम् एकादशाक्षरा त्रिष्टुप्, त्रैष्टुभं माध्यन्दिनं सवनं, माध्यन्दिनं सवनम् एव तेन आप्नोति, द्वादशकृत्वस्तृतीयं द्वादशाक्षरा जगती, जागतं तृतीयसवनं, तृतीयसवनम् एव तेन आप्नोति ।

तैब्रा १.८.५.६;१.८.६.१ सौत्रामण्याम् आश्विनसारस्वतसुत्रामदेवताकेषु पशुषु ऐन्द्रवारुणसावित्राः पुरोडाशाः पशुप्रकरणात् न उत्कृष्यन्ते, संस्कारपक्षे उत्कृष्येरन् । १०.१.२२

तैब्रा १.८.६.३ सौत्रामण्यां वडवा दक्षिणा । ११.३.१

ऋ १.११०.४ सौधन्वता ऋभवः सूरचक्षसः । ६.१.५० विष्ट्वी शमी तरणित्वेन बाधतो मर्तासः सन्तो अमृतत्वमानशुः । सौधन्वना ऋभवः सूरचक्षसः संवत्सरे समपृच्यन्त धीतिभिः ॥

| | |
|---|---|
| तां ८.८.५ | सौभरम् उक्थ्यानां ब्रह्मसाम । २.२.२८ तं. साकम् अश्वेन उक्थ्यानि प्रणयन्ति। साकम् अश्वम् एह्यू षु ब्रवाणि । |
| साम ७०६; ऋ५.१६.१६ | सौभरं साम– एह्यू षु ब्रवाणि ते अग्न इत्थेतरा गिरः । एभिर् वर्धास इन्दुभिः ॥ |
| साम ७०६; ऋ६.१६.१७ | यत्र क्व च मे मनो दक्षं दधस उत्तरम् । तत्र योनिं कृणवसे ॥ |
| साम ७०७; ऋ६.१६.१८ | नहि ते पूर्तमक्षिपद् भुवन्नेमानां पते । अथा दुवो वनवसे ॥ |
| काठकसं ८.१ | सौम्यम् अहः तस्य पर्वकालः अमावास्या पौर्णमासी वा । य इष्ट्या पशुना सोमेन वा यजेत् । ४.३.३९ |
| तैसं २.१.२ | सौम्यं बभ्रुम् आलभेत । ११.२.३४ |
| मैसं १.१०.१ | सौम्यश्चरुः । २.१.११ ( वैश्वदेवपर्वणि ) |
| तैब्रा २.३.६.४ | सौम्यस्य अध्वरस्य यज्ञक्रतोः सप्तदश ऋत्विजः । ३.७.३२,३३ सप्तहोत्राः प्राचीर् वषट् कुर्वन्ति । |
| तैसं ६.३.६ | सौम्यादयः पशवः तेषां तथा गवादयः सोमाः, काम्येष्टयः– अत्र सम्बन्धाभावात् न क्रमः । ५.२.३२,३३ |
| मैसं ३.९.१ | सौम्यो वै ब्राह्मणो देवतया । ५.४.१०,२५ |
| तैसं २.३.२ | सौर्यम् घृते चरुं निर्वपेद् ब्रह्मवर्चसकामः । २.३.१२; ४.३.१९,२७; ६.३.८; ७.४.१,४,९; ८.१.२,२६; ८.४.९; ९.३.१; १०.१.३४,४५,५७; १०.४.२५; ११.१.६,१८,३९ |
| मैसं २.२.२ | सौर्यं घृते चरुं निर्वपेत् शुक्लानां व्रीहीणां ब्रह्मवर्चसकामः । १०.७.६४ सौर्यं चरुं निर्वपेद् आग्नेयवत् । ८.१.२८ आग्नेयस्य विध्यन्ते नियम्येत एकार्थ्यात् । |
| तैसं ३.९.१० | सौवर्णराजताभ्यां महिमानौ ग्रहौ गृह्णाति । १०.४.३ महिमानौ गृह्णाति राजतेन पूर्वं सौवर्णेन उत्तरम् । |
| सत्या १३.१.१० | सौविष्टकृतानि अवदाय न तावत्येव होतव्यम् ऐडानि अवदेयानि । ५.२.११। दैवतानि अवदाय न तावत्येव होतव्यं सौविष्टकृतानि अवदेयानि । सूत्रम् – दैवतैर् वा ऐककर्म्यात् । दैवतानां सौविष्टकृतानाम् ऐडानां च ऐककर्म्यात् एवं सह कृतं भवति । |
| कात्या ५.५.२१ | हविर्भिश्चरिते उभौ स्विष्टकृत्प्रभृति । ५.२.११ |
| आप ७.२२.६ | सौविष्टकृतानि (त्र्यङ्गानि) दक्षिणदोः सव्या श्रोणिः गुदतृतीयम् । १०.७.१०,११ |
| शत १२.४.१.७ | स्कन्ने जुहोति । ६.२.२९; ६.४.१०; ६.५.४५; ४६,४७ |
| तैब्रा २.२.६.३ | स्तुवम् अनुशंसति । ९.२.४० |
| तैसं ३.२.७ | स्तुतस्य स्तुतमसि । २.१.२९ |
| तैसं ६.३.१ | स्तुते उत्तिष्ठन् आह अग्नीद् । अग्नीत् विहर बर्हिस्तृणीहि पुरोडाशम् अलंकुरु |
| भर १३.१७.१३ | १.२.३३; २.१.३२; ३.२.१०; ५.१.२५ |
| तैब्रा २.८.४.२ | स्तुहि शूरं वज्रिणम् अप्रतीतम् अभिमातिहनम् पुरुहूतमिन्द्रम् । य एक इत् शतपतिर् जनेषु तस्मा इन्द्राय हविरा जुहोत । १०.१.२१ |

नाश्वं विक्रीणते इति स्मर्यते । १०.३.४७ गाव्यः अश्वा उपकारकतराः यदि एषां दानप्रतिग्रहविक्रया न प्रतिषिध्येरन् । न केसरिणो ददाति – दानं प्रतिषिद्धम्, उभयतोदतः प्रतिगृह्णाति-प्रतिग्रहः प्रतिषिद्धः, नाश्वं विक्रीणीत, विक्रयश्च प्रतिषिद्धः । तस्माद् द्वादशशतं गवां स्यात् । सूत्रम्-भागित्वाद् वा गवां स्यात् ।

नास्ति दृष्टे अनुपपन्नं नाम । १.१.५

निकायिनां च पूर्वस्य उत्तरेषु प्रवृत्तिः स्यात् । ८.१.१९ निकायः सङ्घात औत्तराधर्येण अवस्थितः उच्यते, यथा साहस्राः साद्यस्क्राः । तेषां पूर्वस्य केचिद् धर्मा आम्नाताः, उत्तरे तु अधर्मकाः, तेषां पूर्वस्य उत्तरे प्रवृत्तिः । निगदा वर्तन्ते यजूंषि । यजूंषि वा तद्रूपत्वात् । निगदो मन्त्रान्तरं स्यात् । निगदेन उच्चैर् अनूच्यते ।

नित्या प्रकृतिः, आगन्तुका विकृतिः । कामे वा निमित्ते उत्पन्ने आगच्छति । वैकृतं तन्त्रं प्रकृतौ प्रसज्यते । १२.२.३३,३४

निमित्तार्था हि कालश्रुतयः । ६.२.२७ उदिते जुहोति, अनुदिते जुहोति, प्रातर् जुहोति, सायं जुहोति, प्रदोषे जुहोति, इत्यादयः कालश्रुतयः । आगते आगते काले प्रयोगः कर्तव्यः ।

निर्गुणं च पुनःश्रवणम् इतरेषाम् अश्रुतानां परिसङ्ख्यापकम् भवति । १०.७.४ सूत्रम्-निर्देशात् परिसङ्ख्या स्यात् ।

नीलोत्पलवनेष्वद्य चरन्तश्चारुसंरवाः । नीलकौशेयसंवीताः प्रनृत्यन्तीव कादम्बाः । १.१.२४,२६ रामाकौशेयसंवीताः प्रनृत्यन्तीव कादम्बाः । ( पाठान्तरम् )

नैमित्तिकं तु उत्तरात्वं आनन्तर्यात् प्रतीयेत । ९.२.२३/२ त्रैशोकसामसु पूर्वा अतिजगती, उत्तरे द्वे बृहत्यौ उत्तरार्चिकग्रन्थात् ।

नोच्चैर् गेयम्, बलवद् गेयम् । रथन्तरे रथन्तरधर्माः ( बृहद् उच्चैर गेयम् ) रथन्तरे प्रस्तूयमाने संमीलयेत्, स्वर्दशं प्रतिवीक्षेत् । बृहद् उच्चैर् गेयम्, बृहति गीयमाने समुद्रं मनसा ध्यायेत् । ९.२.४७,४८ ताण्ड्य-ब्राह्मणे ( ७.७.९,१० ) यद् रथन्तरं प्रस्तौति, समुद्रम् अन्तर्धाय उद्गायेत्, वाग् वै समुद्रः । बलवद् गेयम् ।

पञ्चभिश्च प्रयाजैः, त्रिभिर् अनुयाजैः पुरोडाशस्य कार्यम् । १२.१.२ पश्वर्थानुष्ठितप्रयाजादिभिरेव पशुपुरोडाशस्यापि उपकारसिद्धेर् न पृथग् अनुष्ठानम् ।

आप १०.४.६ पत्नीसंयाजान्ता दीक्षणीये संतिष्ठते ।

पदानां साकाङ्क्षत्वाद् विधेः स्तुतेश्च एकवाक्यत्वम् । १.२.७ वायव्यं श्वेतम् आलभेत, वायुर् हि क्षेपिष्ठा देवता । सूत्रम्– विधिना तु एकवाक्यत्वात् स्तुत्यर्थेन विधिना स्युः ।

पम्पा कुलाय प्रतिमाश्च वृक्षाः । ( एतद् ब्राह्मणानि एव पञ्चहवींषि यद् ब्राह्मणानीतराणि ) । ७.१.१७ एवम् अर्थवादस्य अतिदेशो भवति ।

पयोविकारः पशुः । ८.२.१८ सूत्रम् – द्रवत्वं च अविशिष्टं, पशुरपि द्रवति, पयोऽपि ।

परमाणुषु व्यभिचारः। ३.१.१२ तं. येषां तावत् "कार्यद्रव्याणि एव घटादीनि पच्यन्ते यथा पैठराणां" तन्मतेन अभेद एव पैलुकानाम् अपि तु परमाणुषु व्यभिचारो घटादीनि द्रव्यान्तरेण...

पररथैर् वा एते स्वर्गं लोकम् यन्ति ये अनाहिताग्नयः सत्रम् आसते। ६.६.२८ (सारस्वते)

परिक्रयाविभागाद् वा समस्तस्य विकारः स्यात्। १०.६.६७ सूत्रम् – कृत्स्नं हि क्रतुम् अङ्गीकृत्य दक्षिणाः विधीयन्ते।

परिधयो वेदिश्च अङ्गप्रधानार्थत्वात् नारिष्ठहोमाङ्गम्। ८.४.२० नारिष्ठहोमानां जुहोति चोदनात्वात्।

परिभोजनीयनाम बर्हिस्ततो विधृती पवित्रे च कर्तव्याः। ३.८.३२ विधृतिपवित्रयोः परिभोजनीयबर्हिषां कर्तव्यताधिकरणम्।

परिसङ्ख्यायास्त्रयो दोषाः–स्वार्थप्रहाणं, परार्थकल्पना, प्राप्तबाधश्च।

पर्यनुयोगो नाम भवति – यः स्वपक्षं साधयति, विपक्षस्य च प्रतीपम् आचरति। ३.१.१२

पशुपतिर् अनेन उपचरितः पुत्रोऽनेन लब्धः। ९.१.८

तैब्रा ३.२.८.८ पशोर् वा प्रतिमा पुरोडाशः।

पश्वङ्गं रशना चेत् यद्येकस्मिन् बहून् युञ्जीत। प्रतिपशुः रशना कार्या यूपे चेद् द्वैरशन्यं स्यात्। ४.४.२४

सत्या १.१.१९ पारिप्लवार्था दाशतय्यः।

पार्वणस्थालीपाके अष्टकाचरौ आग्रहायणे इतिकर्तव्यताविधिः, सौर्यश्चरुः (सौर्यचरुविध्यन्तः)। ७.४.२

पावकः शीतः। ४.३.१०

पित्रादिकं न देयम्। (विश्वजिति सर्वस्वदाने)। ६.७.२ सूत्रम् – यस्य वा प्रभुः स्याद् इतरस्य अशक्यत्वात्। स्वशब्द आत्मीयधनवाचकः। पित्रादीनाम् अशक्यं स्वत्वं निवर्तयितुम्।

तैब्रा ३.९.१०.१ पुरस्तात् स्वाहाकारा वै अन्ये देवाः, उपरिष्टात् स्वाहाकारा अन्ये।

पूर्वावसायिनश्च बलीयांसो जघनावसायिभ्यः। १२.२.३३

पूर्वावसायिनो जघन्यावसायिनं नोन्नीयन्ते। १२.३.२४

पृष्ठाकोटेन=प्रत्येकद्रव्यनिरीक्षणे पुनःपुनः पृष्ट्वा कुटिलीक्रियते। २.१.३२ तं.

पृष्ठस्तुतौ हि साम विनियुज्यते, तत् च सामपदानां स्तुतिं निर्वर्तयन्तां संश्लेषादिभिर् विशेषैः स्तुतिपदाक्षराणि उपदर्शयत् स्तुतिम् अभिनिर्वर्तयति। १०.६.३

पेषणं, संयवनं (प्रणीताभिः संयौति), संवपनं (वेदेन) सन्तापनम् अधः श्रपणात्, उपधानं (कपालेषु) प्रथनम्, अङ्गारैर् अभ्यूहनं, दर्भपिन्जुलैर् अवज्वलनं, (कपालेभ्यो व्युद्धृत्य) आसादनम्, एते पुरोडाशधर्माश्चरौ न विद्यन्ते।

प्रकरणान्तरे श्रूयमाणं वाक्यं यस्य प्रकरणे तस्य वाचकं भवति। २.३.२४

प्राकाशौ अध्वर्यवे ददाति। आभरणविशेषौ सौवर्णदर्पणौ।

प्रकृतात् कर्मणो यस्मात् तत्समानेषु कर्मसु । धर्मप्रदेशो येन स्यात् सोऽतिदेश इति स्थितिः ॥ ७.१.१ न्यामा.

प्रकृतिर् नित्या, विकृतिर् आगन्तुका । १२.२.३४ कामे वा निमित्ते वा उत्पन्ने आगच्छति । १२.२.३३ अनित्यत्वाद् विकृतेः ।

प्रगीतं मन्त्रवाक्यम् । ९.२.१ गीतिषु समाख्या साम ।

प्रगीतेषु मन्त्रवाक्येषु 'स्तौति' शब्दः, अप्रगीतेषु 'शंसति' शब्दः । ७.२.१७

प्रजापतिः स्याद् वायुर् आकाशः, आदित्यो वा स आत्मनो वपाम् उदक्खिदत् इति वृष्टिं वायुं रश्मिं वा ताम् अग्नौ प्रागृह्णात् इति वैद्युते आर्बीसे लौकिके वा, ततो अज इति अन्नं, बीजं विरुद् वा, तम् आलभ्य-तम् उपयुज्य प्रजाः पशून् प्राप्नोति इति गौणाः शब्दाः । १.२.१०

तैसं ५.५.८ प्रजापतेर् हृदयेन अपि पक्षं प्रति उपतिष्ठते ।

मैसं ३.३.५ प्रतिपशु रशना कार्या । ४.४.२४ – पश्वङ्गं रशना चेत् ...

प्रतिप्रस्थातुश्च वपाश्रपणादपि अभक्षो वा कर्मभेदात् तस्याः (वपायाः) सर्वप्रदानत्वात् । १०.७.२२,२३

प्रत्यक्षम् अनिमित्तं विद्यमानोपलम्भनत्वात् । १.१.४ सूत्रम् – सत्संप्रयोगे पुरुषस्य इन्द्रियाणां बुद्धिजन्यं तत्प्रत्यक्षम् ।

प्रत्यक्षं च अनुमानाद् बलीयः । १२.१.७ तं.

प्रत्यङ्मुखा उदङ्मुखा वा पृष्ठत आदित्यं प्राग्रुपदार्थान् प्रतितिष्ठन्ति मानवाः । ३.४.१० तं.

प्रथमं हि स्नेहनं करोति, न द्वितीयम् । ४.१.३८ ( तत् स्नेहनं करोति, कतमत् तत्-यत् प्रथमम् ।)

प्रभिन्नकमलोदरे मधूनि मधुकरः पिबति । १.१.५ न्यामा.

प्रयतं पुरुषं त्मना । १.३.३०-३५ न्यामा. मन्त्रेषु आङि आदेर् आत्मनः । आत्मन् शब्दस्य आदेः लोपः छन्दसि ।

प्रयाजाः – समिधस्तनूनपातं इडो, बर्हिः स्वाहाकारं च – तत्र देवतोपदेशाभावात् मान्त्रवर्णिकी देवता भवेयुः । ९.२.५८-६० न्यामा.

प्रयोगश्च उत्पत्तिं न त्यजति । ८.३.४ तं.

प्रयोगाच्च स्मृतिर् बलीयसी । प्रयोगाद् हि स्मृतिर् अनुमीयेत । २.३.३

प्ररोचनया तु प्रवर्तते, द्वेषात् निवर्तते इति तयोः रुचिद्वेषयोर् विवक्षा । १.२.१० प्रवहणसोमसूक्तम् (अष्टौ मन्त्राः) ।

ऐब्रा ३.१,२ 'अस्मे ज्योतिः विक्रयिणि तमः' इत्याह, ज्योतिरेव यजमाने दधाति ।

तैसं ६.१.१० तमसा सोमविक्रयिणम् अर्पयति ।

प्रवीणः–बहुषु वीणावादस्य गुणेषु सत्सु निपुणे एव प्रवीणशब्दो वर्तमानो रूढः इत्युच्यते । ६.७.२२

प्रशंसा सोमशब्दः । सोमो वै वाजिनं, सुरा सोम इत्यत्र । ८.२.६

प्रसिद्धश्च स्थाल्यां चरुशब्दः आ हिमवतः आ च कुमारीभ्यः । १०.१.३५ सूत्रम् – चरुर् हविर्विकारः स्यात् इज्यासंयोगात् । सूत्रम् – प्रसिद्धि-

ग्रहणत्वाच्च । ओदनो वा अन्नसंयोगात्–चरुः ओदनः । १०.१.३४-३६ न्यामा.

प्रसीदति देवता–प्रसन्नोऽस्य पशुपतिः, पुत्रोऽस्य जातः ।

प्रसन्नोऽस्य वैश्रवणः धनम् अनेन लब्धम् । ९.१.७

प्राक्सोमाद् एकपुरोडाशा पौर्णमासी । ( ऊर्ध्वं सोमाद् द्विपुरोडाशा ) । १०.८.६२ सूत्रम् – द्विपुरोडाशा स्याद् अन्तरार्थत्वात् । नैकपुरोडाशा । उपांशुयाजम् अन्तरा यजति ( पौर्णमास्याम् ) ।

प्राजहित इति गार्हपत्यस्य पूर्वाचार्यसंज्ञा । १२.१.१३ सूत्रम् – श्रपणं चाग्निहोत्रस्य शालामुखीयेन स्यात्, प्राजहितस्य विद्यमानत्वात् । कौण्डपायिनाम् अयने अग्निहोत्रस्य हविषां श्रपणं प्राजहिते इति नामधेये अग्नौ प्राप्तम् । १२.१.१४

प्राजापत्यं चरुं चरोः घृते श्रपणं, तस्मात् चरुः आज्यविध्यन्तः । ८.१.३७-३९

प्राणैर् वा एष व्यृद्ध्यते यः सर्वं ददाति । पशुभिर् वा एष व्यृद्ध्यते यः सर्वं ददाति ।

कात्या ९.६.१८,१९,२० प्रातःसवने च उच्चैः कर्माणि कार्याणि, मध्यमेन माध्यन्दिने, उत्तमेन तृतीये सवने ।

प्राप्ते कर्मणि नानेको विधातुं शक्यते गुणः ।
अप्राप्ते तु विधीयन्ते बहवोऽप्येकयत्नतः ॥ २.२.६.१ तं: १.४.२ न्यामा.

प्रोक्षणीभिर् उद्वेजिता स्मः । १.४.११ अत्र 'प्रोक्षणी' इति जातिशब्दः ।

फलवत्सन्निधौ अफलं तदङ्गम् । ४.४.१९

फलं तु तत्प्रधानायाम् । ४.३.३

बल्वजान् शिखण्डकान् कुरु, बल्वजा एव शिखण्डकाकारेण ईप्सिताः । २.१.१२ द्वितीया विभक्तौ लौकिकप्रयोगं दर्शयितुम् । यथा च तण्डुलान् ओदनं पचति । एवं वेदेऽपि 'सक्तून् जुहोति' कर्मगुणभूतम् अत्र दृश्यते ।

बहवः सत्रं यजेरन् । १०.६.४५,४६ सूत्रम् – वचनात् तु बहूनां स्यात् । सत्रम् आसते – उपयन्ति – उपेयुः ।

बहिष्पवमानम् । १.४.३ पवमानार्थं मन्त्रकत्वाद् बहिः सम्बधाच्च ।

बाधो नाम यदेव इदम् इति निश्चितं विज्ञानं कारणान्तरेण मिथ्येति कल्प्यते । १०.१.१

बाहीकवत् । ७.१.८ सूत्रम् – यदि वा अपि अभिधानवत् सामान्यात् सर्वधर्मः स्यात् बाहीकवत् । बहुशो बाहीकानां यवान्नप्रियता, बाहीको अतिथिर् आगतः, यवान्नम् अस्य प्रक्रियताम् ( देशनिमित्तेन यवान्नप्रियता ) ।

बाहीकोऽतिथिर् आगतः, यवान्नम् अस्मै प्रक्रियताम् इत्युक्ते यो यो बाहीकस्तस्य तस्य यवान्नं क्रियेत । एवं पदार्थधर्मा कार्याः । ७.१.८,९

ब्रह्मचर्यं च अहिंसा च अपरिग्रहं च सत्यं च यत्नेन रक्षेत्, श्रुतौ च शाक्ये च । १.३.५-७ न्यामा.

'ब्रह्मचारिणा मांसं न भक्षयितव्यम्' इत्युक्ते दर्विगतम् अपि लेपं वर्जयितव्यम् । ९.४.३९ सूत्रम्–व्रतधर्माच्च लेपवत् ।

मैसं ३.२.३ ब्रह्म यजुः ।

ब्राह्मणस्य सोमपूर्वत्वम् । ५.४.१० सूत्रम् – उत्कर्षाद् ब्राह्मणस्य सोमः स्यात् आग्नेयो ब्राह्मणः सोमेन इष्ट्वा अग्नीषोमीयो भवति ।

ब्राह्मणा वा राजन्यचमसान् अनुसर्पेयुः । ३.५.५३ सूत्रम् – ब्राह्मणा वा तुल्यशब्दत्वात् ।

भविष्यन् वा एषोऽर्थो ( कर्मफलार्थो ) न ज्ञानकालेऽस्ति । १.१.४

असद्वीर्या हि पत्नयः । असदा वा एताः परगृह्याणाम् ऐश्वर्यम् अवरुन्धते । ६.१.१६

भाक्तो हि अन्यासु अष्टमीषु एकाष्टकाशब्दः, एषा हि मुख्या या माघ्यां वृत्ता। ६.५.३४

भावशब्दाः – यजति, ददाति, जुहोत्यादयः, अपूर्वस्य चोदकाः । भावाः कर्मशब्दाः अपूर्वं चोदयन्ति । २.१.१ धातवः

भूतभव्यसमुच्चारणे भूतं द्रव्यं, भव्यं भविष्यत्फलार्थं च । १०.८.१६

भूतं भव्याय उपदिश्यते । ३ ४.४०; ४.१.१८; ४.२.१०; ६.१.१; ९.१.४

भूमिरथिको भूमौ रथम् आलिख्य शिक्षां करोति, सङ्ग्रामे प्राशुभावो भविता इति । यथा च छात्रः शुक्लेष्टीः प्रयुङ्क्ते, प्रयोगे प्राशुकर्मा भवितास्मि इति एवम् अर्धपञ्चमान् मासान् अध्ययनं प्रयुज्यते । ९.२.१३,१२

भृत्या आनमति–दक्षिणया परिक्रीय वशं करोति । १०.२.२२-२८ न्यामा.

मन्त्रकार्याणां तर्हि संहृत्य कारित्वाद् एकविनाशे समस्तावृत्तिः स्यात् । नैतदस्ति तद् विनाशानुरोधेन एव अनुष्ठानम् ।

मन्त्रभूतानि एतानि आर्षाणि – ( 'कयानश्चित्र आ भुवत्' आदीनि ) नित्यानि सामानि ऋक्षु अधिष्ठितानि । ९.२.१

मन्त्रवर्णाद् हि कल्प्या प्रयोगवचनेन श्रुतिः । यथा 'छागस्य वपाया मेदसोऽनुब्रूहि' इति छागः कल्प्यते । ६.८.३२

मन्त्राणां संनिपातित्वाद् एकार्थानां विकल्पः स्यात् । १२.३.२९ पूषा वां विभजतु, भगो वां विभजतु, अर्यमा वां विभजतु त्रयाणाम् एकार्थानां मन्त्राणां विकल्पः स्यात् ।

मस्तु शूद्रस्य । ६.१.३१ ( मण्डं दधिभवं मस्तु । वस्त्रनिःसृतदधिजलम् एके–अमरः ) मस्त्वेव शूद्रस्य । व्रते अपि शूद्रस्य नियम्यते–मस्तु एव शूद्रस्य व्रतम् ।

महाभारत ३.११३.११७ महाजनो येन गतः स पन्थाः ।

मानाधीना मेयसिद्धिः मानसिद्धिश्च लक्षणात् । १.१.२ न्यामा.

कात्यास्मृ ९.१० माषकोद्रवगौरादि वर्जयेत् । गौरादि-सरसू-मोहरी ।

'मासम् अग्निहोत्रं जुहोति' इत्येवमादीनि प्राग् अग्नीषोमीयात् । एषु उपांशुत्वसम्बधो भवति – यथा पूर्वपक्षः । यथा तर्हि सिद्धान्तः न सम्बधः । ९.१.२५

मांसेन शूद्रीभवति । १.२.३ तं. इत्येवम् आदीनि कर्मनिन्दावचनानि,

अथवा 'वर्णत्रयकर्महानिप्रतिपादनार्थानि' इति वक्तव्यम् । किं कृत्वा शूद्रीभवति इत्यपि नोक्तम् ।

मासो देवता संवत्सरो देवता। १०.४.२१ न्यामा.

मिश्रस्य अन्येन हविषा समवद्यति । ३.५.३ सूत्रम् – एकस्मिन् समवत्त-शब्दात् । आज्यावदाने क्रियमाणे समवद्यति ।

मुख्यं वाऽपूर्वचोदनात् लोकवत् । १०.५.१,६०
सूत्रम्–मुख्येन वा नियम्येत ।

मृश्यामहे हविषो विशेषणम् । ६.४.२३ आर्तिहविर् इति ।

मौद्गं चरुं निर्वपेत् श्रियै श्रीकामः । ९.३.३

य ऋगक्षरेभ्योऽधिको, न च तैः सवर्णः स स्तोभो नाम । ९.२.३९
(अधिकत्वे सति ऋत्विग्लक्षणवर्णः स्तोभः)

य एव लौकिकाः शब्दास्त एव वैदिकास्त एव तेषाम् अर्थाः । १.३.३०

यच्च नाम ज्ञानं तन्न विपर्यैति । १.१.५

यच् च्छृप्यमाणायाः अपरम् उद्वासितायाः । ४.१.३९ ( यत्तावत शृप्यमाणायाः )

यजतिचोदनाद् अहीनत्वं स्वामिनां च अस्थितपरिमाणत्वात् । ८.२.२४,२५
अपि वा यजतिश्रुतेः अहीनप्रवृत्तिः स्यात् प्रकृत्या तुल्यशब्दत्वात् ।

'यजति ददाति जुहोति' इति आख्यातशब्दाः, सर्वेषु उत्सर्गः समानः । २.२.१; ४.२.२७ जुहोतौ आसेचनम् अधिकम् ।

मैसं ३.९.८ यजमानम् वा एतद् वृणीते, स वृतो वषट्करोति ।

यजूंषि एव निगदाः । २.१.४ सूत्रम् – यजूंषि वा तद्रूपत्वात् । सूत्रम् – वचनाद् धर्मविशेषः । उच्चैर् निगदेन । ३.२.४१

यज्ञविषयब्राह्मणगतस्तोमविधिवाक्यशेषे यथा माषकं तत्प्रामाण्यात् करिष्यते, न तद् निरपेक्षशुद्धब्राह्मणप्रामाण्यात् । १.३.११ तं. ( कृताक्षणसूत्रप्रणयन-प्रक्रमे कात्यायनः । )

यत् तावत् च्छृप्यमाणायास्तद् अग्नेर् अर्चींषि दहन्ति, यद् उद्वासितायास्तद् अग्न्यवयवाः उष्मावयवाश्च नाशयन्ति । ४.१.३९ ( वपायाः )

यत्रार्चिकानि निवर्तन्ते स्तोभा गेह्याश्च ( स्वराश्च ) अनुयन्ति । ९.२.३६
सूत्रम्– अन्वयम् ( अनुगमनं चापि दर्शयति )

यथा गावो गोपायन्ति । १.४.५ न्यामा. ( अथैष गवाऽभिचरन् )

यथाऽन्यप्राये लिखितं दृष्ट्वा भवेद् अन्यः इति मतिः । २.१.१२; २.३.१६; ६.८.२२; ९.४.५०

तैसं १.५.७ यथा वै पुरुषोऽश्वो गौर् जीर्यति एवम् अग्निर् आहितो जीर्यति, संवत्सरस्य पुरस्ताद् अग्निं पावमानीभिर् उपतिष्ठते, पुनर् नवम् एव एनम् अजरं करोति ।

यथाशरीरमात्रेऽपि मातृगर्भात्मवर्तिनाम् । सुखादीनां व्यवस्थैवं सर्वत्रैषा भविष्यति ॥ २.१.५ तं.

तैसं १.८.४ यद् अनीकवतो बर्हिस्तत् सान्तपनीयस्याः । ११.२.१७ साकमेधेषु । अनीकवद् अग्नित्वाद् अनेकवतो बर्हिर् ऊहितेन ।

यद् अनुदिते होमकर्म तद् उदिते व्युद्धम् । २.४.८ (यदुदिते होमकर्म तत् कालान्तरे व्युद्धम् - विगतम् ऋद्धं - ऋद्धिरहितम् ।

यदाऽनशनं तदा मेधार्हः, मेधश्च यज्ञो, यज्ञश्च त्यागः, त्यागं कर्तुं अर्हस्तपसा क्रियते । ३.८.१० यदि पञ्चपञ्चाशतस्त्रिवृतः न संवत्सराः, अथ यदि संवत्सराः तर्हि न त्रिवृतः । ६.७.३७ सूत्रम्-विप्रतिषेधात्तु गुण्यन्यतरः स्याद् इति लावुकायनः ।

यदि पशुर् उखायां पचेत् । ८.२.१४ सूत्रम्–तस्य च पात्रदर्शनात् । तस्य च सांनाय्यस्य यत् पात्रम् उखा सा पशौ दृश्यते ।

यदि पुरा दिदीक्षाणाः स्युर् यदि वा गृहपतिर् गृहपतेर् वाऽनुसत्रिणः, इति ते एनं बृहत्सामानं (अतिरात्रम्) उपेयुः, उपेतं ह्येषां रथन्तरम् । पूर्वदीक्षायां प्रयुक्तत्वात् ।

यदि प्रतिहोमः क्रियेत, सायम् अग्निहोत्राद् आरभ्य अतिपन्नानि तेनैव आनुपूर्व्याणि होतव्यानि । ६.५.४३ सूत्रम्-प्रतिहोमश्चेत् सायम् अग्निहोत्र-प्रभृति निहूयेरन् ।

'यदि बिभीयाद् अभि मा उदेष्यति' इति महारात्रे हवींषि निर्वपेत् फलीकृतैस्तण्डुलैर् उपासीत, अर्धम् हविर् आतञ्चनार्थं निदध्याद्, अर्धं न, यदि अभ्युदियाद् अनेन आतञ्चं प्रचरेद्, यदि उ न प्रातर् एतेन ब्राह्मणं भोजयेत् ।

यदेव किञ्चन अनूचानोऽभ्यूहति आर्षं तद् भवति । १.३.७ तं. (आर्षेयाणि नित्यानि)

यदेवादः पौर्णमासं हविस्तत् तर्हि निर्वपेत् । ५.४.११,१७,१८,१९ (आग्नेयो वै ब्राह्मणः स सोमेन ... ।)

यद् बृहद् गायत्रीषु क्रियते ऋक्त्वेन अन्तर् रुजते, न च तस्यां सम्भवति । ९.२.२२ (स्थाल्यां सक्तु अवधीयते .. )

यद् यस्य उपकरोति तत् तस्य शेषभूतम् । ३.७.२

यद् योन्यां गायति तद् उत्तरयोर् गायति । ९.२.३२,३४ सामवेदस्य पूर्वार्चिकोत्तरार्चिकौ द्वौ भागौ, पूर्वार्चिके एकर्चानि सूक्तानि योनिभूतानि, तैः सह उत्तरार्चिके एकर्चाधिकानि सूक्तानि पठितानि । यः कोऽपि स्वरक्रमः पूर्वार्चिके पठिताया योनेर् भवति तेनैव स्वरक्रमेण योनिभूत-संयुक्तानाम् उत्तरार्चिकपठितानाम् ऋचां भवति ।

यश्च व्याकुरुते वाचं यश्च मीमांसतेऽध्वरम् । तावुभौ पुण्यकर्माणौ पङ्क्ति-पावनपावनौ ॥ १.३.२७-२९ तं. (मनुना पङ्क्तिपावनमध्ये वेदादेवो-पलभ्योक्तम्)

यस्तु मेध्यं द्रव्यं शुचौ देशे प्रयतः प्राङ्मुखो दक्षिणेन हस्तेन समाहितमनाः मन्त्रवत् नियमवद् देवतायै उत्सृजति तस्य फलं भवति । ७.४.१

यस्मिन् प्रीतिः पुरुषस्य तस्य लिप्सा अर्थलक्षणा। ४.१.२; ८.१.२४

यस्मिंस्तु साधनोपकारे कार्ये तस्मिन्नेव उपकारेऽन्यत् साधनं विधीयते तत्र विकल्पः। ३.१.१२

यस्य च दुष्टं करणम्। १.१.५

यस्य लिङ्गम् अर्थसंयोगाद् अभिधानवद् इति न्यायेन। १०.६.१६

यस्य हि शब्दो हविषा तादर्थ्येन सम्बध्यते सा देवता। ९.२.६०; १०.४.२३ यस्य यां प्रति तादर्थ्यं सा तस्य देवता।

यस्यैव पशोर् गुदो न संस्क्रियते, तस्यैव तेन संस्कारेण हानिः स्यात्, तस्मात् समुच्चयः। सूत्रम्–संस्कारं च तत्प्रधानत्वात्।

'यः कामयेत राष्ट्रम् अस्य प्रजायै स्याद्' इति तस्य औपासने प्रतिहतम् अन्या जुहुयात्। १२.२.४ (राजसूये प्रवृत्ते कर्मणि एतद् वचनम्। तस्मिंश्च काले विहारोऽस्ति। यदि च त्रेता एव लौकिकानां कार्यं साधयेत् सत्यां तस्यां न औपासनः कार्याभावात् स्यात्।)

यः कृष्णमृत्तिकाप्रायः (देशः) स आह्नीनैबुकादीनाम्। १.३.२२ कृष्णमृत्तिकाप्रायेऽपि अन्येन कुर्वन्ति, तथाऽन्यलिङ्गेऽपि कुर्वन्ति तस्मात् न देशतो व्यवस्था।

यः शब्दस्य श्रवणाद् एव विनियोगः प्रतीयते स श्रौतः। ३.३.१४

यः शास्त्रस्थानां स शब्दार्थः। १.३.९

यादृशी यस्य योनिस्ततोऽन्यादृशो यो वै विच्छन्दसी साम ऊहति स ऋचं शृणाति, साम वा विलिशति, सामं संशृणाति, ऋचं वा विलिशति। ७.२.१८

सत्या १.१.२७ टीका — यान् प्राचीनम् आग्रयणाद् ग्रहान् गृह्णीयात् तान् उपांशु, यान् ऊर्ध्वान् तान् उपब्दिमतः।

यावज्जीवम् अभ्यसेत्। २.४.२ सूत्रम्–यावज्जीविकोऽभ्यासः।

यावता कालेन आजानि (अजमांसानि) पच्यन्ते तावता आविकानि (अविमांसानि) विलीयन्ते। ११.४.३७ सूत्रम्–पङ्क्तिवैषम्यात् कुम्भादीनां भेदः स्यात्।

यावद् यावद् विवादाय मुक्तकं दीयते मनः। अनवस्थादिदोषेण तावद् तावद् विहन्यते॥ १.३.३० तं.

यावद् वचनं वाचनिकं, तत्र न न्यायः क्रमते। ५.४.१

यावन्ति पदानि एकं प्रयोजनम् अभिनिर्वर्तयन्ति तावन्ति एकं वाक्यम्। २.२.२७

तां १५.७.२ — या वै चतुर्विंशति गायत्र्यस्ता अष्टादश अनुष्टुभः।

याऽसावन्या गौर् आदीयते सा यजमानस्य व्रतधुङ् न भवति। ११.३.४२ (ऋतपेये)

या सुब्रह्मण्या सा तु आवर्तेत। ११.३.२२ सूत्रम्–तत्कालात्तु आवर्तेत प्रयोगतो विशेषसंयोगात् (द्वादशाहे उपसत्काले)।

या हि वन्ध्या स्मरेद् इदं मे दौहित्रकृतम् इति न मे दुहिताऽस्तीति मत्वा न जातुचिद् असौ प्रतीयात् । १.३.१

ये वेदम् अधीयते ते एव विदुः इदं कर्म कृत्वा इदं फलम् अमुत्र प्राप्नोति । ६.१.५ सूत्रम् – कर्तुर् वा श्रुतिसंयोगात् विधिः कार्त्स्न्येन गम्यते ।

तैब्रा १६.९.६ ये वै यज्वानस्ते पितरो बर्हिषदः ये वा अयज्वानो गृहमेधिनस्ते पितरः अग्निष्वात्ताः ।

येषु सप्तदश सामिधेन्यः ( यथा वैश्यस्तोमे सप्तदशानुब्रूयाद् वैश्यस्य ) योनिशस्याः । ७.२.१७ सूत्रम् – योनिश्चासौ शस्याश्च ताः ऋचः तुल्यवद् इतराभिः ( उत्तरार्चिके पठिताभिः ) विधीयन्ते ।

यो वै ( सत्रे ) बहूनां यजमानानां गृहपतिः, स सत्रस्य प्रत्येता, स हि भूयिष्ठाम् ऋद्धिम् आप्नोति । १०.६.५०; १२.४.३०

यो ह्यमेध्यं द्रव्यं उच्छिष्टः शयानो वा प्रौढपादो वा, वामेन हस्तेन पादेन वा यथा कथंचिद् देवताया उत्सृजति तस्य फलं न भवति इति शिष्टाः स्मरन्ति । ७.४.१

यो ह्यर्थः सामान्यस्य विशेषाणां च आश्रयः सा व्यक्तिः । १.३.३३

यौ द्वौ कौरवौ स एको बाहिकः । ८.३.२२ ये हि द्वे गायत्र्यौ सा एका जगती इति परिमाणदर्शनार्थम् ।

रजनी मे कण्डूयति । ८.४.२८ ( रागाभावे वक्ति ) ।

रशना हि या यावतीं द्रढिम्नो मात्रां यूपस्य संजनयति द्रढिम्ना च प्रयोजनं यूपस्य । ४.४.२३ सूत्रम् – यूपाङ्गं वा ।

वाराह ३.३.४.५० राजसूयेन इष्ट्वा सौत्रामण्या यजेत ।

लभ्यमाने फले दृष्टे न अदृष्टपरिकल्पना । १.१.१ तं. १.१.५

लिङ्गप्रकरणप्राप्तमन्त्रानुवादेन इष्टकोपधानम् । १.४.२८ न्यामा.

लिङ्गादिरहिते वाक्ये तदाविधिरुपेयते । न कथञ्चिद् यदा प्राप्तिलेशो न गम्यते ॥ १.४.९ तं.

लुप्यते वा एतत् षष्ठं कपालं यत् पञ्चकपालं निर्वपन्ति । ८.५.१,२ सूत्रम् – आनुपूर्व्यवताम् एकदेशग्रहणेषु आगमवद् अन्त्यलोपः स्यात् ।

लोकवद् विभागः स्यात् (श्रुतितो वा) । १०.६.८ प्रायणीयोदयनीययोर् ऐकादशिन्यपशूनां विभागः स्यात् ।

लोकावगतसामर्थ्यः शब्दो वेदेऽपि बोधकः । १.१.२ न्यामा.

लोकेऽर्थलक्षणः संव्यवहारो वेदे शब्दलक्षणः । ३.१.१६; ६.८.२७

लोके येषु अर्थेषु प्रसिद्धानि पदानि सति सम्भवे तदर्थानि एव सूत्रेषु इति अवगन्तव्यम् ।

लोहितं निरस्यति, शकृत् संप्रविध्यति । ४.१.२७ पशौ अनालम्भात् लोहितशकृतोर् अकर्मत्वम् ।

लौकिकाग्नौ उपनयनहोमाः स्थपतीष्टिस्तथैव च । १.१.१ न्यामा.

वनस्पतयः सत्रम् आसत । १.१.३२; ६.१.४

वयं वाग्यमेन तायमानं यज्ञं विद्मः । ९.१.२४

वरणम् ऋत्विजाम् आनमनार्थं (परिक्रयार्थं सत्रे न स्यात् स्वकर्मत्वात्)। १०.२.३४ सूत्रम्

वरणं सत्रे ऋतुयाज्यावरणहिरण्यदानयोर् अनुष्ठानम् अदृष्टार्थाय स्यात्। १०.२.६२

वर्धमानकं गायति। ७.२.१४,१६ सूत्रम् – तस्मिन् संज्ञाविशेषा स्युः विकार-पृथक्त्वात्। वर्धमानकगीतिः, आसारितकगीतिः।

वलीपलितस्य नाशकानि रसायनानि। ६.७.२३

वषट्कारः प्रदानार्थः, याज्या देवतोपलक्षणार्था। १२.३.३५ सूत्रम् –वषट्कारे नानार्थत्वात् समुच्चयः।

वसन्ते प्रातर् आग्नेयीं कृष्णग्रीवाम् आलभते, ग्रीष्मे माध्यन्दिने सिंहीं-संहिताम् ऐन्द्रीं शरदि अपराह्णे, श्वेतां बार्हस्पत्याम्।

वाजपेये ऋतुपशवः प्राजापत्यपशवश्च तत्र अध्रिगुप्रैषस्य आवृत्तिः स्यात्। ११.४.५४

वाजिनो यजति – दार्शपौर्णमासिको विध्यन्तः। ८.२.१-९ सूत्रम् – वाजिन-यागसुराग्रहयोर् ऐष्टिकधर्मत्वम्।

वासिष्ठं गृह्यसूत्रं बह्वृचैर् परिगृहीतम्। १.३.१५ तं.

विकल्पश्च अन्याय्यः। १०.८.४ अन्याय्यत्वाद् विकल्पस्य।

विग्रहो हविषां भागः ऐश्वर्यं च प्रसन्नता। फलप्रदानमित्येतत् पञ्चकं विग्रहा-दिकम्। ९.१.६

देवता भुङ्क्ते। अर्थानाम् इष्टे देवता। प्रसीदति देवता। देवता यष्टुः फलं ददाति।

विद्याम् अधीयीत। ६.१.३१ सूत्रम्– ब्राह्मणस्य तु सोमविद्याप्रजम् ऋणवाक्य-संयोगात्।

विद्यायां धर्मशास्त्रम्। २.४.१४

विधिरेव भवेद् एवम् अपूर्वोऽर्थो विधास्यते। सर्वानुवादो व्यर्थो हि स्तुतेश्च विधिकल्पना॥ ३.४.९ तं.

विधौ हि न परः शब्दार्थः। १.२.२४

विध्यनुवादयोर् विधिर् ज्यायान्। १०.६.३

विप्रतिपत्तौ हविषा नियम्येत (विध्यन्तः)। ८.१.३२,३३ तेन च कर्म-संयोगात्। तेन–हविषा

विशदसिद्धे ओदने चरुशब्दम् उपचरन्ति। ३.३.३७

विशये प्रायदर्शनात्। २.३.१६ अत्र भगवान् आचार्य उपवर्ष इदम् उदाहृत्य

विश्वजिति द्वादशशतात् न्यूनस्य नाधिकारः। ६.७.१९

विश्वजिति सर्वस्वदाने न पित्रादयो देयाः अप्रभुत्वात्। ६.७.२

विषं भक्षयितव्यं न कदाचित्। १०.८.७; १०.८.२ न विषं भक्षयितव्यत्।

विहार इति गार्हपत्यादिर् अग्निक्षेत्रा उच्यते। स लौकिकानि पार्वणस्थाली-पाकीदीनि साधयति। १२.२.१ सूत्रम् – विहारो लौकिकानाम् अर्थं साधयेत्।

विहाराराममण्डलकरणवैराग्यध्यानाभ्यासाहिंसासत्यवचनदमदानदयादि तद् बुद्धादिभाषितं प्रमाणेन अविरुद्धम् इति चेत्। न। शास्त्रपरिमाणत्वात्। १.३.७ तं.

वैद्युतम् अग्निं होमार्थं कुर्यात्। १२·४·२० सूत्रम् – विकारो वा तदुक्तहेतुः। यावद् उक्तं स्यात् 'वैद्युतम् अग्निं होमार्थं कुर्यात्' इति तावद् एव इदम्। वैश्वकर्मण एककपालो भवति।

वैसर्जनहोमीयं वासो अध्वर्युर् गृह्णाति। १·३·४ न्यामा. अध्वर्युर् यजमानं तत्पत्नीं तदमात्यान् तन्नेदिष्ठसम्बधिनश्च अहतवाससा प्रच्छाद्य प्रचरण्यां च चतुर्गृहीतं गृहीत्वा प्रच्छादनार्थस्य वाससो अन्तम् उपनियम्य वाससो दशायां हिरण्यं निबध्य आज्ये अवधाय स्रुग्दण्डं वाससो अन्ते उपनियम्य शालामुखीये जुहोति, एतद् वासोऽध्वर्युर् गृह्णाति।

व्यापन्नम्– दूषितं – भोज्यं केशकीटावपन्नं, अन्येन वा उपघातेन उपहतम्। ६·५·४८

व्यापन्नम् अप्सु प्रहरति इति श्रूयते। ६·५·४८ सूत्रम् – व्यापन्नस्य अप्सु गतौ, यद् अभोज्यम् आर्याणां तत्प्रतीयेत।

व्यापृता जुहूर् भवति। ४·१·३३ न वा प्राजापत्यानां पशूनां वपाम् अभिघार्याः प्रयाजशेषाभावात् अपात्रत्वात्। –अपात्रत्वं तु एकदेशत्वात् – प्रयाजार्थस्य हि गृहीतस्य आज्यस्य एकदेशशेषः।

व्यृद्धं उभयथा सम्भवति – यद् अनुदिते होमकर्म तद् उदिते व्यृद्धं, यद् उदिते तत् कालान्तरे व्यृद्धम्। २·४·८

शकृत् संप्रविध्यति लोहितम् अपास्यति। ४·१·२७ लोहितशकृतोर् अकर्मत्वम् लोपः।

शङ्खलिखितोक्तं गृह्यसूत्रं वाजसनेयिभिर् एव परिगृहीतम्। १·३·१५ तं. गृह्यग्रन्थानां च प्रातिशाख्यलक्षणवत् प्रतिचरणं पाठव्यवस्था उपलभ्यते।

शतकृष्णलचरुः उपांशुयाजविध्यन्तो भवेत् हिरण्यम् आज्यधर्मस्तेजस्वित्वात्।

शतम् अतिरथं शोभनाम् अशोभनां च कन्यां प्रति–स्मार्तं च श्रुतिविरुद्धं विक्रयं नानुमन्यते। ६·१·१५ सूत्रम् – क्रयस्य धर्ममात्रत्वम्। क्रयो हि उच्चनीचपण्यपणो भवति। नियतं तु इदं दानम्।

शतं भक्षयन्ति। एकस्यां राजन्यजातौ दशसङ्ख्या विधीयते। तेन दशराजन्याः अनुप्रसर्पयेयुः। ३·५·५३ सूत्रम् – ब्राह्मणा वा तुल्यशब्दत्वात्। तस्माद् ब्राह्मणानाम् एव चमसानुसर्पणम्।

शब्दभेदाद् अर्थभेदो न्याय्यः। ६·८·३६

शब्दवती देवता। यस्य हि शब्दो हविषा तादर्थ्येन सम्बध्यते सा देवता। ८·३·२; १०·४·२३

शष्पतोक्मसिंहलोमसु पैरोडाशिको विध्यन्तः। ८·२·८,९ सूत्रम् – पशुपुरोडाशिकस्य च लिङ्गदर्शनम्।

शेष्पैरेव दीक्षणीयाम् आप्नोति, तोक्मभिः प्रायणीयां, सिंहलोमभिर् आतिथ्याम् । सोमविकारत्वे प्रत्यक्षम् एव दीक्षणीयादीनि प्राप्नुयुः । प्राप्तानां शष्पादिभिस्तदासिवचनं न उपपद्यते । ८·२·८ व्यपदेशश्च तद्वत् ।

शामित्रे अग्नौ किम् एतस्य पशुपुरोडाशस्य श्रपणं कर्तव्यम् उत शालामुखीये । १२·१·१२ सूत्रम् – शामित्रे च पशुपुरोडाशो न स्यात् ।

शास्त्राणि चेत् प्रमाणं स्युः गतास्ते परमां गतिम् । ईजाना बहुभिर् यज्ञैर् ब्राह्मणा वेदपारगाः ॥ १०·८·४२

शिनीनां दार्विहोमिको ब्राह्मणः । अम्बष्ठानां दार्विहोमिको ब्राह्मणः । ८·४·२ सूत्रम् – स ( दर्विहोमः ) लौकिकानां स्यात्, कर्तुस्तदाख्यत्वात् ।

शिरो वा एतद् यज्ञस्य यद् दीक्षणीया । ४·४·४१

शीतकर्मा हि इन्द्रः । ९·२·३४,३७ ऐन्द्राम् अवभृथसाम गायति ।

शुचिदेवत्ये आग्नेयस्य विधयन्तः । ८·३·२ अग्नये पवमानाय पुरोडाशम् अष्टाकपालं निर्वपेत्, अग्नये पावकाय, अग्नये शुचये ।

शेषं स्विष्टकृते समवद्यति । २·३·२६ न्यामा. शेषस्य गुणभूतत्वात् ऐड-प्राशित्रसौविष्टकृतादीनि शेषकार्याणि ।

शेषकार्याणि -- ऐडप्राशित्रसौविष्टकृतानि । ३·४·४२ सूत्रम् – शेषाद् इडाम् अवद्यति, शेषात् स्विष्टकृतं यजति ।

शृते दधनि च प्रणीताधर्माः कर्तव्याः । ९.२.४४,४५

श्रपणं च अग्निहोत्रस्य शालामुखीये न स्यात् प्राजहितस्य विद्यमानत्वात् । १२.१.१३

श्रुतिलक्षणाविषये च श्रुतिर् न्यायसी । १.४.२

श्रुतिश्च स्मृतितो बलीयसी । १२.३.३९

श्रुत्या च ये यस्य प्रकरणे श्रूयन्ते ते तस्यैव धर्माः भवितुम् अर्हन्ति । ७.१.१ तस्माद् यथाप्रकरणं व्यवस्था धर्माणाम् ।

षडहं तृतीयं जागतम् अहर् अन्तरीयमाणं दर्शयन् दशरात्रस्य प्रवृत्तिं दर्शयति । यत् प्रथमं द्विरात्रस्य तद् द्वितीयम् द्वादशाहस्य गायत्रम् अहः । यद् द्वितीयं द्विरात्रस्य तत् तृतीयं त्रैष्टुभं जगती अन्तर् गच्छति । षडहं तृतीयं जागतम् अहर् अन्तरीयमाणं दर्शयन् दशरात्रस्य ।

षड्भिर् अनुष्टुब्भिश्च चतस्रो जगत्यः । ९.२.२८/३ चतुर्विंशतिर्जगत्य-स्तृतीयसवनम् एका ककुप् । तत्र श्यावाश्वान्धीगवयोः द्वयोः साम्नोः प्रगाथेन षड् अनुष्टुभः ताश्चतस्रो जगत्यः ।

षड्विधः कर्मभेदः – शब्दान्तरम् अभ्यासः सङ्ख्या गुणः प्रक्रिया नामधेयं च । २.१.१

षष्ठीसमासात् कर्मधारयो बलीयान् । ३.३.२४-३१ न्यामा. निषादस्थपतिः ।

षोडशीसंस्थे प्रातर् अग्निहोत्रप्रभृतीनि अतिपन्नानीति प्रातर् अग्निहोत्रात् समारभ्याणि । ६.५.४४ सूत्रम् – प्रापस्तु षोडशिनि ।

स आहवनीयः स्याद् आहुतिसंयोगात् । १२.४.२६ सूत्रम् – यश्चासौ वैषहरिको अग्निः स आहवनीयः स्यात् । एत्य हूयते अस्मिन् स आहवनीय इति निर्वचनम् ।

स एव तित्तिरिः । १६.२.५६ पञ्चशारदीये उदाहरणम् ।

सकृद् उपस्तृणाति, सकृद् अवद्यति, द्विर् अभिधारयति, चतुर्वत्तस्य आप्त्यै । १०.८.३१ सूत्रम् – ताभ्यां वा सह स्विष्टकृतः सकृत्त्वे द्विर् अभिघारणेन तदासिवचनात् – चतुरवत्तस्य आप्तिवचनात् ।

सकृद् एव दक्षिणा दीयेत । १०.६.६७ सूत्रम् – परिक्रयाविभागाद् वा समस्तस्य विकारः स्यात् । कृत्स्नं हि क्रतुम् अङ्गीकृत्य दक्षिणा विधीयन्ते । दक्षिणा – परिक्रयस्य अविभागात् समस्ता सकृद् देया ।

सकृद् हिङ्कृत्य बहिष्पवमानेन स्तुवीरन् ।

सकृद् हुतान् चमसान् असिद्रोणकलशाद् गृह्णाति । सशेषश्चमसो लक्षणम् अन्यस्य उन्नीयमानस्य न च चमसस्थो होतुम् उन्नेतव्यः । प्रेषितो वा । येपु यक्ष्यमाणा देवता प्रति आश्रावित इति । ३.२.३२ (अभ्युन्नीतसोमे)

सङ्क्रमयज्ञेन यजेत अन्नाद्यकामः । २.३,५,११ आवृत्तियज्ञ इति आवृत्ति-सम्बधोऽनुष्ठातव्यः । न यागान्तरम् ।

सत्रम् – अहीनश्च द्वादशाहस्तस्य उभयथा प्रवृत्तिः ऐककर्म्यत्वात् । ४.२.२४ अपि वा यजतिश्रुतेर् अहीनभूतप्रवृत्तिः स्यात् प्रकृत्या तुल्यशब्दत्वात् । ४.२.२५

सत्रम् ब्राह्मणानाम् एव स्यात् । ६.६.१८ सूत्रम् – ब्राह्मणानाम् एव इतरयोर् राजन्यवैश्ययोर् आर्त्विज्याभावात्, राजन्यवैश्ययोर् आर्त्विज्यं प्रतिषिद्धम् स्वयमेव आर्त्विज्यत्वेन विना सत्रे विगुणम् ।

सत्रस्य प्रत्येता । १.१.१ न्यामा. यो वै बहूनां यजमानानां गृहपतिः ।

सत्रे ब्रह्मचरिणोऽपि मधु भक्षयेयुः । १०.६.३३,३२ मधु न प्राश्नीयुः, दीक्षिताः ब्रह्मचारित्वात्, प्राश्येत वा यज्ञार्थत्वात् ।

सप्तमे अहनि ऐन्द्रवायवाग्रता, शुक्राग्रो विषुवान्, आग्रयणाग्रः प्रथमः स्वरसामा, ततो विश्वजित् इति त्र्यनीका समाप्ता । १०.५.८५

सप्तदशोपसत्को वाजपेयः । १.४.७ दीक्षाणाम् उपसदां च दर्शनं नावकल्पेत–सप्तदशदीक्षो वाजपेयः, सप्तदशोपसत्कः वाजपेयः । तुल्यत्वात् क्रिययोः वाजपेयस्य दर्शपूर्णमासयोश्च क्रिया तुल्या ।

समर्थतराणि समानविभक्तीनि दुर्बलो विभक्तिः । १०.३.४२

समस्ता दक्षिणाः विक्रियेरन् । १०.६.६७ परिक्रयस्य अविभागात् क्रतुं कर्तुम् अङ्गीकृतत्वात्, समस्ता दक्षिणा सकृद् दीयेत ।

समाने अहनि आरप्स्यमानो – द्वितीयादिषु अपि प्रयोगेषु समाने (तस्मिन्नेव) एव अहनि दर्शपूर्णमासौ आरप्स्यमानो असौ कृतारम्भणीयाको जातः । ९.१.३५ सूत्रम् – सकृद् वा आरम्भसंयोगात् एकः पुनरारम्भो यावज्जीव-प्रयोगात् ।

समासस्य हि उपसर्जनं विशेषणैर् न सम्बध्यते । ३.४.१३ तं.

समिध्यमानवतीं समिद्धवतीं च अन्तरेण धाय्याः स्युः द्यावापृथिव्योरन्तराले समर्हणात् । ५.३.४

सम्बधिपदव्यवाये हि सम्बधाद् एव पूर्वसंस्कारो न अपैति, यत्रापि अपरेण साकाङ्क्षेण व्यवायः, तत्रापि अस्ति सम्बधः ।

सम्भरणम् एव कुर्वती स्थाली पङ्क्तिं करोति । ६.१.१७

सम्यग् इध्यते अग्निर् याभिर् ऋग्भिः ताः सामिधेन्यः । ३.१.२३ न्यामा.

संस्कारस्य तदर्थत्वात् । विद्यायां पुरुषश्रुतिः । ६.१.३५ विद्यार्जनार्थम् उपाध्यायस्य समीपम् उपनीयते ।

स यदि स्विष्टकृतो होमार्थं विपद्येत, न पुनर्ग्रहणं प्रयोजयेत् – शेषभाजां स्यात् लोपः ।

सर्वपृष्ठे सर्वेषां साम्नां प्रदेशः । ऊर्ध्वं माध्यन्दिनपवमानात् प्राग् मैत्रावरुणसाम्नः, इदम् अन्तरालं सर्वपृष्ठदेशः ।

सर्वमभ्यर्हितं द्रव्यं प्रच्छादनमपेक्षते । यत्र क्वचन न प्राप्ते समित् तत्र नियम्यते ॥ ३.४.९. तं.

द्राह्यायण २.२.५६ सर्वमहः प्रातराहुतेः स्थानं, रात्रिः सायम् आहुतेः ।

सर्वं बलवतः पथ्यम् । १.३.७ तं.

सर्वं भक्षयन्तो, अश्वमेधे न समापयेयुः । भक्षाणां बहुत्वात्, सर्वं न भक्षयेयुः ।

तां ७.८.५ सर्वाणि पृष्ठानि इन्द्रस्य निष्कैवल्यानि ।

सर्वार्थं वा आधानस्य स्वकालत्वात् । ३.६.१५

सर्वे छन्दोगाः सह सुब्रह्मण्या भक्षयेयुः । ३.५.२६ सूत्रम् – सर्वे तु वेदसंयोगात् कारणात् एकदेशं स्यात् ।

सवनीयो निरूढः पशुः सौम्यादयश्च एतेषु पशुषु अग्नीषोमीयविध्यन्तः । ८.१.१२

सवितृश्विपूषशब्दानां विकृतिषु नास्ति व्यूहः । ९.१.३६,३७ न्यामा.

सव्याः (रुक्षा) एतर्हि वपा यर्हि अनभिघृताः, ब्रह्म वै ब्रह्मसाम यद् ब्रह्मसाम्नि आलभते, तेन असव्याः, तेन अभिघृताः । ४.१.३६; ११.२.५३ स (गृहपतिः) सत्रस्य प्रत्येता । १२.४.४१ यो वै सत्रे बहूनां यजमानानां गृहपतिः ...

स स्वर्गः स्यात् सर्वान् प्रति अविशिष्टत्वात् । ४.३.१५ सूत्रम्–अनादिष्टफले कर्मणि स्वर्गफलम् इति प्रत्ययो लोके ।

सहस्रम् ऋतपेये सोमचमसः (त्रैधातव्यायास) । १०.२.२२

सहस्रं प्राक् चतूरात्रेभ्यः । ६.७.१७ तं.

सहान्यपदार्थो बहुव्रीहिसमासः पूषा प्रपिष्टभागोऽदन्तको हि ।

साधारणं भवेत् तन्त्रं परार्थे त्वप्रयोजकः ।
एवमेव प्रसङ्गः स्यात् विद्यमाने स्वके विधौ ॥ ११.१.१

सांनाय्ययाजिन एव उपवेषः । तत्र हि सांनाय्यार्था शाखा ताम् अनु निष्पद्यते उपवेषः ।

सामान्यवचनेन विशेषापेक्षिणोपक्रमो वाक्यस्य विशेषे निगमनम् । १.४.२९

सामान्ये हि दृष्टोऽर्थो भवति न विशेषे । २.१.४६

साम्ना अपि हि दृष्टम् अदृष्टं वा क्रियते, तस्मात् साम अपि धर्मप्रयोजने समर्थम्। ९.२.५०

सांविज्ञायिकः स्विष्टकृत्। न व्युत्पाद्यते, अग्निरेव स्विष्टकृत् शब्देन उच्यते। १०.४.३४

'सा हि तस्य ज्ञातुम् इच्छा' इति जिज्ञासा। १.१.२
अथातो धर्मजिज्ञासा।

सिद्धसाध्यस्वभावाभ्यां धात्वर्थौ द्विविधस्तयोः। अन्योत्पादानुकूलात्मा भावना साध्यरूपिणी॥ २.१.१ न्यामा.

सीसेन क्लीबात् क्रय्या (सुरा)। ८.२.४ (सौत्रामण्याम्)

सोमपो न द्वितीयां जायाम् अभ्यपूयते। ६.८.१८ सूत्रम् – सोमपानात्तु प्रापणं द्वितीयस्य तस्माद् उपयच्छेत।

सोमपूर्वत्वम् एव ब्राह्मणस्य। ५.४.१०.१२ सूत्रम् – उत्कर्षात् ब्राह्मणस्य सोमः।

सोमविक्रयी तु अन्यः ऋत्विग्भ्यः। ३.७.३१ सूत्रम् – विक्रयी तु अन्यः कर्मणो अविदितत्वात्।

तैब्रा ३.२.३.११ सोमः खलु वै सान्नाय्यम्, य एवं विद्वान् सान्नाय्यम् पिबति अपुनर्भक्ष्योऽस्य सोमपीथो भवति।

सोमो वै वाजिनम्। ८.२.१,६ सूत्रम् – प्रशंसा सोमशब्दः।

स्तूयते स विधीयते। १.४.२९ न्यामा. विधिना त्वेकवाक्यत्वात् स्तुत्यर्थेन विधीनां स्युः।

स्तौति स्तुवते प्रगीतमन्त्रवाक्येषु। शंसति अप्रगीतेषु। ७.२.१७

स्थपतिर् निषादः स्यात्। ६.१.५१ निषाद एव स्थपतिः इति समानाधिकरण एव समासः।

स्थपतेर् इष्टिर् लौकिकाग्नौ स्यात्। ६.८.१२ सूत्रम्– स्थपतीष्टिवत् लौकिके।

'स्थाल्यां सक्तु अवधीयते' इत्याहुः यद् बृहद् गायत्रीषु क्रियते ऋक्तेन अन्तर् रुजतीति। न च अस्यां सम्भवति इति विच्छन्दस्कासु दोषं ब्रुवन् समानच्छन्दस्कासु गानं दर्शयति। समानच्छन्दस्कासु एव तिसृषु ऋक्षु गानाधिकरणम्।

स्थाल्या यागः कर्तव्यः। १०.१.३७ चरुणा। प्रसिद्धश्च स्थाल्यां चरुशब्दः आ हिमवत आ च कुमारीभ्यः।

स्रुग्दण्डे समिधम् उपगृह्य अनुद्रवति। ३.४.९+६ तं.

स्रुवेणाथ स्वधितिना हस्तेनावद्यत्यमी।
आज्ये मांसे पुरोडाशे सङ्कीर्णा वाऽवस्थिताः॥

स्वस्थानविवृद्धिर् वा अह्नाम् अप्रत्यक्षसङ्ख्यत्वात्। १०.५.८४ तस्माद् आग्रयणाग्रान् कृत्वा ऐन्द्रवायवाग्राः कर्तव्याः।

स्वरसामैककपालामिक्षम्। ७.१.२३; ७.३.२६ सूत्रम् – स्वरसामैककपालामिक्षं च लिङ्गदर्शनात्।

स्वरुर् यूपाङ्गम् इति चेत् एकस्यैव समञ्जनम् ।
बहूनां एकयूपत्वे सर्वेषां समञ्जनम् ॥

स्वामिकर्म – परिक्रयः ( दक्षिणा ) कर्मणस्तदर्थत्वात् । ३.८.१

स्विष्टकृद् आवापिकोऽनुयाजे स्यात्, प्रयोजनवद् अङ्गानाम् अर्थसंयोगात्, न बाह्यः । १०.४.३८ सूत्रम् – आवापिक – आवापस्थानम् – आज्यभागस्विष्टकृतौ अन्तरा आवापस्थानम् ।

हरति – प्रहरति = यजति । ३.२.१३ सूक्तवाकेन प्रस्तरं प्रहरति ।

हविर्धाने मानसं ग्रहं गृह्णाति पृथिव्या पात्रेण समुद्रं रसाम् अनुपयामगृहीतोऽसि प्रजापतये त्वा जुष्टं गृह्णामि ।

पा ७.१.३९ काशिका हविर्धाने यत् सुन्वन्ति तत् सामिधेनीर् अन्वाह ।

हविषा वा नियम्येत तद् विकारत्वात् । ८.२.५ दार्शपौर्णमासिकहविषो विकारः सुरा, वाजिनम् ।

हविःसामान्यं च देवतासामान्याद् बलीयः। ८.१.३२; ८.२.१३ विप्रतिपत्तौ हविषा नियम्येत, कर्मणस्तदुपाख्यत्वात् ।

हिरण्ये औषधस्य विध्यन्तः । ८.१.३७ सूत्रम् –

हृदयम् उपांशुयाजः । २.२.१२ तं. शिरो वा एतद् यज्ञस्य यद् आग्नेयः, हृदयम् उपांशुयाजः ।

हेतुर् निर्वचनं निन्दा प्रशंसा संशयो विधिः । परक्रिया पुराकल्पो व्यवधारणकल्पना ॥ उपमानं दशैते तु विधयो ब्राह्मणस्य तु । एतत् स्यात् सर्ववेदेषु नियतं विधिलक्षणम् ॥ २.१.३३ सूत्रम् – शेषे ब्राह्मणशब्दः । तत्र शेषशब्दप्रयोगात् लक्षणानभिधानाच्च सूत्रव्याख्यानम् एव इदम् ।

होता यक्षत् समिधा अग्निम् इडस्पदे । अश्विनेन्द्रसरस्वतीम् । सौत्रामण्याम् ।

होममाश्रितो गुणः फलं साधयति । २.२.२६



# शुद्धिपत्रम्

| पृष्ठे | पङ्क्तौ | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| १ | २६ | °गृह्वान् | °गृह्वान् |
| २ | ३८ | तत्रा | तैत्रा |
| ४ | १३ | अग्निरदं | अग्निरिदं |
| ४ | १८ | तत्रा | तैत्रा |
| ८ | ३७ | तसं | तैसं |
| ९ | ८ | तआ | तैआ |
| २० | २१ | ४.३.२ | ४.३.१ |
| २१ | १ | अमास्यायां | अमावास्यायां |
| २१ | २४ | अंगुरगुस्ते | अंगुरंगुस्ते |
| २२ | १ | एयः | एषः |
| ४० | १२ | इन्द्रमित्रावरुणपीतस्य | इन्द्रमरुत्पीतस्य |
| ५१ | ५ | उषपुटैर् | ऊषपुटैर् |
| ६१ | १८ | स्तोमो | स्तोभो |
| ६४ | २४ | ८.३ | ६.८ |
| ७१ | २४ | २.६.१० | २.५.१० |
| ७२ | ३७ | दिजोत्तमैः | द्विजोत्तमैः |
| ७३ | ३४ | १.४.११ | ८.१.६ |
| ७५ | १८ | चतुर्मिर् | चतुर्भिर् |
| ७७ | ३७ | जगतों | जगतीं |
| ७९ | २ | वे | वै |
| ८० | २९,३० | तण्डुलेर् | तण्डुलैर् |
| ८० | १७ | न | तेन |
| ८१ | ५ | प्रथोजको | प्रयोजको |
| ८३ | २९ | काठकसं ८.१ | द्र. तैसं २.२.५ |
| ८९ | ३३ | महाभरते | महाभारते |
| ९३ | १६ | हस्तो | हस्तौ |
| ९४ | ९ | मैत्रवरुणाय | मैत्रावरुणाय |
| ९५ | १० | दर्शपूर्णसयोर् | दर्शपूर्णमासयोर् |
| ९६ | १० | महाब्रतं | महाव्रतं |
| १०७ | ३७ | २.२.५ | २.५.५ |
| १४२ | ३३ | °रदण्डम् | स्रुग्दण्डम् |
| १४३ | ५ | समिता | संमिता |
| १४३ | १२ | मन्त्रेर् | मन्त्रैर् |
| १५४ | १९ | पयासा | पयसा |

| पृष्ठे | पङ्क्तौ | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| १५५ | ४ | त्रधा | त्रेधा |
| १७१ | ३८ | विघेयश्च | विधेयश्च |
| १७९ | २४ | तण्डूलीभवनम् | तण्डुलीभवनम् |
| २०८ | १३ | आध्युर्न्नीं | अध्यूर्न्नीं |
| २०९ | २१ | ह्मेता | होता |
| २०९ | २८ | उदगयन | उदगयन... |
| २१० | २६ | गोणशब्दः | गौणशब्दः |
| २१० | ३४ | अहिताग्निर् | आहिताग्निर् |
| २११ | २५ | इयुः | ईयुः |
| २१३ | २३ | प्रणीत याः | प्रणीतायाः |
| २१३ | ३८ | पिव्रति | पिबति |
| २१४ | ८ | दर्विहौमिको | दार्विहोमिको |
| २१४ | १६ | अर्थकल्पाना | अर्थकल्पना |
| २१४ | २९ | विहितेतिकर्तव्यताद्-काधर्मान् | विहितेतिकर्तव्य-ताकाद्धर्मान् |
| २१६ | २५ | ऊजेत्वा | ऊर्जे त्वा |
| २१७ | २९ | पुराकल्प्याः | पुराकल्पः |
| २१८ | ३४ | यत् | यः |
| २१८ | ३४ | अनुपैत्यैतां | अनुपपत्त्यैतां |
| २२८ | ११ | उपयुज्थ | उपयुज्य |
| २३४ | ११ | भूयिष्टाम् | भूयिष्ठाम् |
| २३४ | २४ | लिङ्गादिरहिते | लिङ्गादिरहिते |
| २३४ | २५ | १.४.९ तं. | ३.४.९+५ तं. |
| २३५ | ३० | संयोगातू | संयोगात् |
| २३५ | ३५ | भक्षयितव्यत् | भक्षयितव्यम् |
| २३५ | ३७ | पार्वणस्थालीपाकीदीनि | पार्वणस्थालीपाकादीनि |
| २३६ | ४ | आग्निं | अग्निं |
| २३६ | ५ | आग्निं | अग्निं |
| २३६ | २९ | °पण्यवणो | °पण्यपणो |
| २३८ | २ | वैषहरिको | वैहारिको |
| २३९ | १७ | बहूत्वात् | बहुत्वात् |
| २३९ | २५ | आलमते | आलभते |
| २४० | ३ | स्विक्रत् | स्विष्टकृत् |

# उक्तानुक्तचिन्ता

५ पृष्ठे ३६ पङ्क्तौ

अग्निहोत्रवेलायाम् आगन्तव्यम् । ११.३.४८ । इदमुद्धरणम् अनुपलब्धमूलम् । अतः परिशिष्टे अन्तर्भाव्यम् ।

६८ पृष्ठे १५ पङ्क्तौ

किकृति च । इत्यस्यानन्तरं ३.४.१३ तं. इति पठितव्यम् ।

८४ पृष्ठे २ पङ्क्तौ

याजयन्ति । इत्यस्यानन्तरं १०.२.२६ इति पठितव्यम् ।

८४ पृष्ठे ३ पङ्क्तौ

तस्माद् इत्यस्य पूर्वम् – आप १०.१४.३-७, मैसं ३.६.५ इति पठितव्यम् ।

९१ पृष्ठे २० पङ्क्तौ

पृष्ठानि । इत्यस्यानन्तरं ४.४.४० इति पठितव्यम् ।

२०७ पृष्ठे ३८ पङ्क्तौ

पराभवति ॥ इत्यस्यानन्तरं ५.४.२४ शाभा इति पठितव्यम् ।

